श्लोकरूपंमन्त्रमाह ॥ १२९ ॥ अग्निमन्त्रमाह ॥ वैश्वानरजातवेदइहावहलोहिताक्षसर्वकर्माणिसाधयस्वाहेति ॥ १३० ॥ १३१ ॥ ठद्वयंस्वाहा ॥ १३२ ॥ ङेन्ताश्चतुर्थ्यंताः ॥ १३३ ॥ जिह्वाबीजान्युद्धरति ॥ दीपिकेति ॥ दीपिकाऊ ॥ ॥ अनलोरः ॥ वायुर्यः ॥एतेषुस्थिताःसकाराद्याविलोमवर्णाः ॥ सषशवलरयेति ॥ सेंदवो

अग्निंप्रज्वलितंवंदेजातवेदंहुताशनम् ॥ सुवर्णवर्णममलंसमिद्धंविश्वतोमुखम् ॥१२९॥ अथाग्निमंत्रं विन्यस्येत्तद्विधानमुदीर्यते ॥ वैश्वानरांतेजातेतिवेदांतेस्यादिहावह ॥ ३० ॥ लोहिताक्षपदात्सर्वं कर्माण्यंतेतुसाधय ॥ वह्निप्रियांतोमंत्रोयंषड्विंशत्यक्षरान्वितः ॥ ३१॥ ऋषिश्छंदोदेवतास्यभृगुर्गायत्रपावकाः॥ रंबीजंठद्वयंशक्तिर्हवनेविनियोजनम् ॥३२॥ लिंगेपायौमूर्ध्निवक्त्रेनसिनेत्रेखिलांगके ॥ वह्नेर्जिह्वाः स्वबीजाढ्यान्यसेन्ङेन्तानमोन्विताः॥३३॥ हिरण्यागगनारक्ताकृष्णासुप्रभयान्विता ॥ बहुरूपातिरक्तेतिजिह्वाःसप्तसोमताः॥३४॥ दीपिकानलवायुस्थाःसाद्यावर्णाविलोमतः ॥ सेन्दवः सप्तजिह्वानांसप्तानांबीजतांगताः ॥ १३५ ॥

नुस्वाराद्याइमेसप्तहिरण्यादिजिह्वानांबीजानीत्यर्थः ॥ ततश्चस्रूंहिरण्यायैनमः ॥ ष्रूंगगनायै नमः ॥ श्रूं रक्तायैनमः ॥ व्रूंकृष्णायैनमः ॥ ल्रूंसुप्रभायैनमः ॥ र्रूंबहुरूपायैनमः ॥ य्रूंअतिरक्तायैनमः ॥ १३४॥ १३५ ॥

१ अग्नेःसप्तजिह्वानामानि । २ स्रूँष्रूँश्रूँव्रूँल्रूँर्रूँय्रूँअग्नेर्जिह्वाबीजानि ।

गीर्वाणादयोजिह्वाधिदेवाजिह्वास्थानेषुन्यस्याः ॥ सुरेभ्योनमः लिंगे इत्यादिप्रयोगः ॥ १३६ ॥ मस्तकंशिरोमंत्रः ॥१३७ १३८॥१३९॥१४०॥ तारेति ॥ प्रणवाग्नयेपदपूर्वाः ॥ङेनमोंताः॥ॐअग्नयेजातवेदसेनमोमूर्ध्नीत्यादि ॥ १४१॥

गीर्वाणपितृगंधर्वयक्षनागपिशाचकाः॥राक्षसाश्चेतिजिह्वानांदेवतास्तत्स्थलेन्यसेत्॥१३६॥न्यासे चैनेव्युत्क्रमःस्याद्बहुरूपातिरिक्तयोः॥नेत्रेतिरिक्तान्यस्तव्यासर्वांगेबहुरूपिका॥३७॥सहस्रार्चिषेहृदयंस्वस्तिपूर्णायमस्तकम्॥उत्तिष्ठपुरुषायेतिशिखामंत्रोयमीरितः॥३८॥धूमांतेव्यापिनेवर्मसप्तजिह्वायनेत्रकम्॥अस्त्रंधनुर्धरायेतिषडंगानिसमाचरेत्॥३९॥मूर्ध्निवामेंसकेपार्श्वेकटौलिंगकटौपुनः॥दक्षेपार्श्वेसकेन्यस्येन्मूर्तीरष्टौविभावसोः॥१४०॥ताराग्नयेपदाद्यास्ताश्चतुर्थीनमसान्विताः॥ जातवेदाः सप्तजिह्वोहव्यवाहनइत्यपि ॥४१॥ अश्वोदरजसंज्ञोन्यस्तथावैश्वानराह्वयः ॥ कौमारतेजाःस्याद्विश्वमुखोदेवमुखस्तथा ॥ ४२ ॥ ततोन्यसेन्निजेदेहेपीठंहाटकरेतसः ॥ वह्निमंडलपर्यंतंमंडूकादि यथोदितम् ॥ १४३ ॥

॥ १४२ ॥ हाटकरेतसोवह्नेः ॥ मंडलपर्यंतमेवंपीठदेवताः पूज्याः ॥ ततः पीताद्याः पीठशक्तयः ॥ १४३ ॥

---

१ जिह्वाधिदेवतानामानि । २ प्रयोगस्तुस्रूंष्रूंश्रूंव्रूंल्रूंर्रूंय्रूंम्रूंहिरण्यायैनमोलिंगेष्रूंगगनायैनमःपायावित्यादि ।३ धूमंव्यापिनेकवचायहुम् ।४ अग्नयेजातवेदसेमूर्ध्नि इत्यादि ।

॥ १४४ ॥ बीजमिति ॥ रंवह्न्यासनायनमः इतिपीठमंत्रः ॥ १४५ ॥ ध्यानमाह ॥ त्रिनेत्रमिति ॥ वरस्वास्तिका

पीताश्वेतारुणाकृष्णाधूम्रातीव्रास्फुलिंगिनी॥रुचिराज्वालिनीचेतिकृशानोःपीठशक्तयः॥१४४॥
बीजंवह्न्यासनायेतिहृदंतःपीठमंत्रकः॥एवंविन्यस्यपीठान्तंपावकंचिंतयेत्तनौ ॥ ४५ ॥ त्रिनेत्रमा
रक्ततनुंसुशुक्लवस्त्रंसुवर्णस्रजमग्निमीडे ॥ वराभयस्वस्तिकशक्तिहस्तंपद्मस्थमाकल्पसमूहयुक्तम्
॥ ४६ ॥एवंध्यात्वार्चनंकुर्यान्मानसंविधिवद्वसोः॥ परिषिंचेत्ततस्तोयैःकुंडंस्थंडिलमेववा ॥४७॥
दर्भैःपरिस्तरेदग्निंप्रागग्रैरुदगग्रकैः ॥ प्रत्यग्दक्षिणसौम्यासुन्यसेत्त्रीन्परिधीन्क्रमात् ॥ ४८ ॥ पाला
शान्बिल्वजांस्तेषुब्रह्मविष्णुशिवान्यजेत्॥ वह्नौतत्पीठमभ्यर्च्यावाहयेत्स्वहृदोनलम् ॥४९॥ गंधा
दिभिःसमभ्यर्च्यपूजयेत्पावकंव्रती ॥ षट्सुकोणेषुमध्येचजिह्वास्तद्देवतायजेत् ॥१५०॥ ईशानादि
षुवाय्वंतकोणेषुषट्समर्चयेत् ॥ हिरण्याद्यतिरक्तांतामध्येतुबहुरूपिणीम् ॥ ५१ ॥ केसरेष्वंगपूजा
स्याद्दलेष्वष्टसुमूर्त्तयः ॥ मातरोष्टौदलांतेषुभैरवाःस्युस्तदग्रतः ॥ १५२ ॥

दक्षयोः ॥ अभीतिशक्तीवामयोः ॥ आकल्पाआभरणानितत्संयुतम् ॥ १४६ ॥ १४७ ॥ १४८ ॥ १४९ ॥ १५० ॥
॥ १५१ ॥ १५२ ॥

॥ १५३ ॥ भैरवानाह ॥ असितांगइति ॥ १५४ ॥ १५५ ॥ १५६ ॥ १५७ ॥ तीर्थमंत्रेण ॥ गंगेचयमुनेचैवगोदाव
रिसरस्वति ॥ नर्मदेसिंधुकावेरिजलेस्मिन्संनिधिंकुर्वित्यनेन ॥ सृण्याअंकुशमुद्रया ॥ ऋज्वींमध्यमिकांकृत्वा

धरापुरेतुशक्राद्यावज्राद्यायुधसंयुताः ॥ एवमावरणैर्युक्तंसप्तभिःपावकंयजेत् ॥ १५३ ॥ असितांगो
रुरुश्चंडःक्रोधउन्मत्तसंज्ञकः ॥ कपालीभीषणश्चापिसंहारश्चाष्टभैरवाः ॥ ५४ ॥ वामेकुशानथास्तीर्य
तत्रवस्तूनिनिःक्षिपेत् ॥ प्रणीताप्रोक्षणीपात्रेआज्यस्थालींस्रुवंस्रुचम् ॥ ५५ ॥ अधोमुखानिचैतानि
होमद्रव्यंघृतंकुशान् ॥ समिधःपंचपालाशीरन्यदप्युपयोगियत् ॥ ५६ ॥ कृत्वापवित्रेमूलेनप्रोक्षेत्ता
निशुभांभसा ॥ उत्तानानिविधायाथप्रणीतांपूरयेज्जलैः ॥ ५७ ॥ तीर्थमंत्रेणतीर्थानिसृण्यातत्राह्वये
त्सुधीः ॥ पवित्रे ह्यक्षतांस्तत्रनिःक्षिप्योत्पवनंचरेत् ॥ ५८ ॥ अथोदीच्यांनिधायैतांप्रोक्षण्यांतज्जलं
क्षिपेत् ॥ हवनीयंद्रव्यजातमुक्षेत्तोयैः पवित्रगैः ॥ ५९ ॥ मूलेनमूलगायत्र्यायद्वाहृदयमंत्रतः ॥ दक्षि
णेपीठमासाद्यतत्रब्रह्माणमाह्वयेत् ॥ १६० ॥

तर्जनींमध्यपर्वाणि ॥ संयोज्याकुंचयेत्किंचिन्मुद्रैषांकुशसंज्ञिकेतिलक्षणम् ॥ १५८ ॥ १५९ ॥ १६० ॥

अणिमाद्या अष्टमेवक्ष्यंते ॥ ब्रह्ममंत्रमुद्धरति ॥ तारेति ॥ ॐ नमोब्रह्मणे इति ॥ १६१ ॥ स्रुक्स्रुवसंस्कारमाह हस्ताभ्यामिति ॥ १६२ ॥ १६३ ॥ शक्तित्रयमाह ॥ इच्छेति ॥ दीर्घत्रयम् आंईऊं । व्योम हः ॥ तत्पूर्वकां

अणिमाद्याः सिद्धयोष्टौब्रह्मणःपीठदेवताः ॥ तारहृत्पूर्वकोङेन्तोब्रह्मा[1]मंत्रोस्यपूजने ॥१६१॥ हस्ताभ्यांस्रुक्स्रुवौधृत्वातापयेत्त्रिरधोमुखौ ॥ वामहस्तेनतौधृत्वादर्भैर्दक्षेणमार्जयेत् ॥१६२॥ संप्रोक्ष्यप्रोक्षणीतोयैः प्रतप्यपूर्ववत्पुनः ॥ न्यस्याग्रेमार्जनान्दर्भांस्तयोःशक्तित्रयंन्यसेत् ॥ ६३ ॥ इच्छाज्ञानक्रियासंज्ञाचतुर्थीनमसान्विता ॥ दीर्घत्रयेंदुयुग्व्योमपूर्वंकस्थानकत्रये ॥६४॥ हृदास्रुचिन्यसेच्छक्तिंस्रुवेशंभुंततस्तुतौ[2] ॥ सूत्रत्रयेणसंवेष्टयसंपूज्यकुसुमादिभिः ॥ ६५ ॥ कुशोपरिन्यसेद्दक्षेतयोःसंस्कारईरितः॥ अप्रोक्षितायामाज्यस्यस्थाल्यामाज्यंविनिःक्षिपेत् ॥६६॥ वीक्षणादिकसंस्कारसंस्कृतंमूलमंत्रतः ॥ गोमुद्रयामृतीकृत्यषट्संस्कारांस्ततश्चरेत् ॥ १६७ ॥

हांइच्छाशक्त्यैनमोमूले ॥ हींज्ञानशक्त्यैनमःमध्ये ॥ हूंक्रियाशक्त्यैनमः अन्ते ॥ १६४ ॥ १६५ ॥ १६६ ॥ गोमुद्रा धेनुमुद्रा ॥ १६७ ॥

१ ॐ नमोब्रह्मणे । २ नमःशक्त्यै नमःशंभवे ।

॥ १६८ ॥ .१६९ १७० ॥ १७१ ॥ १७२ ॥ १७३ ॥ नाडीत्रयमिति ॥ इडापिंगलासुषुम्णाख्या ॥ तृतीयामध्ये

कुंडोद्धृतेवायुकोणेस्थितेंगारेविनिःक्षिपेत्॥हृदेतितापनंप्रोक्तंदर्भयुग्मंप्रदीपितम् ॥१६८ ॥ आज्ये क्षिप्त्वाहृदावह्नौपवित्रीकरणंक्षिपेत् ॥६९॥ आज्यंनीराजयेद्दीप्तदर्भयुग्मेनवर्मणा ॥ अभिद्योतनमु क्तंतद्दीप्तंदर्भत्रयंघृते ॥१७० ॥ दर्शयेदस्त्रेणोद्द्योतेगृहीत्वाघृतपात्रकम् ॥ संयोज्याग्नौतदंगारान्स लिलंसंस्पृशेत्सुधीः॥७१॥अंगुष्ठानामिकाभ्यांतुदर्भावादायनिःक्षिपेत् ॥ त्रिरग्निसंमुखेत्वाज्यमस्त्रे णोत्पवनंत्विदम् ॥७२॥ हृदात्मसंमुखंतद्वदाज्यक्षेपस्तुसंप्लवः॥ नीराजनादिसंस्कारेष्वग्नौदर्भान्वि निःक्षिपेत् ॥७३॥ दर्भद्वयंग्रंथियुतंघृतमध्येविनिःक्षिपेत् ॥ वामदक्षिणयोःपक्षौस्मृत्वानाडीत्रयंस्म रेत् ॥ दक्षिणाद्वामतोमध्याद्धृदादायघृतंसुधीः ॥ ७४ ॥ अग्नयेग्निप्रियासोमायस्वाहेत्यग्निनेत्रयोः॥ जुहुयादग्नीषोमाभ्यांस्वाहेत्यक्षिणतृतीयके ॥ १७५ ॥

चिंत्या ॥ हृदा नमइतिमंत्रेण ॥ १७४ ॥ अग्नयेस्वाहेतिदक्षनेत्रे ॥ सोमायस्वाहेतिवामे तदाहुतिचतुष्टयेनाग्नेर्नेत्र मुखप्रकाशोभवतीत्यर्थः ॥ १७५ ॥

॥ १७६ ॥ १७७ ॥ १७८ ॥ १७९ ॥ ॐ अस्याग्नेर्गर्भाधानसंस्कारंकरोमिस्वाहेत्यादि ॥१८०॥ पंचसमिधांहोमा द्वसोरग्नेः नालापनयनाख्यःसंस्कारः ॥ १८१ ॥ देवाभिधानेनेदवनाम्नाशुष्मणोग्नेर्नामपूर्ववत् ॥ घृताहुत्यष्टकेन

पातयेदाहुतेःशेषमाहुतिग्रहणस्थले ॥ भूयोहृदादक्षभागादादायाज्यंमुखेयजेत् ॥१७६॥ अग्नयेस्वि
ष्टकृते तन्नेत्रास्योद्घाटनंमतम् ॥ नरसिंहंविनाविष्णुमंत्रेनेत्रद्वयंयजेत् ॥७७॥ नरसिंहान्यदेवेषुवह्ने
नेत्रत्रयं स्मृतम् ॥ महाव्याहृतिभिर्व्यस्तसमस्ताभिश्चतुष्टयम् ॥ ७८ ॥ आहुतीनांत्रयंवह्निमंत्रेणैवत
तश्चरेत् ॥ घृताहुतिभिरष्टाभिरेकैकांसंस्कृतिंचरेत् ॥७९॥ ओमस्याग्नेरमुंसंस्कारंकरोम्यग्निवल्लभा ॥
इत्थंमनुंजपन्गर्भाधानंपुंसवनंततः ॥१८०॥ सीमंतोन्नयनंजातकर्मकृत्वाततश्चरेत् ॥वह्नौपंचसमिद्धो
मान्नालापनयनंवसोः ॥८१॥कुर्याद्देवाभिधानेनपूर्ववन्नामशुष्मणः ॥नामानंतरमेतस्यपितरौस्वेपर्ययेद्धृ
दि ॥८२॥अन्नप्राशंतथाचौलोपनयौदारयोजनम् ॥संस्काराःस्युर्विवाहांतामृत्यंताःक्रूरकर्मणि १८३॥

कुर्यात्-रामाग्निकृष्णाग्निरित्यादि ॥ एतस्याग्नेः पितरौवागीशीवागीशौकुण्डात्स्वहृदिन्यसेत् ॥ १८२ ॥ उपनयमुपवीतम् । दारयोजनं विवाहः ॥ १८३ ॥

१ भूःस्वाहा भुवःस्वाहा स्वःस्वाहा भूर्भुवःस्वःस्वाहा । २ वैश्वानरजातवेदइहावहलोहिताक्षसर्वकर्माणिसाधयस्वाहा ।

॥ १८४ ॥ १८५ ॥ कुसुमंपुष्पम् ॥ १८६ ॥ दशधाव्यस्तेनविभक्तेन ॥ १८७ ॥ तमेवविभागमाह ॥ पूर्वेति ॥
बीजषट्कम् ॥ बाणाःपंचवर्णाः ॥ सायकाःपंचैव । मुनयःसप्त ॥ मार्गणाःपञ्च ॥ गणेशमन्त्रमाह ॥ तारइति॥तारः

एकैकामाहुतिंकुर्याद्वह्नेर्जिह्वांगमूर्तिभिः॥इंद्रादिभिश्चवज्राद्यैर्द्विठांतैर्जुहुयात्ततः ॥ १८४॥ स्रुवेणाज्यं
चतुर्वारंनिधाय स्रुचितांसुधीः ॥अपिधायस्रुवेणैतौगृह्णीयात्करयुग्मतः ॥ ८५॥तिष्ठन्मूलंतयोर्नाभौ
कृत्वाग्रेकुसुमंक्षिपेत् ॥ वामस्तनांततन्मूलंकृत्वाग्निमनुनासुधीः ॥ ८६ ॥ जुहुयाद्वौषडंतेनसंपत्त्यर्थं
मतंद्रितः ॥ महागणेशमंत्रेणव्यस्तेनदशधाततः ॥८७॥ जुहुयाच्चसमस्तेनचतुर्वारंघृताहुतीः ॥ पूर्वं
पूर्वयुतंबीजषट्कंबाणाश्चसायकाः॥८८॥मुनयोमार्गणाश्चेतिविभागस्तन्मनोःस्मृतः॥तारोलक्ष्मीर्गि
रिसुताकामोभूर्गणनायकः॥८९॥चतुर्थ्यन्तोगणपतिर्वरांतेवरदेतिच॥सर्वांतेजनमित्युक्त्वामेवशान्ते
तुमानय॥१९०॥स्वाहांतोवसुयुग्मार्णोमहागणपतेर्मनुः॥एवंकृत्वाग्निसंस्कारंपीठंदेवस्यपूजयेत् १९१

ॐ॥लक्ष्मीःश्रीं॥गिरिसुताह्रीं॥कामःक्लीं॥भूःग्लौं ॥ गणनायकःगं॥इतिबीजषट्कम् ॥ गणपतयेवरवरदसर्वजनंमेवश
मानयस्वाहेतिविभागाः पूर्वयुताःकार्याः ॥ॐ ॐ श्रीं ॐ श्रींह्रीं ॐ इत्यादि ॥ १८८ ॥१८९ ॥ १९० ॥ १९१ ॥

१ जिह्वेति । स्वदेवतानामप्युपलक्षणम् । २ ॐ श्रींह्रींक्लींग्लौंगंगणपतयेवरवरदसर्वजनंमेवशमानयस्वाहा । प्रयोगस्तु-ॐ स्वाहा । ॐ श्रींस्वाहा ।
ॐ श्रींह्रींस्वाहेत्यादि ।

३

आवाहनादिकाअथैवर्कत्व्याः ॥ १९२ ॥ पञ्चनेत्रसंख्या पंचविंशतिः ॥ १९३ ॥ १९४ ॥ १९५ ॥ १९६ ॥ १९७ ॥

तत्रेष्टदेवमावाह्यमुद्राआवाहनादिकाः॥प्रदर्श्यवह्निरूपस्यदेवस्यवदनेपुनः।१९२॥मूलेनजुहुयात्पंचने
त्रसंख्याघृताहुतीः॥वक्त्रैकीकरणंत्वग्निदैवयोस्तेनजायते ॥९३॥ नाडीसंधानसिद्ध्यर्थंवह्निदेवतयो
स्ततः॥जुहुयान्मूलमंत्रेणरुद्रसंख्याघृताहुतीः ॥ ९४॥ इष्टदेवस्यावृतीनामेकैकामाहुतिंचरेत् ॥ तत
स्तुमूलमंत्रेणदशधाजुहुयाद्घृतम् ॥९५॥ ततःकल्पोक्तद्रव्येणदशांशंजुहुयाज्जपात् ॥ होमंसमाप्यकु
र्वीतपूर्णाहुतिमनन्यधीः ॥९६ ॥ होमावशिष्टेनाज्येनपूरयित्वास्रुचंसुधीः ॥ पुष्पंफलंनिधायाग्रेस्रुवे
णाच्छाद्यतांपुनः ॥ ९७ ॥ उत्थितोवौषडंतेनमूलेनजुहुयादसौ ॥ तद्द्रव्येणावृतीनांचजुहुयादाहु
तिंपृथक् ॥ ९८ ॥ देवंविसृज्य स्वहृदिवह्नेर्जिह्वांगमूर्तिभिः ॥ जुहुयाद्व्याहृतीर्हुत्वाप्रोक्षेत्तंप्रोक्षणी
जलैः॥ ९९ ॥संप्रार्थ्यानेनमनुनानत्वातंविसृजेद्धृदि॥ भोभोवह्नेमहाशक्तेसर्वकर्मप्रसाधक॥२००॥
कर्मांतरेपिसंप्राप्तेसान्निध्यंकुरुसादरम् ॥ वह्नौपवित्रेनिःक्षिप्यप्रणीतांबुभुविक्षिपेत् ॥ २०१ ॥ ॥ १३ ॥

॥ १९८ ॥ १९९ ॥ २०० ॥ पवित्रादिप्रतिपत्तिमाह ॥ वह्नाविति ॥ विधिं ब्रह्माणंविसृज्यदक्षिणां दत्त्वेतिशेषः ॥
सकुशान्परिस्तरणसहितान्वसौवह्नौ ॥ २०१ ॥

तर्पणमन्त्रमाह ॥ मूलमन्त्रान्ते कृष्णंतर्पयामि नम इतितर्पणे ॥ कृष्णमभिषिंचामीत्यभिषेके ॥ २०२ ॥ जपाद्दशांशाद्धोमः तद्दशांशेनतर्पणं तद्दशांशेनाभिषेकः तद्दशांशेनविप्रभोजनमिति पंचांगपुरश्चरणमितिउत्तमः पक्षः ॥ अभिषेकवर्जोमध्यमः ॥ तर्पणाभिषेकवर्जद्वयंगःकनीयान्पक्षः होमदशांशंद्विजभोजनमिति ॥ किंबहुना ॥ बहु

विंधिविसृज्यसकुशान्परिधीन्विन्यसेद्वसौ॥एवंहोमंसमाप्याथतर्प्पयेद्देवतांजले॥२०२॥आवाह्यतद्दशांशेनतर्पणादभिषेचनम्॥तर्पयामिनमश्चेतिद्वितीयांतेष्टपूर्वकम् ॥ ३ ॥ मूलांतेतुपदंदेयंसिंचामीत्यभिषेचने ॥ततोनानाविधैरन्नैस्तर्पयेद्द्विजसत्तमान् ॥४॥ इष्टरूपान्समाराध्यतेभ्योदद्याच्चदक्षिणाम् ॥ न्यूनंसंपूर्णतामेति ब्राह्मणाराधनान्नृणाम् ॥ ५ ॥ देवताश्चप्रसीदंतिसंपद्यंतेमनोरथाः ॥ २०६ ॥ इतिश्रीमहीधरविरचितेमन्त्रमहोदधौभूतशुद्ध्यादिकथनंनामप्रथमस्तरंगः ॥ १ ॥ ॥ छ ॥

ब्राह्मणभोजनेदेवताप्रसादोनभवति किमिति ॥ २०३ ॥ २०४ ॥ २०५ ॥ २०६ ॥ इति श्रीमहीधरविरचितमंत्रमहोदधेःव्याख्यायां नौकायांभूतशुद्ध्यादिकथनंनामप्रथमस्तरंगः ॥ १ ॥

---

१ ब्रह्माणम् ।

आदौसकलविघ्ननिवर्तकस्यश्रीगणेशस्यमन्त्रान्वक्तुंप्रतिजानीते॥ गणेशस्येति ॥ मनून्मन्त्रान् मन्यंतेसर्वं यैरिति । मन्त्रमुद्धराति ॥ जलंवः ॥ चक्रीकः ॥ वह्निःरः ॥ तेनयुतःतेनयुक्तः ॥ कामिकात् ॥ कर्णेंद्वाढचाउ ॥ बिंदुयुता ॥ तेनतुं ॥ दीर्घआ ॥ तेनयुतोदारकोडः ॥ वायुर्यः ॥ कवचपश्चिममंतेयस्यसतथा वक्रतुंडायहुमितिसाविधुभिः

गणेशस्यमनून्वक्ष्येसर्वाभीष्टप्रदायकान्॥ जलं(व)चक्री(क)वह्नि(र)युतःकर्णेंद्वाढ्याचकामिका(तुं) दारको(ड)दीर्घसंयुक्तो(आ)वायुः(य)कवच(हुं) पश्चिमः॥षडक्षरोमंत्रराजोभजतामिष्टसिद्धिदः॥२॥ भार्गवोमुनिरस्योक्तश्छंदोनुष्टुबुदाहृतः॥विघ्नेशोदेवताबीजंवंशक्तिर्यमितीरितम् ॥३॥ षडक्षरैःसविधुभिःप्रणवाद्यैर्नमोंतकैः॥ प्रकुर्याज्जातिसंयुक्तैःषडंगविधिमुत्तमम् ॥४॥ भ्रूमध्यकंठहृदयनाभिलिंगपदेषुच॥ मनोर्वर्णान्क्रमान्न्यस्यव्यापय्याथोस्मरेत्प्रभुम् ॥५॥ उद्यद्दिनेश्वररुचिंनिजहस्तपद्मैःपाशांकुशाभयवरान्दधतंगजास्यम्॥रक्तांबरंसकलदुःखहरंगणेशंध्यायेत्प्रसन्नमखिलाभरणाभिरामम् ॥६॥

सानुस्वारैः॥ ॐवंनमःहृदयायनमःइत्यादि ॥ व्यापय्यसर्वमंत्रंसर्वशरीरेन्यस्येत्यर्थः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ध्यानमाह। उद्यदिति ॥ पाशाभयेवामयोः ॥ वरांकुशावन्ययोः ॥ ६ ॥

१ वक्रतुंडायहुं । २ अस्यश्रीगणेशमंत्रस्यभार्गवऋषिरनुष्टुप्छंदःविघ्नेशोदेवतावंबीजंयंशक्तिर्ममाभीष्टसिद्ध्येजपेविनियोगः ।

वाडवान्विप्रान् ॥ ७ ॥ द्रव्याष्टकमाह इक्षवइति ॥ ८ ॥ ९ ॥ पीठमंत्रमाह ॥ गंसर्वशक्तिकमलासनाय

ऋतुलक्षंजपेन्मंत्रमष्टद्रव्यैर्दशांशतः ॥ जुहुयान्मंत्रसंसिद्ध्यैवाडवान्भोजयेच्छुचीन् ॥७॥ इक्षवःसक्त

वोरंभाफलानिचिपिटास्तिलाः ॥ मोदकानारिकेलानिलाजाद्रव्याष्टकंस्मृतम् ॥८॥ पीठमाधारश

क्त्यादिपरतत्त्वांतमर्चयेत् ॥ तत्राष्टदिक्षुमध्येचसंपूज्यानवशक्तयः ॥९॥ तीव्राचचालिनीनंदाभोग

दाकामरूपिणी ॥ उग्रातेजोवतीसत्यानवमीविघ्ननाशिनी ॥ १० ॥ विनायकस्यमंत्राणामेताःस्युः

पीठशक्तयः ॥ सर्वशक्तिक्रमांतेतुलासनायहृदंतिकः ॥ ११ ॥ पीठमंत्रस्तदीयेनबीजेनादौसमन्वितः ॥

प्रदायासनमेतेनमूर्तिंमूलेनकल्पयेत् ॥ १२ ॥ तस्यांगणेशमावाह्यपूजयेदासनादिभिः ॥ अभ्यर्च्य

कुसुमैरीशंकुर्यादावरणार्चनम् ॥ १३ ॥ आग्नेयादिषुकोणेषुहृदयंचशिरःशिखाम् ॥ वर्माभ्यर्च्याग्रतोनेत्रं

दिक्ष्वस्त्रंपूजयेत्सुधीः ॥ १४ ॥ द्वितीयावरणेपूज्याःप्रागाद्यष्टैवशक्तयः ॥ विद्यादिमाविधात्रीचभोगदा

विघ्नघातिनी ॥ १५ ॥ निधिप्रदीपापापघ्नीपुण्यापश्चाच्छशिप्रभा ॥ दलाग्रेषुवक्रतुंडएकदंष्ट्रोमहोदरः

॥ १६ ॥ गजास्यलंबोदरकौविकटोविघ्नराजकः ॥ धूम्रवर्णस्तदग्रेषुशक्राद्याआयुधैर्युताः ॥ १७ ॥

नमः ॥ एतेनासनंदत्त्वातदेशेमूलेनमूर्तिंकल्पयेत् ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

॥ १८ ॥ प्रयोगानाह ब्रह्मेति ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ मंडलादेकोनपंचाशद्दिनमध्येइष्टंप्राप्नुयात् ॥ २५ ॥ मंत्रांतरमाह ॥ रायस्पोषेति ॥ स्वरूपं भृगुः सः ॥ याढ्योयकारयुतः ॥ मेषोन् ॥ सात्वतोध ॥

एवमावरणैःपूज्यःपंचभिर्गणनायकः॥पूर्वोक्ताचपुरश्चर्याकार्यामंत्रस्यसिद्धये॥१८॥ततःसिद्धेमनौ काम्यान्प्रयोगान्साधयेन्निजान् ॥ब्रह्मचर्यरतोमंत्रीजपेद्दविसहस्रकम्॥१९॥षण्मासमध्याद्दारिद्र्यंनाशयत्येवनिश्चितम्॥चतुर्थ्यादिचतुर्थ्यंतंजपेद्दशसहस्रकम् ॥२०॥ प्रत्यहंजुयादष्टोत्तरंशतमतंद्रितः॥ पूर्वोक्तंफलमाप्नोतिषण्मासाद्भक्तितत्परः॥२१॥आज्याक्तान्नस्यहोमेनभवेद्धनसमृद्धिमान्॥पृथुकैर्नारिकेलैर्वामरिचैर्वासहस्रकम्२२प्रत्यहंजुह्वतोमासाज्जायतेधनसंचयः ॥ जीरसिंधुमरीचाक्तैरष्टद्रव्यैःसहस्रकम् ॥२३॥जुह्वन्प्रतिदिनंपक्षात्स्यात्कुबेरइवार्थवान्॥चतुःशतं चतुश्चत्वारिंशदा४४४ढ्यंदिनेदिने ॥२४॥ तर्पयेन्मूलमंत्रेणमंडलादिष्टमाप्नुयात् ॥अथमंत्रांतरंवक्ष्येसाधकानांनिधिप्रदम् ॥२५॥रायस्पोषभृगुर्याढ्योददितामेषसात्वतौ ॥ सद्दशौदोरत्नधातुमात्रक्षोगगनंरतिः ॥ २६ ॥

तौसद्दशौइयुतौ ॥ गगनंहः ॥ रतिर्णः ॥ ससद्या ॐयुता ॥ शार्ङ्गीगः ॥ खंहः ॥ अन्यत्स्वरूपम् ॥ षडक्षरःपूर्वोक्तः यथा रायस्पोषस्यददितानिधिदोरत्नधातुमात्रक्षोहणोवलगहनोवक्रतुंडायहुमित्येकत्रिंशद्वर्णः ॥ २६ ॥

॥ २७ ॥ २८ ॥ पूर्ववत्षड्वर्णवत् ॥ २९ ॥ मंत्रांतरमाह ॥ पद्मेति ॥ भानुर्मः ॥ पद्मनाभए ॥ तद्युतःमे । धाधः ॥ सद्यॐ
॥ तद्युतालकौलकारककारौ ॥ अनन्तमाकारमारूढौ ॥ वायुर्यः ॥ पावकगेहिनीस्वाहा ॥ मेघोल्कायस्वाहेति
षड्वर्णः ॥ ३० ॥ मन्त्रांतरमाह ॥ ॥ लकुलीति ॥ लकुलीहकारः ॥ भृगुतौसकारतकारौहशमारूढौइकारयुतौ

ससद्यावलशार्ङ्गीखंनोषडक्षरसंयुतः ॥ एकत्रिंशद्वर्णयुक्तोमंत्रोभीष्टप्रदायकः॥ २७ ॥ सायकैस्त्रिभि
र्घ्राभिश्चतुर्भिःपञ्चभीरसैः ॥ मंत्रोत्थितैःक्रमाद्वर्णैःषडंगसमुदीरितम् ॥२८॥ ऋष्याद्यर्चाप्रयोगाः
स्युःपूर्ववन्निधिदोह्ययम् ॥ पद्मनाभयुतोभानुर्मेधासद्यसमन्विता ॥ २९ ॥ लकावनंतमारूढौवायुः
पावकगेहिनी ॥ षडक्षरोयमादिष्टोभजतामिष्टदोमनुः ॥३०॥ पूर्ववत्सर्वमेतस्यसमाराधनमीरितम्॥
लकुलीहशमारूढौभृगुतौलोहितःसहक् ॥ ३१ ॥ वकःसदीर्घश्चःसाक्षिर्लिखेन्मंत्रःशिरोंतिमः ॥
नवाक्षरोमनुश्चास्यकंकोलःपरिकीर्तितः ॥ ३२ ॥

तेनास्ति । लोहितःपःसहक् इयुतः ॥ वकः शः ॥ सदीर्घःआयुतः ॥ चस्वरूपम् ॥ साक्षिइयुतः ॥ लिखेस्वरूपांशि
रोंतिकःस्वाहांतः ॥ हस्तिपिशाचिलिखेस्वाहेतिनवार्णः ॥ ३१ ॥ ३२ ॥

---

१ रायस्पोषस्यददितानिधिदोरत्नधातुमान्रक्षोहणोवलगहनोवक्रतुंडायहुम् । २ मेघोल्कायस्वाहा । ३ हस्तिपिशाचिलिखेस्वाहा ।

पञ्चांगमाह ॥ द्राभ्यामिति ॥ हस्तिहृदयायनमइत्यादि ॥ ३३ ॥ ध्यानमाह ॥ चतुर्भुजमिति ॥ अंकुशमोदकपा

विराट्छंदोदेवतातुस्याद्वैचोच्छिष्टनायकः ॥ द्राभ्यांत्रिभिर्द्वयेनाथद्राभ्यांसकलमंत्रतः ॥३३॥ पंचां
गान्यस्यकुर्वीतध्यायेत्तंशशिशेखरम् ॥ चतुर्भुजंरक्ततनुंत्रिनेत्रंपाशांकुशौमोदकपात्रदंतौ॥करैर्दधानं
सरसीरुहस्थमुन्मत्तमुच्छिष्टगणेशमीडे ॥३४॥ लक्षमेकंजपेन्मंत्रंदशांशंजुहुयात्तिलैः॥ पूर्वोक्तेपूजये
त्पीठेविधिनोच्छिष्टविघ्नपम् ॥ ३५ ॥ आदावंगानिसंपूज्यब्राह्म्याद्यान्दिक्षुपूजयेत् ॥ ब्राह्मीमाहेश्वरी
चैवकौमारीवैष्णवीपरा ॥ ३६ ॥ वाराहीचतथैंद्राणीचामुंडारमयासह ॥ ककुप्सुवक्रतुंडाद्यान्दश
सुप्रतिपूजयेत् ॥३७॥ वक्रतुंडैकदंष्ट्रौचतथालंबोदराभिधः॥ विकटोधूम्रवर्णश्चविघ्नश्चापिगजाननः
॥३८॥ विनायकोगणपतिर्हस्तिदंताभिधोंतिमः ॥ इंद्राद्यानपिवज्राद्यान्पूजयेदावृतिद्वये ॥ ३९ ॥
एवंसिद्धेमनौमंत्रीप्रयोगान्कर्तुमर्हति ॥ स्वांगुष्ठप्रतिमांकृत्वाकपिनासितभानुना ॥ ४० ॥

त्रेदक्षयोः ॥ अन्ययोरन्ये ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ प्रयोगानाह ॥ स्वेति ॥ कपिनारक्तचंदनेन ॥
सितभानुनाश्वेतार्केणवाप्रतिमाकार्य्या ॥ ४० ॥



१ गणेशम् ।

॥ ४१ ॥ ४२ ॥ अनावृतोनिर्वस्त्रः ॥ ४३ ॥ ४४ ॥ वल्मीकमृत्तिकाप्रतिमैवंपूजितालाभदेति ॥ ४५ ॥ ४६ ॥

गणेशप्रतिमां रम्यासुक्तलक्षणलक्षिताम् ॥ प्रतिष्ठाप्यविधानेनमधुनास्नापयेच्चताम् ॥ ४१ ॥ आर
भ्यकृष्णभूतादियावच्छुक्काचतुर्दशी ॥ सगुडंपायसंतस्मैनिवेद्यप्रजपेन्मनुम् ॥ ४२ ॥ सहस्रंप्रत्यहं
तावज्जुहुयात्सघृतैस्तिलैः ॥ गणेशोहमितिध्यायन्नुच्छिष्टेनावृतोरहः ॥ ४३ ॥ पक्षाद्राज्यमवा
प्नोति नृपजोन्योपिवानरः ॥ कुलालमृत्स्नाप्रतिमापूजितैवंसुराज्यदा ॥४४॥ वल्मीकमृत्कृतालाभ
मेवमिष्टान्प्रयच्छति ॥ गौडीसौभाग्यदासैवंलावणीक्षोभयेदरीन् ॥४५॥ निंबजानाशयेच्छत्रून्प्रति
मैवंसमर्चिता ॥ मध्वक्तैर्होमतोलाजैर्वशयेदखिलंजगत् ॥ ४६ ॥ सुप्तोधिशय्यमुच्छिष्टोजपञ्छ
त्रून्वशंनयेत् ॥ कटुतैलान्वितैराजीपुष्पैर्विद्वेषयेदरीन् ॥४७॥ द्यूतेविवादेसमरेजप्तोयंजयमावहेत् ॥
कुबेरोस्यमनोर्जापान्निधीनां स्वामितामयात् ॥४८॥ लेभातेराज्यमनरिवानरेशविभीषणौ ॥ रक्त
वस्त्रांगरागाढ्यस्तांबूलंनिश्यदञ्जपेत् ॥४९॥ यद्वानिवेदितंतस्मैमोदकंभक्षयञ्जपेत् ॥ पिशितंवा

अधिशय्यंशय्यायाम् ॥ कटुतैलंसर्षपतैलम् ॥ ४७ ॥ ४८ ॥ अनरिःशत्रुहीनम् ॥ ४९ ॥ तेनताम्बूलादिना ॥

१ घृतमधुशर्कराक्तैः ।

॥५०॥ बलिमंत्रमाह ॥ स्मृतिर्गः॥ सेन्दुस्सानुस्वारः ॥आकाशंहः॥ तथासानुस्वारः॥ सृष्टिलौंककारलकारौ॥क्लौं
हस्रौं मन्विद्गाढ्यौऔकारानुस्वारयुतौ ॥ तेनक्लौं॥पंचांतकशिवौगकारलकारौतद्वन्मन्विद्गाढ्यौग्लौं ॥ उच्छिष्टग
स्वरूपम् ॥ भगान्वितःउमाकांतः ॥ एकारयुतोणःणे ॥ सबिंदुर्यःसानुस्वारोयकारः ॥ अन्यत्स्वरूपम् ॥ मन्त्रो
यथा ॥ गंहंक्लौंग्लौंउच्छिष्टगणेशायमहायक्षायायंबलिः इत्येकोनविंशत्यर्णोबलिमंत्रः ॥ ५१ ॥ ५२ ॥ मन्त्रांतर

फलंवापितेनतेनबलिंहरेत् ॥ ५० ॥ सेंदुःस्मृतिस्तथाकाशंमन्विद्गाढ्यौचसृष्टिलौ॥पंचांतकशिवौ
तद्वदुच्छिष्टगभगान्वितः ॥ ५१ ॥ उमाकांतःश्यायमांतेहायक्षायासबिंदुयः ॥ बलिरित्येषकथि
तोनवेंद्वर्णोबलेर्मनुः ॥ ५२ ॥ ध्रुवोमायासेंदुशार्ङ्गिबीजाढ्योनववर्णकः ॥ द्वादशार्णोमनुःप्रोक्तःस
र्वमस्यनवार्णवत् ॥५३॥ ताराद्यश्चगणेशाद्योनवार्णोदशवर्णकः ॥ द्विविधोस्योपासनंतुप्रोक्तमन्य
न्नवार्णवत् ॥ ५४ ॥

माह ॥ ध्रुवइति ॥ ध्रुव ॐ । मायाह्रीं । शार्ङ्गिगःसेन्दुःअनुस्वारसहितः ॥ गंत्रिबीजाढ्यः ॥ स्पष्टम् । यथा ॐ
ह्रींगंहस्तिपिशाचिलिखेस्वाहेतिद्वादशार्णः ॥ ५३ ॥ ताराद्योयथा ॥ ॐ हस्तिपिशाचिलिखेस्वाहा ॥ गणेशाद्यो
यथा ॥ गंहस्तिपिशाचिलिखेस्वाहा ॥ ५४ ॥

मन्त्रान्तरमाह ॥ ध्रुवेति ॥ ध्रुवः प्रणवः हृन्नमः स्वरूपमन्यत् ॥ मन्त्रः ॥ ॐनमउच्छिष्टगणेशायहस्तिपिशाचिलिखे स्वाहा इत्येकोनविंशतिवर्णः ॥ मुन्यादीति ॥ ऋषिश्छंदोदेवताःनवार्णवत् ॥ ५५ ॥ षडङ्गमाह ॥ त्रिभिरिति ॥ अर्च्चनंपुरापूर्ववदित्यर्थः ॥ ५६ ॥ मन्त्रांतरमाह ॥ तारइति ॥ झिंटीशः ए ॥ चतुराननः कः ॥ दीर्घवियत् हा ॥

ध्रुवोहृदुच्छिष्टगणेशायतेतुनवाक्षरः ॥ एकोनविंशत्यर्णाढ्योमनुर्मुन्यादिपूर्ववत् ॥ ५५ ॥ त्रिभिः सप्तभिरक्षिभ्यांत्रिभिर्द्वाभ्यांद्वयेनच ॥ मंत्रोत्थितैःसुधीर्वर्णैः कुर्यादंगंपुरार्चनम् ॥ ५६ ॥ तारोनमोभगवते झिंटीशश्चतुराननः ॥ दंष्ट्रायहस्तिमूर्धायखायलंबोदरायच ॥ ५७ ॥ उच्छिष्टमवियद्दीर्घात्मने पाशोंकुशःपरा ॥ सेंदुः शार्ङ्गीभगयुतेद्वेमेघेवह्निकामिनी ॥ ५८ ॥ उच्छिष्टगणनाथस्यमनुरद्रिगुणाक्षरः ॥ गणकोमुनिराख्यातोगायत्रीच्छंदईरितः ॥ ५९ ॥

पाशआं ५ अंकुशःक्रो पराह्रीं ॥ सेन्दुशार्ङ्गींगं ॥ भगयुतेद्वेमेघे ॥ एकारयुतघद्वयम् ॥ वह्निकामिनीस्वाहा ॥ अन्यत्स्वरूपम् ॥ ॐ नमोभगवतेएकदंष्ट्रायहस्तिमुखायलम्बोदरायउच्छिष्टमहात्मनेआँक्रोंह्रींगंघेघेस्वाहा ॥ अद्रिगुणाक्षरःसप्तत्रिंशदक्षरः ॥ ५७ ॥ ५८ ॥ ५९ ॥

षडंगमाह ॥ सप्तेति ॥ ६० ॥ ध्यानमाह ॥ शरानिति ॥ धनुःपाशौवामयोः ॥ शरांकुशौदक्षयोः ॥ ६१ ॥ ६२ ॥

उच्छिष्टगणपोदेवोजपेदुच्छिष्टएवतम्॥सप्तदिग्बाणसप्ताब्धियुगार्णैरङ्गकंमनोः ॥६०॥ शरान्धनुः
पाशसृणीस्वहस्तैर्दधानमारक्तसरोरुहस्थम् ॥ विवस्त्रपत्न्यांसुरतप्रवृत्तमुच्छिष्टमम्बासुतमाश्रयेहम् ॥
॥६१॥लक्षंजपेद्घृतैर्हुत्वातद्दशांशंप्रपूजयेत् ॥ पूर्वोक्तपीठेस्वाभीष्टसिद्ध्यैपूर्ववद्विभुम् ॥ ६२ ॥
कृष्णाष्टम्यादितद्भूतंयावत्तावज्जपेन्मनुम् ॥ प्रत्यहंसाष्टसाहस्रंजुहुयात्तद्दशांशतः ॥ ६३ ॥
तर्पयेदपिमंत्रोयंसिद्धिमेवंप्रयच्छति ॥ धनंधान्यंसुतान्पौत्रान्सौभाग्यमतुलंयशः ॥ ६४ ॥ मू
र्तिंकुर्य्याद्गणेशस्यशुभाहेनिम्बदारुणा ॥ प्राणप्रतिष्ठांकृत्वाथतदग्रेमंत्रमाजपेत् ॥ ६५ ॥ यंध्यात्वा
दासवत्सोपिवश्योभवतिनिश्चितम्॥नदीजलंसमादायसप्तविंशतिसंख्यया ॥ ६६॥ मंत्रयित्वामुखं
तेनप्रक्षाल्येशसमांव्रजेत् ॥ पश्येद्यंदृश्यतेयेनसवश्योजायतेक्षणात् ॥६७॥ चतुःसहस्रंधत्तूरपुष्पाणि
मनुनार्पयेत्॥गणेशायनृपादीनांजनानांवश्यताकृते ॥ ६८ ॥ सुंदरीवामपादस्यरेणुमादायतन्तु ॥
संस्थाप्यगणनाथस्यप्रतिमांप्रजपेन्मनुम् ॥ ६९ ॥

तद्भूतंयावत्कृष्णचतुर्दशीपर्य्यन्तम् ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥

घृतासुकां कृतप्राणप्रतिष्ठाम् ॥ ७० ॥ ७१ ॥ ७२ ॥ वज्री स्नुही ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥

तांध्यात्वारविसाहस्त्रंसासमायातिदूरतः ॥ श्वेतार्केणाथनिम्बेनकृत्वामूर्तिंधृतासुकाम् ॥७०॥ चतुर्थ्यांपूजयेद्रात्रौरक्तैःकुसुमचंदनैः ॥ जप्त्वासहस्त्रंतांमूर्तिंक्षिपेद्रात्रौसरित्तटे ॥ ७१ ॥ स्वेष्टंकार्य्यंसमाचष्टेस्वप्नेतस्यगणाधिपः ॥ सहस्त्रनिम्बकाष्ठानांहोमादुच्चाटयेदरीन् ॥ ७२ ॥ वज्रिणःसमिधांहोमाद्रिपुर्य्यमपुरंव्रजेत् ॥ वानरस्यास्थिसंजप्तंक्षिप्तमुच्चाटयेद्गृहे ॥७३॥ जप्तंनरास्थिकन्यायागृहेक्षिप्तंतदाप्तिकृत् ॥कुलालस्यमृदास्त्रीणांवामपादस्यरेणुना ॥ ७४ ॥ कृत्वापुत्तलिकांतस्याहृदिस्त्रीनामसंलिखेत् ॥ निखनेन्मंत्रसंजप्तैर्निम्बकाष्ठैःक्षिताविमाम् ॥ ७५ ॥ सोन्मत्ताभवतिक्षिप्रमुद्धृतायांसुखंभवेत्॥ शत्रोरेवंकृतासातुलशुनेनसमन्विता ॥७६ ॥ शरावान्तर्गतासम्यक्पूजितादारिविद्विषः ॥ निखातापक्षमात्रेणशत्रूच्चाटनकृत्स्मृता ॥ ७७ ॥ विषमेसमनुप्राप्तेसिताकारिष्टदारुजम् ॥ गणपंपूजितंसम्यक्कुसुमैरक्तचन्दनैः ॥ ७८ ॥ मद्यभाण्डस्थितंहस्तमात्रेतंनिखनेत्स्थले ॥ तत्रोपविश्यप्रजपेन्मंत्रीनक्तंदिवामनुम् ॥ ७९ ॥

॥ ७७ ॥ अरिष्टो निंबः ॥ ७८ ॥ ७९ ॥

॥ ८० ॥ ८१ ॥ ८२ ॥ हयमारजैः करवीरोत्थैः ॥ ८३ ॥ मन्त्रान्तरमाह ॥ तारइति ॥ तारः ॐ ॥ महात्माङे-म हात्मने ॥ पाशादियुक्तम् ॥ आत्मभूः क्रीं ॥ मायाह्रीं ॥ वर्महूं ॥ दहनांगनास्वाहा ॥ स्वरूपमन्यत् ॥ यथाओंह

सप्ताहमध्येनश्यंतिसर्वेघोराउपद्रवाः ॥ शत्रवोवशमायान्तिवर्द्धन्तेधनसंपदः ॥ ८० ॥ दुष्टस्त्री वामपादस्यरजसानिजदेहजैः ॥ मलैर्मूत्रपुरीषाद्यैःकुम्भकारमृदापिच ॥ ८१ ॥ एतैःकृत्वागणेशस्यप्रति मांमद्यभांडगाम् ॥ संपूज्यनिखनेद्भूमौहस्तार्द्धेपूरितेपुनः ॥ ८२ ॥ संस्थाप्यवह्निंजुहुयात्कुसुमैर्हयमा रजैः ॥ सहस्रंसाभवेद्दासीतन्वाचमनसाधनैः ॥ ८३ ॥ एवमादिप्रयोगांस्तुनवार्णेनापिसाधयेत् ॥ तारोहस्तिमुखायाथङेन्तोलम्बोदरस्तथा ॥ ८४ ॥ उच्छिष्टान्तेमहात्माङेपाशाङ्कुशशिवात्मभूः ॥ मायावर्म्मचघेघेउच्छिष्टायदहनाङ्गना ॥ ८५ ॥ द्वात्रिंशदक्षरोमन्त्रोयजनंपूर्ववन्मतम् ॥ रसेषुसप्त षट्षट्कनेत्रार्णैरङ्गमीरितम् ॥ ८६ ॥ उच्छिष्टगजवक्त्रस्यमन्त्रेष्वेषुनशोधनम् ॥ सिद्धादिचक्रंमासादेः प्राप्तास्तेसिद्धिदागुरोः ॥ ८७ ॥ मनवोऽमीसदागोप्यानप्रकाश्यायतःकुतः ॥ परीक्षितायशिष्यायप्रदे यानिजसूनवे ॥ ८८ ॥

स्तिमुखायलम्बोदरायउच्छिष्टमहात्मनेआँक्रोंह्रींक्लींह्रींहूंघेघेउच्छिष्टायस्वाहा ॥ ८४ ॥ ८५ ॥ द्वात्रिंशदर्णः ॥ षडंगमाह ॥ रस इति ॥ ८६ ॥ ८७ ॥ उच्छिष्टगणेशाउक्ताः ॥ ८८ ॥

शक्तिविनायकसंज्ञं मन्त्रान्तरमाह ॥ मायेति ॥ मायाह्रीं ॥ पञ्चान्तकहुताशनौगकाररेफौ ॥ त्रिमूर्तिचन्द्रस्थौ इकारानुस्वारयुक्तौ ॥ तेनग्रींताराद्दिशक्तिबीजान्तः प्रणवाद्दिर्मायाबीजान्तः ॥ यथा ॥ ॐ ह्रींग्रींह्रींइति चतुर्वर्णः ॥ ८९ ॥ देवइति ॥ पूर्वेणसम्बन्धः ॥ माया शक्तिः ॥ द्वितीयंबीजम् ॥ ९० ॥ षडङ्गमाह ॥ षडि

मायात्रिमूर्तिचंद्रस्थौपंचान्तकहुताशनौ ॥ तारादिशक्तिबीजान्तोमंत्रोयंचतुरक्षरः ॥ ८९ ॥ भार्ग वोस्यमुनिश्छंदोविराट्शक्तिर्गणाधिपः ॥ देवोमायाद्वितीयेतुशक्तिबीजंप्रकीर्तिते ॥ ९० ॥ षड्दी र्घयुग्द्वितीयेनताराद्येनषडङ्गकम् ॥ विधायसावधानेनमनसासंस्मरेत्प्रभुम् ॥ ९१ ॥ विषाणाङ्कुशा क्षसूत्रंचपाशंदधानंकरैर्मोदकंपुष्करेण ॥ स्वपत्न्यायुतंहेमभूपाभराढ्यंगणेशंसमुद्यद्दिनेशाभमीडे ॥ ॥९२॥ एवंध्यात्वाजपेल्लक्षचतुष्कंतद्दशांशतः ॥ अपूपैर्जुहुयाद्धोमध्वक्तैस्तर्पयेच्चतम् ॥ ९३ ॥ पूर्वोक्तेपूजयेत्पीठेकेसरेष्वङ्गदेवताः ॥ दलेषुवक्रतुण्डाद्यान्ब्राह्मीत्याद्यान्दलाग्रगान् ॥ ९४ ॥

ति ॥ ॐ ग्रांहृत्॥ ॐ ग्रींशिरइत्यादि ॥ ९१ ॥ ध्यानमाह ॥ विषाणेति ॥ अंकुशाक्षसूत्रे दक्षयोः । अन्ये वामयोः ॥ ९२ ॥ ९३ ॥ ९४ ॥

---

१ अस्यशक्तिगणाधिपमंत्रस्यभार्गवऋषिः विराट्छंदः शक्तिगणाधिपोदेवताह्रींशक्तिःग्रींबीजंममाभीष्टसिद्ध्यर्थंजपेविनियोगः । २दन्त० । ३शुंडाग्रेण।

ककुप्पालानिन्द्रादीन् ॥ ९५ ॥ परमान्नंपायसम् ॥ ९६ ॥ वामनेत्रानारी ॥ ९७ ॥ मंत्रांतरमाह । तारइति ॥ तारः ॐ । रमाश्रीं चन्द्रयुक्तःखान्तः गं ॥ समीरणोयः ॥ तोयंवः ॥ दीर्घोनः ॥ वायुर्यः ॥ पावककामिनी

ककुप्पालांस्तदस्त्राणिसिद्धएवंभवेन्मनुः ॥ घृताक्तमन्नंजुहुयादावर्षादन्नवान्भवेत् ॥९५॥ परमान्नैर्हुतालक्ष्मीरिक्षुदंडैर्नृपश्रियः ॥ रम्भाफलैर्नारिकेलैःपृथुकैर्वश्यताभवेत् ॥ ९६ ॥ घृतेनधनमाप्नोतिलवणैर्मधुसंयुतैः ॥ वामनेत्रांवशीकुर्य्यादपूपैःपृथिवीपतिम् ॥ ९७ ॥ तारोरमाचन्द्रयुक्तःखान्तःसौम्यासमीरणः ॥ ङेन्तोगणपतिस्तोयंरवरान्तेदसर्वंच ॥ ९८ ॥ जनंमेवशमादीर्घोवायुःपावककामिनी ॥अष्टाविंशतिवर्णोयंमनुर्द्धनसमृद्धिदः ॥ ९९ ॥ अन्तर्य्यामीमुनिश्छंदोगायत्रीदेवतामनोः ॥ लक्ष्मीविनायकोबीजंरमाशक्तिर्वसुप्रिया ॥ १०० ॥

स्वाहा ॥ अन्यत्स्वरूपम् ॥ ॐश्रींगंसौम्यायगणपतयेवरवरदसर्वजनंमेवशमानयस्वाहेति अष्टाविंशत्यर्णोलक्ष्मीगणेशोमन्त्रः ॥ ९८ ॥ ९९ ॥ १०० ॥

१ अस्यलक्ष्मीविनायकमंत्रस्यअन्तर्य्यामीऋषिः गायत्रीछंदः लक्ष्मीविनायकोदेवताश्रींबीजंस्वाहाशक्तिःममाभीष्टसिद्ध्यर्थेजपेविनियोगः ।

षडंगमाह ॥ रमेति ॥ श्रांगांहृत्, श्रींगींशिरः, श्रूंगूंशिखेत्यादि ॥ ध्यानमाह ॥ दन्तेति ॥ दन्तशङ्खौदक्षयोः ॥

रमागणेशबीजाभ्यांदीर्घाढ्याभ्यांषडङ्गकम् ॥ दन्ताभयेचक्रदरौदधानंकराग्रगस्वर्णघटंत्रिनेत्रम् ॥ धृताब्जयालिङ्गितमब्धिपुत्र्यालक्ष्मीगणेशंकनकाभमीडे ॥ १०१ ॥ चतुर्लक्षंजपेन्मंत्रंसमिद्भिर्बिल्वशाखिनः ॥ दशांशंजुहुयात्पीठे पूर्वोक्तेतंप्रपूजयेत् ॥ १०२ ॥ आदावङ्गानिसंपूज्यशक्तीरष्टाविमायजेत् ॥ बलाकाविमलापश्चात्कमलावनमालिका ॥ १०३ ॥ विभीषिकामालिकाचशाङ्करीवसुबालिका ॥ शंखपद्मनिधीपूज्यौपार्श्वयोर्दक्षवामयोः ॥ १०४ ॥ लोकाधिपांस्तदस्त्राणितद्बहिःपरिपूजयेत् ॥ एवंसिद्धमनौमंत्रीप्रयोगान्कर्तुमर्हति ॥ १०५ ॥ उरोमात्रेजलेस्थित्वामंत्रीध्यात्वार्कमण्डले ॥ एवंत्रिलक्षंजपतोधनवृद्धिःप्रजायते ॥ १०६ ॥ बिल्वमूलंसमास्थायतावज्जप्तेफलंहितत् ॥ अशोककाष्ठैर्ज्वलितेवह्नावाज्याक्ततण्डुलैः ॥ १०७ ॥

अभयचक्रेवामयोः ॥ शुण्डाग्रेस्वर्णकुम्भः ॥ १०१ ॥ १०२ ॥ १०३ ॥ १०४ ॥ १०५ ॥ १०६ ॥ तावत्त्रिलक्षंतत्फलंधनवृद्धिः ॥ १०७ ॥

॥ १०८ ॥ त्रैलोक्यमोहनगणेशमन्त्रमाह ॥ वक्रेति ॥ स्वरूपम् ॥ णांतस्तः ॥ कर्णेंदुयुक् ॥ उबिंदुयुतः ॥ मन्मथः क्लीं ॥ मायाह्रीं ॥ रमाश्रीं ॥ गजमुखोगं ॥ भगीहरिः ॥ एयुतस्तः ॥ बालोवः ॥ अग्निरः ॥ सत्योदः ॥ रेफारूढजलं वं ॥ स्थिराजः ॥ सेन्दुमेषः नं ॥ उषर्बुधप्रियास्वाहा ॥ स्वरूपमन्यत् ॥ यथा ॥ वक्रतुंडैकदंष्ट्रायक्लींह्रीं श्रींगंगण

होमतोवशयेद्विश्वमर्ककाष्ठैःशुचावपि ॥ खादिराग्नौनरपतिंलक्ष्मींपायसहोमतः ॥ १०८ ॥ वक्रकर्णे न्दुयुग्णान्तौडैकदंष्ट्रायमन्मथः ॥ मायारमागजमुखोगणपान्तेभगीहरिः ॥ १०९ ॥ वरवालाग्निसत्याःस रेफारूढंजलंस्थिरा ॥ सेन्दुर्मेषोमेवशान्तेमानयोषर्बुधप्रिया ॥ ११० ॥ स्यात्त्रयस्त्रिंशदर्णाढ्योमनुस्त्रै लोक्यमोहनः ॥ गणकोस्यऋषिश्छंदोगायत्रीदेवतापुनः ॥ १११ ॥ त्रैलोक्यमोहनकरोगणेशोभक्त सिद्धिदः ॥ [१]रविवेदैःशरोदन्वद्वसनेत्रैःषडङ्गकम् ॥ ११२ ॥ गदाबीजपूरेधनुःशूलचक्रेसरोजोत्पले पाशधान्याग्रदन्तान् ॥ करैःसंदधानंस्वशुंडाग्रराजन्मणीकुम्भमङ्काधिरूढंस्वपत्न्या ॥ ११३ ॥

पते वरवरदसर्वजनंमेवशमानयस्वाहेतित्रयस्त्रिंशद्वर्णाः ॥ १०९ ॥ ११० ॥ १११ ॥ षडंगमाह ॥ रवीति ॥ उन्न्वन्तश्चत्वारः ॥ ११२ ॥ ध्यानमाह ॥ गदेति ॥ गदाबीजपूरशूलचक्रपद्मानिदक्षेषुअन्यान्यन्येषु ॥ धान्याग्रंव्रीहिमंजरी ॥ ११३ ॥

१ अस्यत्रैलोक्यमोहनकरगणेशमंत्रस्यगणकऋषिःगायत्रीछंदःत्रैलोक्यमोहनकरोगणेशोदेवताममाभीष्टसिद्ध्यर्थेजपेविनियोगः ।

किंभूतयापत्न्या ॥ सरोजन्मनापद्मेन भूषणसमूहेनचक्रमात् ॥ ज्वलन्दीप्यमानोहस्तोज्ज्वलंतीतनुश्चयस्या स्तया ॥ ११४ ॥ ११५ ॥ ११६ ॥ ११७ ॥ दीर्घाद्यामातरः ॥ आंब्राह्म्यैनमः ॥ ईंमाहेश्वर्यैनमइत्यादि ॥

सरोजन्मनाभूषणानांभरेणोज्ज्वलद्धस्ततन्व्यासमालिङ्गिताङ्गम् ॥ करीन्द्राननंचन्द्रचूडंत्रिनेत्रंजगन्मोहनंरक्तकान्तिंभजेत्तम् ॥ ११४ ॥ वेदलक्षंजपेन्मंत्रमष्टद्रव्यैर्दशांशतः ॥ हुत्वापूर्वोदितेपीठेपूजयेद्गणनायकम् ॥ ११५ ॥ अङ्गार्चांपूर्ववत्प्रोक्ताशक्तीःपत्रेषुपूजयेत् ॥ वामाज्येष्ठाचरौद्रीस्यात्कालीकलपदादिका ॥ ११६ ॥ विकरिण्याह्वयातद्वद्बलाद्याप्रमथन्यपि ॥ सर्वभूतदमन्याख्यामनोन्मन्यपिचाग्रतः ॥ ११७ ॥ दिक्षुप्रमोदःसुमुखोदुर्मुखोविघ्ननाशकः ॥ दीर्घाद्यामातरःपूज्याइन्द्राद्याआयुधान्यपि ॥ ॥ ११८ ॥ एवंसिद्धेमनौकुर्यात्प्रयोगानिष्टसिद्धये ॥ वशयेत्कमलैर्भूपान्मन्त्रिणःकुमुदैर्हुतैः ॥ ११९ ॥ समिद्भिरश्वत्थदलसमुद्भूतैर्धरासुरान् ॥ उदुम्बरोत्थैर्नृपतीन्प्लक्षैर्वाटैर्विशोन्तिमान् ॥ १२० ॥ क्षौद्रेणकनकप्राप्तिर्गोप्राप्तिःपयसागवाम् ॥ ऋद्धिर्दध्योदनैरन्नंघृतैःश्रीर्वैतसैर्जलम् ॥ १२१ ॥

॥ ११८ ॥ ११९ ॥ चलद्दलोश्वत्थस्तस्यसमिद्भिर्धरासुरान्विप्रान्वशयेत् ॥ औदुंबरसमिद्भिर्नृपतीन्वशयेत् ॥ प्लक्षसमिद्भिर्वैश्यान् ॥ वटजाभिरंतिमान् शूद्रान् ॥ १२० ॥ १२१ ॥

हरिद्रागणेशमनुमाह ॥ तारइति ॥ तार ॐ ॥ वर्महुं ॥ गणेशोगं ॥ भूःग्लौं ॥ लोहितःपः॥ आषाढीतः॥सत्योदः ॥ तर्जनीनः ॥ स्वर्णरेतसोवल्लभास्वाहा ॥ स्वरूपमन्यत् ॥ यथा-ॐ हुंगंग्लौंहरिद्रागणपतयेवरवरदसर्वजनहृद

तारोवर्मगणेशोभूर्हरिद्रागणलोहितः॥आषाढीयेवरवरसत्यःसर्वजतर्जनी॥ १२२ ॥हृदयंस्तम्भय द्वंद्वंवल्लभांस्वर्णरेतसः॥द्वात्रिंशदक्षरोमंत्रोमदनोमुनिरीरितः ॥ १२३ ॥ छन्दोनुष्टुब्देवतातुहरिद्रागणनायकः॥वेदाष्टशरसप्ताङ्गनेत्रार्णैरङ्गमीरितम् ॥ १२४ ॥ पाशाङ्कुशौमोदकमेकदन्तंकरैर्दधानंकनकासनस्थम्॥हारिद्रखण्डप्रतिमंत्रिनेत्रंपीतांशुकंरात्रिगणेशमीडे ॥ १२५ ॥ वेदलक्षंजपित्वान्तेहरिद्राचूर्णमिश्रितैः॥दशांशंतण्डुलैर्हुत्वाब्राह्मणानपिभोजयेत् ॥ १२६ ॥ पूर्वोक्तपीठेप्रयजेदङ्गमातृदिशाद्यैः॥एवमाराधितोमंत्रस्सिद्धोयच्छेन्मनोरथान् ॥ १२७ ॥ शुक्लपक्षेचतुर्थ्यांतुकन्यापिष्टहरिद्रया॥विलिप्यांगंजलेस्नात्वापूजयेद्गणनायकम् ॥ १२८ ॥

यंस्तंभयस्तंभय स्वाहेतिद्वात्रिंशद्वर्णः ॥ १२२ ॥ १२३ ॥ षडंगमाह ॥ वेदेति ॥ १२४ ॥ ध्यानमाह ॥ पाशेति ॥ अंकुशमोदकौदक्षयोः ॥ पाशदन्तावन्ययोः ॥ रात्रिगणेशोहरिद्रागणपतिः ॥ १२५ ॥ १२६ ॥ १२७ ॥ १२८ ॥

१ अस्यहरिद्रागणनायकमंत्रस्यमदनऋषिःअनुष्टप्छन्दःहरिद्रागणनायकोदेवताममाभीष्टसिद्धयर्थेजपेविनियोगः ।

१२९ ॥ कुमारीरपीति॥भोजयेदित्यनेनान्वेति ॥ १३० ॥ १३१ ॥ १३२ ॥ १३३ ॥ मन्त्रांतरमाह ॥ शाङ्गींति ॥
शाङ्गींगः ॥ मांसस्थितःलकारस्थः ॥ ग्लमितिबीजं । हरिद्रागणपतेःपूजनंपूर्ववत् ॥१३४॥१३५ ॥ इतिमंत्रमहोदधि०

तर्पयित्वापुरस्तस्यसहस्रंसाष्टकंजपेत् ॥ शतंहुत्वाघृतापूपैर्भोजयेद्ब्रह्मचारिणः ॥१२९॥ कुमारीरपि
संतोष्यगुरुंप्राप्नोतिवांछितम् ॥ लाजैःकन्यामवाप्नोतिकन्यापिलभतेवरम् ॥१३०॥ वंध्यानारीरजः
स्नातापूजयित्वागणाधिपम् ॥ पलप्रमाणगोमूत्रेपिष्टाः सिंधुवचानिशाः ॥१३१॥ सहस्रंमंत्रयेत्कन्या
बटून्संभोज्यमोदकैः ॥ पीत्वातदौषधंपुत्रंलभतेगुणसागरम् ॥१३२॥ वाणीस्तम्भंरिपुस्तम्भंकुर्या
न्मनुरुपासितः ॥ जलाग्निचौरसिंहास्त्रप्रमुखानपिरोधयेत् ॥ १३३ ॥ शार्ङ्गीमांसस्थितःसेंदुर्बीजमु
क्तंगणेशितुः ॥ हरिद्राख्यस्ययजनंपूर्ववत्प्रोदितंमनोः ॥ १३४ ॥ प्रोक्ताएतेगणेशस्यमंत्राइष्टमभी
प्सता ॥ गोपनीयानदुष्टेभ्योवदनीयाःकथंचन ॥ १३५ ॥ इति श्रीमहीधरविरचितेमंत्रमहोदधौग
णेशमंत्रकथनंनामद्वितीयस्तरंगः ॥२॥ ॥छ॥ ॥ अथकालीमनून्वक्ष्येसद्योवाक्सिद्धिदायकान् ॥
आराधितैर्यैःसर्वेतंप्राप्नुवन्तिजनाभुवि ॥ १ ॥

नौकायांगणेशमंत्रकथनंनामद्वितीयस्तरङ्गः ॥ २ ॥ ॥ छ ॥ ॥ कालीमंत्रान्वक्तुंप्रतिजानीते ॥ अथेति ॥ १ ॥

१ हरिद्रा ।

मंत्रमुद्धरति ॥ क्रोधीशेति ॥ क्रोधीशः कः ॥ तस्यत्रयंवह्निवामाक्षिविधुभिः रेफईकारानुस्वारैर्युतम् ॥ तेनक्रीं
क्रींक्रीं ॥ वराहोहः ॥ वामकर्णं ऊं ॥ दक्षिणेस्वरूपं ॥ सृष्टिःकः ॥ दीर्घाआकारयुता ॥ क्रियालः ॥ सटक
इयुतः लिः ॥ चक्रीकः ॥ झिंटीशमारूढः एयुतःके ॥ प्रागुक्तं आदावुक्तं बीजानांसप्तकम् ॥ वह्निप्रियास्वाहा ॥

क्रोधीशत्रितयंवह्निवामाक्षिविधुभिर्युतम् ॥ वराहद्वितयंवामकर्णचन्द्रसमन्वितम् ॥ २ ॥ मायायुग्मं
दक्षिणेचदीर्घासृष्टिः सटक्क्रिया ॥ चक्रीझिंटीशमारूढः प्रागुक्तंबीजसप्तकम् ॥ ३ ॥ मंत्रोवह्निप्रियातो
यंद्वाविंशत्यक्षरोमतः ॥ नचात्रसिद्धसाध्यादिशोधनंमनसापिच ॥ ४ ॥ नयत्नातिशयः कश्चित्पुरश्च
र्यानिमित्तकः ॥ विद्याराज्ञ्याः स्मृतेरेवसिद्धचष्टकमवाप्नुयात् ॥ ५ ॥ भैरवोस्यऋषिश्छंदउष्णिक्काली
तुदेवता ॥ बीजंमायादीर्घवर्मशक्तिरुक्तामनीषिभिः ॥ ६ ॥ षड्दीर्घाढ्याद्यबीजेनविद्यायाअङ्गमीरि
तम् ॥ मातृकान्पंचधाभक्त्वावर्णान्दशदशक्रमात् ॥ ७ ॥

यथा ॥ क्रींक्रींक्रींहूँहूँह्रींह्रींदक्षिणेकालिकेक्रींक्रींक्रींहूँहूँह्रींह्रींस्वाहेति ॥ २ ॥ ३ ॥ ४ ॥ दीर्घवर्मेहूं ॥ ५ ॥ ६ ॥ 
षडंगमाह ॥ षडिति ॥ क्रांक्रीमित्यादि ॥ मातृकामिति ॥ अंआंइंईंउंऊंऋंॠंऌंॡं १० नमोहृदि ॥ एं १० दक्षभुजे ॥
डं १० वामभुजे ॥ णं १० दक्षपादे ॥ मं १० वामपादे इति ॥ ७ ॥

१ अस्यकालीमंत्रस्यभैरवऋषिः उष्णिक्छंदः कालीदेवताहुंबीजंहूंशक्तिः ममाभीष्टसिद्ध्यर्थेजपेविनियोगः ।

॥ ८ ॥ ध्यानमाह ॥ सद्यइति । खड्गवरौदक्षयोः ॥ सद्यश्छिन्नशिरोऽभयेवामयोः ॥ सृक्किणोरोष्ठप्रांतयोरसृजो

हृदयेभुजयोःपादद्वयेमंत्रीप्रविन्यसेत् ॥ व्यापकंमनुनाकृत्वाध्यायेच्चेतसिकालिकाम् ॥ ८ ॥ सद्य
श्छिन्नशिरःकृपाणमभयंहस्तैर्वरंबिभ्रतींघोरास्यांशिरसांस्रजासुरुचिरामुन्मुक्तकेशावलिम् ॥ सृक्कय
सृक्प्रवहांश्मशाननिलयांश्रुत्योःशवालंकृतिंश्यामांगींकृतमेखलांशवकरैर्देवींभजेकालिकाम् ॥ ९ ॥
एवंध्यात्वा जपेल्लक्षंजुहुयात्तद्दशांशतः ॥ प्रसूनैःकरवीरोत्थैःपूजायंत्रमथोच्यते ॥ १० ॥ आदौषट्कोण
मारच्यत्रिकोणत्रितयंततः ॥ पद्ममष्टदलंबाह्येभूपुरंतत्रपूजयेत् ॥ ११ ॥ जयाख्याविजयापश्चाद
जिताचापराजिता ॥ नित्याविलासिनीचापिदोग्ध्र्यघोराचमंगला ॥ १२ ॥ पीठशक्तयएताः स्युः
कालिकायोगपीठतः ॥ आत्मनेहृदयांतोयंमायादिःपीठमंत्रकः ॥ १३ ॥ अस्मिन्पीठेयजेद्देवींशवरू
पशिवस्थिताम् ॥ महाकालरतासक्तांशिवाभिर्दिक्षुवेष्टिताम् ॥ १४ ॥

रुधिरस्यप्रवाहोयस्यास्ताम् ॥ श्रुत्योः कर्णयोःशवालंकारयुताम् ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ पीठमंत्रमाह ॥ आत्म
नइति ॥ ह्रींआत्मनेनमइति ॥ १३ ॥ १४ ॥

---

१ इदंयंत्रंगौणं , मुख्येतुत्रिकोणपंचकंलेखनीयम् । २ ह्रींकालिकायोगपीठात्मनेनमः ।

॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ महदाद्यांमहाभैरवीम् ॥ सिंहाद्यांसिंहभैरवीम् ॥ धूम्रपूर्विकांधूम्रभैरवीम् ॥ भीमो

अंगानिपूर्वमाराध्यषट्पत्रेषुसमर्चयेत् ॥ कालींकपालिनींकुल्लांकुरुकुल्लांविरोधिनीम् ॥ १५ ॥ विप्र चित्तांचसंपूज्यनवकोणेषुपूजयेत् ॥ उग्रामुग्रप्रभांदीप्तांनीलांघनबलाकिके ॥ १६ ॥ मात्रांमुद्रांतथा मित्रांपूज्याःपत्रेषुमातरः ॥पद्मस्याष्टसुपत्रेषुब्राह्मीनारायणीत्यपि ॥ १७ ॥ माहेश्वरीचचामुंडाकौमा रीचापराजिता॥वाराहीनारसिंहीचपुनरेतास्तुभूपुरे ॥ १८ ॥ भैरवींमहदाद्यांतां सिंहाद्यांधूम्रपूर्विकाम् ॥ भीमोन्मत्तादिकांचापिवशीकरणभैरवीम् ॥ १९ ॥ मोहनाद्यांसमाराध्यशक्रादीनायुधान्यपि ॥ एवमाराधिताकालीसिद्धाभवतिमंत्रिणाम् ॥ २० ॥ ततःप्रयोगान्कुर्वीतमहाभैरवभाषितान् ॥ आ त्मनोर्थेपरस्यार्थेक्षिप्रसिद्धिप्रदायकान् ॥ २१ ॥ स्त्रीणांनिन्दांप्रहारंचकौटिल्यंवाप्रियंवचः ॥ आ त्मनोहितमन्विच्छन्कालीभक्तोविवर्जयेत् ॥ २२ ॥ सुदृशोमदनावासंपश्यन्यःप्रजपेन्मनुम् ॥ अयु तंसोचिरादेववाक्पतेःसमतामियात् ॥ २३ ॥

न्मत्तादिकांभीमभैरवींमुन्मत्तभैरवींच ॥ १९ ॥ मोहनाद्यां मोहनभैरवीम् ॥२०॥२१॥२२॥ मदनावासंभगम् ॥ २३ ॥

१ अंगार्चनमेकम् । काल्याद्याःषट्षट्अर्चयेदितिद्वितीयम् । उग्राद्यानवनवकोणेषुयजेदितितृतीयम् । अष्टपत्रेब्राह्म्याद्याअष्टयजेदितिचतुर्थम् ।भूपुरेऽष्टदि क्षुभैरव्याद्याअष्टयजेदितिपंचमम् ।

अधियामिनिरात्रौ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ त्रिगुणाःपंचाराःकोणायस्येदृशेपीठेमहाकालेनभर्त्रामारयुक्तं

दिगम्बरोमुक्तकेशः श्मशानस्थोधियामिनि ॥ जपेद्योयुतमेतस्यभवेयुःसर्वकामनाः ॥ २४ ॥ शावं
हृदयमारुह्यनिर्वासाःप्रेतभूगतः ॥ अर्कपुष्पसहस्रेणाभ्यक्तेनस्वीयरेतसा ॥ २५ ॥ देवींयःपूजयेद्भ
क्त्याजपन्नेकैकशोमनुम्॥सोचिरेणैवकालेनधरणीप्रभुतांव्रजेत्॥२६॥ रजःकीर्णंभगंनार्याध्यायन्यो
युतमाजपेत्॥सकवित्वेनरम्येणजनान्मोहयतिध्रुवम्॥२७॥त्रिपंचारेमहापीठेशवस्यहृदिसंस्थिताम् ॥
महाकालेनदेवेनमारयुक्तंप्रकुर्वतीम्॥२८॥तांध्यायन्स्मेरवदनांविदधत्सुरतंस्वयम् ॥ जपेत्सहस्रमपि
यःसशङ्करसमोभवेत्॥२९॥अस्थिलोमत्वचायुक्तंमांसंमार्जारमेषयोः ॥ उष्ट्रस्यमहिषस्यापिबलिंय
स्तुसमर्पयेत् ॥३०॥ भूताष्टम्योर्मध्यरात्रेवश्याःस्युस्तस्यजंतवः ॥ विद्यालक्ष्मीयशःपुत्रैःसचिरंसुख
मेधते॥३१॥योहविष्याशनरतोदिवादेवींस्मरञ्जपेत्॥ नक्तंनिधुवनासक्तोलक्षंसस्याद्धरापतिः॥३२॥
रक्तांभोजैर्हुतैर्मंत्रीधनैर्जयतिवित्तपम्॥बिल्वपत्रैर्भवेद्राज्यंरक्तपुष्पैर्वशीकृतिः॥३३॥ असृजामहिषा
दीनांकालिकांयस्तुतर्पयेत् ॥ तस्यस्युरचिराद्देवकरस्थाः सर्वसिद्धयः ॥ ३४ ॥

सुरतं कुर्वतीम् ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

५

॥ ३५ ॥ ३६ ॥३७॥ कालीमंत्रभेदानाह॥मायेति॥मायाह्रीं ॥ कूर्चंहूं ॥ करःस्वरूपम् ॥ शांतिरी ॥ विधुर्बिन्दुः ॥ क्रीं ॥ उक्तबीजानिव्युत्क्रमेण ॥ स्वरूपमन्यत् ॥ ॐ ह्रींह्रींहूँहूँक्रींक्रींक्रींदक्षिणकालिकेक्रींक्रींक्रींहूँहूँह्रींह्रीमित्येक



योलक्षंप्रजपेन्मंत्रंशवमारुह्यमंत्रवित् ॥ तस्यसिद्धोमनुःसद्यःसर्वेप्सितफलप्रदः ॥ ३५ ॥ तेनाश्वमेधप्रमुखैर्यागैरिष्टंसुजन्मना॥ दत्तंदानंतपस्तप्तंसमुपास्तेयस्तुकालिकाम्॥३६॥ब्रह्माविष्णुःशिवोगौरीलक्ष्मीर्गणपतीरविः॥पूजिताःसकलादेवायःकालींपूजयेत्सदा॥३७॥अथकालीमंत्रभेदाउच्यन्तेसिद्धिदायिनः॥मायायुगंकूर्चयुग्मंकरशांतिविधुत्रयम् ॥३८॥ दक्षिणेकालिकेपूर्वबीजानिस्युर्विलोमतः ॥ एकविंशतिवर्णात्मातारराद्यःपूर्ववद्यजिः ॥३९॥ बिल्वमूलेशवारूढोवटमूलेतथैवच ॥ लक्षंमनुमिमंजप्त्वासर्वसिद्धीश्वरोभवेत्॥४०॥कालीकूर्चंचहृल्लेखादक्षिणेकालिकेपठेत्।पुनर्बीजत्रयंवह्निवधूर्मन्वक्षरोमनुः॥४१॥यजनंपूर्ववत्प्रोक्तमस्यमन्त्रस्यमंत्रिभिः॥ विशेषान्नृसुरादीनामयमाकर्षणेक्षमः४२

विंशत्यर्णः ॥ ताराद्यःप्रणवाद्यः ॥ ३८ ॥ ३९ ॥ ४० ॥ मंत्रांतरमाह ॥ कालीति कालीक्रीं ॥ कूर्चंहूं ॥ हृल्लेखाह्रीं वह्निवधूःस्वाहा ॥ यथा ॥ क्रींहूँह्रींदक्षिणेकालिकेक्रींक्रींहूँह्रींस्वाहेति ॥ चतुर्दशार्णः ॥ ४१ ॥ ४२ ॥

मंत्रांतरमाह ॥कूर्चेति ॥ कूर्चंहूं २ ॥ क्रीं ३ ॥ ह्रीं २ ॥ दक्षिणेकालिकेपुनर्बीजानिस्वाहेति द्वाविंशत्यर्णः वशीकृतौ ॥ ॥ क्षमइतिशेषः ॥४३॥ मंत्रांतरमाह ॥ मंत्रराजेति ॥ क्रीं ३ हूं २ ह्रीं २ दक्षिणेकालिकेस्वाहेतिपंचदशार्णः ॥ ४४ ॥ मत्रांतरम् ॥ ब्रह्मेति ॥ ब्रह्माकः ॥ वामनेत्रेई ॥ क्रीं ॥ ४५ ॥ षडर्णमाह ॥ बीजमिति ॥ बीजंक्रीं ॥

कूर्चद्वंद्वंयंत्रयंकाल्यामायायुग्मंतुदक्षिणे ॥ कालिकेपूर्वबीजानिस्वाहामंत्रोवशीकृतौ ॥४३॥ मंत्रराजेपुनःप्रोक्तंबीजसप्तकमुत्सृजेत्॥ तिथिवर्णोमहामंत्रेउपास्तिःपूर्ववन्मता ॥ ४४ ॥ ब्रह्मरेफौवामनेत्रंचंद्रारूढंमनुर्मतः ॥ एकाक्षरोमहाकाल्याः सर्वसिद्धिप्रदायकः ॥ ४५॥ बीजंदीर्घयुतश्चक्रीपिनाकीनेत्रसंयुतः॥ क्रोधीशोभगवान्स्वाहाषडर्णोमंत्रईरितः॥४६॥कालीकूर्चंतथालज्जात्रिवर्णोमनुरीरितः ॥ हुंफडंतश्चपंचार्णःस्वाहांतःसप्तवर्णकः ॥ ४७ ॥ एतेषांपूर्ववत्प्रोक्तंयजनंनारदादिभिः ॥ निग्रहानुग्रहेशक्ताःकालीमंत्राःस्मृताइमे ॥ ४८ ॥

दीर्घयुतश्चक्रीका ॥ नेत्रयुतःपिनाकी लि । भगमेकारस्तद्युतःक्रोधीशःके । क्रींकालिकेस्वाहेति ॥४६॥ मंत्रांतरम्॥ कालीति ॥ क्रीं हूं ह्रीं ॥ क्रींहूंह्रींहुंफडितिपंचार्णः ॥ क्रींहूंह्रींहुंफट्स्वाहेतिसप्तार्णः ॥ ४७ ॥ ४८ ॥

१ हूंहूंक्रींक्रींक्रीं ह्रींह्रींदक्षिणेकालिकेहूंहूंक्रींक्रींक्रीं ह्रींह्रींस्वाहा । २ क्रींक्रींक्रींहूंहूंह्रींह्रींदक्षिणकालिकेस्वाहा ।

सुमुखींवक्तुंप्रतिजानीते ॥ अथेति ॥ ४९ ॥ मंत्रमुद्धरति ॥ कर्णेइति ॥ कर्णउ ॥ सनयनाद्युतिःइयुतश्छःच्छि ॥ जरासनः श्वेतेशः ॥ टकारस्थः षःष्टः ॥ लक्ष्मीश्चः ॥ दीर्घेन्दुसंयुक्ताआबिंदुयुताचां ॥ दीर्घोनंदीडा ॥ सद्दक्रिया इयुतोलः लि ॥ समाधवोमेषः इयुतोनःनि ॥ कर्णोभृगुःसः उयुतःसु ॥ सेंधिकातंद्रीमःउयुतोमु ॥ खिदे

अथवक्ष्येपरांविद्यांसुमुखीमतिगोपिताम् ॥ यांलब्ध्वादेशिकोविद्वान्नशोचतिकृताकृते॥४९॥ कर्णो द्युतिःसनयनाश्वेतेशःस्याज्जरासनः ॥ लक्ष्मीर्दीर्घेंदुसंयुक्तानंदीदीर्घःसद्दक्रिया ॥ ५० ॥ मेषः समाधवःकर्णोभृगुस्तंद्रीचसेंधिका ॥ खिदेविमवियद्दीर्घंपिशाचिनिर्हिमाद्रिजा ॥ ५१ ॥ नन्दजात्रितयंसर्गिद्वाविंशत्यक्षरोमनुः ॥ स्मृताभैरवगायत्रीसुमुखीमुनिपूर्विका ॥ ५२ ॥मुनिरामाद्रिषट्चंद्रेव हृयणैरंगकंमनोः ॥ विन्यस्यसुमुखींध्यायेद्भक्तचित्तांबुजस्थिताम् ॥ ५३ ॥

विम ॥ स्वरूपंदीर्घंवियत् ॥ हा पिशाचिनिस्वरूपम् ॥ हिमाद्रिजाह्रीं ॥ सर्गिनंदजत्रितयम् ॥ विसर्गयुक्तठकारत्रयम् ॥ यथा ॥ उच्छिष्टचांडालिनिसुमुखिदेविमहापिशाचिनिह्रींठःठःठःद्वाविंशत्यर्णः ॥ मुनिपूर्वाःऋषिच्छंदोदेवता ः॥ ५० ॥ ५१ ॥ ५२ ॥ षडंगमाह ॥ मुनाति ॥ ५३ ॥

१ अस्यसुमुखीमंत्रस्य भैरवऋषिर्गायत्रीच्छंदः सुमुखीदेवताममाभीष्टसिद्ध्यर्थेजपेविनियोगः ॥

ध्यानमाह ॥ गुंजेति ॥ एवंविधांसुमुखींध्यायतांनृणांसर्वदासंपदःस्युरित्यन्वयः ॥ खड्गलतादक्षे कपालंवामे॥ ५४ ॥

गुंजानिर्मितहारभूषितकुचांसद्योवनोल्लासिनींहस्ताभ्यांनृकपालखड्गलतिकेरम्येमुदाबिभ्रतीम् ॥रक्ता लंकृतिवस्त्रलेपनलसद्देहप्रभांध्यायतांनृणांश्रीसुमुखींशवासनगतांस्युःसर्वदासंपदः ॥ ५४ ॥ लक्षमेकं जपेन्मंत्रंदशांशंकिंशुकोद्भवैः ॥ पुष्पैःसमिद्भिर्वापिजुहुयान्मंत्रसिद्धये ॥५५॥ कालीपीठेयजेद्देवीं पंचकोणाढ्यकर्णिके ॥ अष्टपत्रेषोडशाब्जेवृत्तेभूपुरसंयुते ॥ ५६॥ मूलेनमूर्तिसंकल्प्यपाद्यादीनिप्र कल्पयेत् ॥ चंद्रांचद्रानननांचारुमुखींचामीकरप्रभाम् ॥ ५७॥ चतुरंपंचकोणेषुकेसरेष्वङ्गदेवताः ॥ ब्राह्म्याद्याअष्टपत्रेषुषोडशारेकलादिकाः ॥ ५८ ॥ कलाकलानिधिःकालीकमलाचक्रियाकृपा ॥ कुलाकुलीनाकल्याणीकुमारीकलभाषिणी ॥ ५९ ॥ करालाख्याकिशोरीचकोमलाकुलभूषणा ॥ कल्पदाभूपुरेपूज्याइन्द्राद्याहेतयोपिच ॥ ६० ॥ इत्थंजपादिभिःसिद्धेमनौकाम्यानिसाधयेत् ॥ भुक्त्वौदनमनाचम्यजपेन्मंत्रमनन्यधीः ॥ ६१ ॥

॥ ५५ ॥ कर्णिकायांपंचकोणम् ॥ उपर्यष्टपत्रम् ॥ तदुपरि षोडशदलम् ॥ तदुपरिचतुष्कोणमितिपूजायंत्रम् ॥ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ प्रयोगानाह ॥ भुक्त्वेति ॥ ६१ ॥

॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ उन्मत्तो धत्तूरः ॥ छदैः पक्षैः ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥



उच्छिष्टोयुतमेकंयःसभवेत्संपदांपदम् ॥ उच्छिष्टेनैवभक्तेनबलिंदद्यान्निरंतरम् ॥ ६२ ॥ दध्नाभ्यक्तैः
प्रजुहुयाल्लक्षंसिद्धार्थतंडुलैः ॥ राजानोमंत्रिणस्तस्यभवंतिवशगाःक्षणात् ॥ ६३ ॥ शस्त्राणिवशगा
निस्युर्हुतान्मार्जारमांसतः ॥ धनार्द्धिश्छागमांसेनविद्याप्राप्तिस्तुपायसैः ॥ ६४ ॥ मधुपायससंयुक्त
स्त्रीरजोयुक्तवाससा ॥ होममाचरतःपुंसोजनतावशवर्तिनी ॥ ६५ ॥ मधुसर्पिर्युतैर्नागवल्लीपत्रैर्महा
श्रियः ॥ सद्योनिहतमार्जारमांसेनमधुसर्पिषा ॥ ६६ ॥ युक्तेनांत्यजकेशाद्यैर्हुतैराकर्षतिस्त्रियः ॥
मध्वक्तशशमांसेनतत्फलंविद्ययासह ॥ ६७ ॥ उन्मत्ततरुभिर्दीप्तेचिताग्नौजुहुयाच्छदैः ॥ कोकिला
काकयोर्मंत्रीमाचरेदचिरादरीन् ॥ ६८ ॥ वायसोलूकयोःपत्रैर्होमाद्विद्वेषयेदरीन् ॥ गर्भपातःसगर्भा
णामुलूकच्छदनैर्भवेत् ॥ ६९ ॥ आज्याक्तैर्बिल्वपत्रैर्योमासमेकंसहस्रकम् ॥ प्रत्यहंजुहुयात्तेनवंध्या
पिलभतेसुतम् ॥ ७० ॥ सौभाग्यार्थंदुर्भगायाबंधूककुसुमैर्नवैः ॥ मधुनाक्तैःप्रजुहुयात्स्त्रीणामाकृष्टये
र्पितैः ॥ ७१ ॥ निर्जनेसदनेऽरण्येप्रेतावासेचतुष्पथे ॥ बलिंदत्त्वाप्रजपतःसहस्रंचाष्टसंयुतम्॥७२॥

उच्छिष्टस्यबलिंदत्त्वेतिपूर्वेणान्वयः ॥७३॥ ७४ ॥ ७५ ॥ इतिमन्त्रमहोदधिव्या०नौकायांतृतीयस्तरंगः ॥ ३ ॥ छ. ॥
तारांवक्तुमुपक्रमते ॥ कीर्त्यन्तइति ॥ १ ॥ मन्त्रमुद्धरति ॥ आप्यायिनीति ॥ सरात्रीशा आप्यायिनी सत्रिं
दुरोंकारः ॐ ॥ अग्नींदुशांतियुग्वियत् रेफबिंदुईयुतोहः ह्रीं ॥ पावकगोविंदचन्द्रमोभिरलंकृतोहरिः रेफ

उच्छिष्टस्यचसादेवीप्रत्यक्षाजायतेचिरात्॥यत्रनोक्ताहोमसंख्यायुतंतत्रविनिर्दिशेत्॥७३॥वाममा
र्गेणसुमुखीशीघ्रंकामविधायिनी ॥ भोजनांतेतथोच्छिष्टैर्जप्यासास्वेष्टसिद्धये॥७४॥ नशीघ्रफलदा
देवीसुमुखीसदृशीपरा॥यस्यामंत्रजपादेवप्रसिध्यंतिमनोरथाः ॥७५॥ इतिश्रीमहीधरविरचितेमंत्रम
होदधौकालीसुमुखीमंत्रोक्तिस्तृतीयस्तरंगः॥ ३ ॥छ॥ कीर्त्यन्तेसिद्धिदातारस्तारायामनवोधुना॥
गुरूपदेशाज्ज्ञातैर्यैःकृतार्थाःस्युर्नराभुवि ॥ १ ॥ आप्यायिनीसरात्रीशावियदग्नींदुशांतियुक्॥हरिः
पावकगोविंदचंद्रमोभिरलंकृतः ॥२॥ खमघींशशशांकाढ्यमस्त्रंपंचाक्षरोमनुः॥ आदिबीजवियुक्तै
षाप्रोदितैकजटादिमैः ॥ ३ ॥

ईबिंदुयुतस्तकारः त्रीं ॥ गोविंदईकारः ॥ २ ॥ अर्घीशशशांकाढ्यंखं ॥ उबिंदुयुतोहः हुं ॥ अस्त्रंफट् ॐ ॥
ह्रींत्रींहुंफडितिपंचार्णः ॥ मत्रांतरमाह ॥ आदीति ॥ इयमेवाविद्या आदिबीजेन ॐकारेणवियुक्तारहितासती
आदिमैःपूर्वाचार्यैरेकजटाप्रोदिता—ह्रींत्रींहुंफडिति ॥ ३ ॥

आद्यंतबीजाभ्यां ॐफड्भ्यांरहितानीलसरस्वतीसैव-ह्रींत्रींहुंइति ॥ सर्वांतुतारा ॥ ४ ॥. द्वितीयतुर्येह्रींहुमिति



आद्यंतबीजरहिताप्रोक्तानीलसरस्वती ॥ तारासर्वामनोरस्यमुनिरक्षोभ्यसंज्ञकः ॥ ४ ॥ छंदस्तुबृहतीतारादेवतापरिकीर्तिता॥द्वितीयतुर्येक्रमतोबीजंशक्तिश्चसिद्धिदे ॥५॥ यद्वाक्रोधोबीजमुक्तमत्रंशक्तिरुदाहृता ॥ षड्दीर्घयुग्द्वितीयेनषडंगविधिरीरितः॥६॥षोढान्यासंततःकुर्याद्देवताभावसिद्धये ॥ देयंभक्तायशिष्यायनदेयंतुदुरात्मने ॥७॥ श्रीकंठादीन्न्यसेद्रुद्रान्मातृकावर्णपूर्वकान् ॥ मातृकोक्तस्थलेमायातृतीयक्रोधपूर्वकान् ॥ ८ ॥ चतुर्थीनमसायुक्तान्प्रथमोन्यासईरितः ॥ शवपीठसमासीनांनीलकांतिंत्रिलोचनाम् ॥ ९ ॥

क्रमाद्बीजंशक्तिश्च ॥ ५ ॥ षडंगमाह ॥ षडिति ॥ ह्रांह्रीमित्यादि ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥



---

१ अस्यतारामंत्रस्यअक्षोभ्यऋषिःबृहतीछंदःतारादेवताह्रींबीजंहुंशक्तिः ममाभीष्टसिद्ध्यर्थेजपेविनियोगः।२ श्रीकण्ठादिनामानिएकाविंशतितरंगेवक्ष्यंते। प्रयोगस्तु-ह्रींत्रींहुंआंश्रीकंठायनमोललाटे । ह्रींत्रींहुंआंअनंतायनमोमुखे । एवंसर्वत्र ।

अर्द्धेन्दुशेखरांनानाभूषणाढ्यांस्मरन्न्यसेत्॥ द्वितीयन्तुग्रहन्यासंकुर्यात्तांसमनुस्मरन् ॥ १० ॥ त्रिबीजस्वरपूर्वंतुरक्तंसूर्यंहृदिन्यसेत्॥ तथायवर्गपूर्वंतुसोमंशुक्लंभ्रुवोर्द्वयोः॥ ११॥ कवर्गपूर्वंरक्ताभंमंगलंलोचनत्रये॥ चवर्गाढ्यंबुधंश्यामंन्यसेद्वक्षःस्थलेबुधः ॥ १२ ॥ टवर्गाढ्यंपीतवर्णंकंठकूपेबृहस्पतिम्॥ तवर्गाढ्यंश्वेतवर्णंघंटिकायांतुभार्गवम्। १३॥ नीलवर्णंपवर्गाढ्यंनाभिदेशेशनैश्चरम्। शवर्गाढ्यंधूम्रवर्णंध्यात्वाराहुंमुखेन्यसेत्॥ १४॥ लक्षाढ्यंधूम्रवर्णाभंकेतुंनाभौपुनर्न्यसेत् ॥ त्रिबीजपूर्वकश्चैवंग्रहन्यासः समीरितः। १५। तृतीयंलोकपालानांन्यासंकुर्यात्प्रयत्नतः॥ मायादिबीजत्रितयपूर्वकंसर्वसिद्धये॥ १६॥

॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

---

१ ह्रींत्रींहुंअंआंइंईंउंऊंऋंॠंलृंलॄंएंऐंओंऔंअंअः रक्तवर्णसूर्यंहृदि । १ ह्रींत्रींहुंयंरंलंवंशुक्लवर्णंसोमंभ्रुवोर्द्वये । २ ह्रींत्रींहुंकंखंगंघंङंरक्तवर्णंमंगलंलोचनत्रये ॥ ३ ॥ ह्रींत्रींहुंचंछंजंझंञंश्यामवर्णंबुधंवक्षःस्थले ॥४॥ ह्रींत्रींहुंटंठंडंढंणंपीतवर्णंबृहस्पतिंकंठकूपे ॥ ५ ॥ ह्रींत्रींहुंतंथंदंधंनंश्वेतवर्णं भार्गवंघंटिकायाम् ॥ ६ ॥ ह्रींत्रींहुंपंफंबंभंमंनीलवर्णंशनैश्चरंनाभिदेशे ॥ ७ ॥ ह्रींत्रींहुंशंषंसंहंधूम्रवर्णंराहुंमुखे ॥ ८ ॥ ह्रींत्रींहुंलंक्षंधूम्रवर्णंकेतुंनाभौ ॥ ९ ॥ इतिग्रहन्यासः ॥ २ ॥ ह्रींत्रींहुंअंइंउंऋंलृंएंओंअंललाटपूर्वेइन्द्रायनमः ॥ १ ॥ ह्रींत्रींहुंआंईंऊंॠंलॄंऐंऔंअः ललाटाग्नेय्यांदिशिअग्नये नमः ॥ २ ॥ ह्रींत्रींहुंकंखंगंघंङंललाटदक्षिणे यमाय नमः ॥ ३ ॥ ह्रींत्रींहुंचंछंजंझंञंललाटनैर्ऋत्यांदिशिनिर्ऋतयेनमः ॥ ४ ॥ ह्रींत्रींहुंटंठंडंढंणंललाटपश्चिमायांदिशिवरुणायनमः॥ ५ ॥ ह्रींत्रींहुंतंथंदंधंनं ललाटवायव्यांदिशि वायवे नमः ॥ ६ ॥ ह्रींत्रींहुंपंफंबंभंमंललाटोत्तरस्यांदिशिसोमायनमः ॥ ७ ॥ ह्रींत्रींहुंयंरंलंवंललाटैशान्यांदिशिईशानायनमः ॥ ८ ॥ ह्रींत्रींहुंशंषंसंहंललाटोर्ध्वायांदिशिब्रह्मणेनमः ॥ ९ ॥ ह्रींत्रींहुंलंक्षंललाटाधोदिशिअनंतायनमः ॥ १० ॥ इतिदिक्पालन्यासः ॥

स्वमस्तकेललाटादौदशदिक्ष्वधऊर्ध्वतः ॥ह्रस्वदीर्घकादिकाष्टवर्गपूर्वान्दिशाधिपान् ॥ १७ ॥
शिवशक्त्यभिधन्यासंचतुर्थंतुसमाचरेत्॥त्रिबीजपूर्वकान्न्यस्येत्षट्शिवाञ्छक्तिसंयुतान् ॥ १८ ॥
आधारादिषुचक्रेषुचक्रस्थाक्षरपूर्वकान्॥ब्रह्माणंडाकिनीयुक्तंवादिसांतार्णभूषितम् ॥१९॥ मूलाधारे
प्रविन्यस्येच्चतुर्दलसमन्विते॥श्रीविष्णुंराकिनीयुक्तंवादिलांतार्णपूर्वकम्॥ २० ॥ स्वाधिष्ठानाभिधे
चक्रेलिंगस्थेषड्दलेन्यसेत्॥रुद्रंतुलाकिनीयुक्तंडादिफांतार्णपूर्वकम् ॥ २१ ॥

॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

---

१ ह्रींत्रींहुंवंशंषंसंडाकिनीयुतब्रह्माणंचतुर्दलसमान्वितमूलाधारेन्यसेत्॥१॥ह्रींत्रींहुंबंभंमंयंरंलंराकिनियुतश्रीविष्णुर्लिंगस्थषड्दलेस्वाधिष्ठानचक्रेन्यसेत्॥ २ ॥ ह्रींत्रींहुंडंढंणंतंथंदंधंनंपंफंराकिनीयुतरुद्रंदशदलचक्रेनाभिस्थेमणिपुरकेन्यसेत् ॥ ३ ॥ह्रींत्रींहुंकंखंगंघंङंचंछंजंझंञंटंठंकाकिनीयुतमीश्वरंअनाहतेद्वादशदलेचक्रेहृदिन्यसेत् ॥ ४ ॥ ह्रींत्रींहुंअंआंइंईंउंऊंऋंॠंऌंॡंएंऐंओंऔंअंअः शाकिनीयुतसदाशिवंविशुद्धाख्यषोडशदले कंठस्थेविन्यसेत् ॥ ५ ॥ ह्रींत्रींहुंहंक्षंहाकिनीयुतं परशिवमाज्ञाचक्रेमनोहरेभ्रूमध्यसंस्थितेप्रविन्यसेत् ॥ ६ ॥ इतिषट्चक्रन्यासः ॥

चक्रेदशदलेन्यस्येन्नाभिस्थेमणिपूरके ॥ ईश्वरंकादिठांतार्णपूर्वंकंकाकिनीयुतम् ॥२२॥ विन्यसेद्वादशदलेहृदयस्थेत्वनाहते॥सदाशिवंशाकिनींचषोडशस्वरपूर्वकम् ॥ २३ ॥ कंठस्थेषोडशदलेविशुद्धाख्येप्रविन्यसेत्॥आज्ञाचक्रेपरशिवंहाकिनीसंयुतंजपेत् ॥ २४ ॥ लक्षार्णपूर्वंभ्रूमध्येसंस्थितेतिमनोहरे॥तारादिपंचमंन्यासंकुर्यात्सर्वेष्टसिद्धये ॥ २५ ॥ अष्टौवर्गान्स्वरद्वंद्वपूर्वकान्बीजसंयुतान्॥ पूर्वंप्रयोज्यताराद्यान्यस्तव्याअष्टमूर्तयः ॥ २६ ॥ ताराउग्रामहोग्रापिवज्राकालीसरस्वती॥कामेश्वरीचचामुण्डाइत्यष्टौतारिकाःस्मृताः ॥ २७ ॥ ब्रह्मरन्ध्रेललाटेचभ्रूमध्येकंठदेशतः ॥ हृदिनाभौलिंगमूलेमूलाधारेक्रमान्न्यसेत् ॥ २८ ॥

॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

---

१ ह्रींत्रींहुंअंआंकंखंगंघंङं तारायैनमोब्रह्मरंध्रे । ह्रींत्रींहुंइंईंचंछंजंझंञंउग्रायैनमोललाटे । ह्रींत्रींहुँउंऊंटंठंडंढंणंमहोग्रायैनमोभ्रूमध्ये । ह्रींत्रींहुंऋंॠंतंथंदंधंनंवज्रायै नमःकंठदेशे । ह्रींत्रींहुंऌंॡंपंफंबंभंमंमहाकाल्यैनमोहृदि । ह्रींत्रींहुंएंऐंयंरंलंवंशंसरस्वत्यैनमोनाभौ । ह्रींत्रींहुंओंऔंशंषंसंहंकामेश्वर्यैनमोलिंगमूले । ह्रींत्रींहुंअंअःलंक्षंचामुंडायैनमोलिंगमूले ॥ इतितारादिन्यासः ॥

षष्ठंन्यासंततःकुर्यात्पीठाख्यंसर्वसिद्धिदम् ॥ आधारेकामरूपाख्यंह्रस्वबीजार्णपूर्वकम् ॥ २९ ॥ हृदिजालंधरंपीठंदीर्घपूर्वंप्रविन्यसेत् ॥ ललाटेपूर्णगिर्य्याख्यंकवर्गाद्यंचन्यसेत्सुधीः ॥ ३० ॥ उड्डियानंचवर्गाद्यंकेशसंधौप्रविन्यसेत्॥भ्रुवोर्वाराणसीपीठंटवर्गाद्यंसमाहितः ॥ ३१ ॥ तवर्गपूर्विकांन्यस्येदवन्तींनयनद्वये ॥ पवर्गपूर्वकंमायापुरीपीठंमुखेन्यसेत् ॥३२॥ कण्ठेतुमथुरापीठंयवर्गाद्यंप्रविन्यसेत् ॥ अयोध्यापीठकंनाभौशवर्गादिकमुत्तमम् ॥ ३३ ॥ कट्योः कांचीपुरीपीठंदशमंतुप्रविन्यसेत् ॥ षोढान्यासास्तुतारायाःप्रोक्तास्तेइष्टदायकाः ॥ ३४ ॥

॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

---

१ ह्रीं ३ अंइंउंऋंलृंएंओंअंकामरूपपीठायनमआधारे । ह्रीं ३ आंईंऊंॠंलॄंऐंऔंअःजालंधरपीठायनमोहृदि । ह्रीं ३ कंखंगंघंङंपूर्णगिरिपीठायनमोललाटे । ह्रीं ३ चंछंजंझंञंउड्डियानपीठायनमः केशसंधौ । ह्रीं ३ टंठंडंढंणंवाराणसीपीठायनमोभ्रुवोः । ह्रीं ३ तंथंदंधंनंअवंतिपीठायनमोनयनद्वये । ह्रीं ३ पंफंबंभंमंमायापुरीपीठायनमः मुखे। ह्रीं ३ यंरंलंवंमथुरापीठायनमःकंठे । ह्रीं ३ शंषंसंहंअयोध्यापीठायनमोनाभौ । ह्रीं ३ लंक्षंकांचीपुरीपीठाय नमः कट्योः ॥ इतिपीठन्यासः ॥

॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ध्यानमाह ॥ विश्वेति ॥ खड्गनीलसरोजेदक्षयोः ॥ कर्त्रींकपालेवामयोः ॥ ३९ ॥ श्वेतो

श्रीमतींहृद्येकजटांतारिणींशिरसिन्यसेत् ॥ वज्रोदकांशिखायांतुउग्रतारांतुवर्मणि ॥ ३५ ॥ महाप रिसरांनेत्रेपिंगोग्रैकजटेस्त्रके ॥ षड्दीर्घयुक्तमायाद्याएतान्यस्याःषडंगके॥३६॥ अंगुष्ठादिष्वंगुलीषु पूर्वंविन्यस्ययत्नतः ॥ तर्जनीमध्यमाभ्यांतुकृत्वातालत्रयंततः ॥३७॥ छोटिकामुद्रयाकुर्यादिग्बंधंदे वतांस्मरन् ॥ विद्ययातारपुटयाव्यापकंसप्तधाचरेत् ॥ उग्रांताराततोध्यायेत्सद्योवाक्सिद्धिदायिनीम् ॥ ३८ ॥ विश्वव्यापकवारिमध्यविलसच्छ्वेतांबुजन्मस्थितांकर्त्रींखड्गकपालनीलनलिनैराजत्करांनी लभाम् ॥ कांचीकुंडलहारकंकणलसत्केयूरमंजीरतामाप्तैर्नागवरैर्विभूषिततनूमारक्तनेत्रत्रयाम्॥३९॥ पिंगोग्रैकजटांलसत्सुरसनांदंष्ट्राकरालाननांचर्मद्वैपिवरंकटौविदधतींश्वेतास्थिपट्टालिकाम्।अक्षोभ्ये णविराजमानशिरसंस्मेराननांभोरुहांताराशावहृदासनांदृढकुचामंबांत्रिलोक्याःस्मरेत् ॥ ४० ॥

ऽस्थिपटोऽलिकेललाटेयस्यास्ताम् ॥ अक्षोभ्योमंत्रद्रष्टामुनिस्तेनशोभितमस्तकाम् ॥ ४० ॥

१ ह्रांत्रांह्रांएकजटायै हृदयायनमः ॥ १ ॥ ह्रांत्रांह्रांतारिण्यै शिरसेस्वाहा ॥ २ ॥ ह्रांत्रांह्रांवज्रोदकायै शिखायैवषट् ॥ ३ ॥ ह्रांत्रांह्रांउग्रतारायै कवचायहुं ॥ ॥ ४ ॥ ह्रांत्रांह्रांमहापरिसरायैनेत्रत्रयायवौषट् ॥ ५ ॥ १ ॥ ह्रांत्रांह्रांएकजटायै अंगुष्ठाभ्यांनमः ॥२॥ ह्रांत्रांह्रांतारिण्यै तर्जनीभ्यांस्वाहा ॥ ३॥ ह्रांत्रांह्रांवज्रो दकायै मध्यमाभ्यांवषट् ॥ ४ ॥ ह्रांत्रांह्रांउग्रतारायैअनामिकाभ्यांहुं ॥ ५ ॥ ह्रांत्रांह्रांमहापरिसरायै कनिष्ठिकाभ्यांवौषट् ।

॥ ४१ ॥ महाशंखंकपालम् ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ पीठमंत्रमुद्धरति ॥ भृग्विति ॥ भृगुर्भंबिंदुसं

सकारः औंबिंदुयुतम् ॥ मेघवर्त्मेहः ॥ हार्दनमैः ॥ स्वरूपमन्यत् ॥ स ह्रौंसरस्वत्यैयोगपीठात्मनेनमइति ॥

एवंध्यायन्नदन्भक्ष्यमनेकंदधिमध्वपि ॥ मधुमांसचतांबूलजपेल्लक्षचतुष्टयम् ॥ ४१ ॥ महाशंखकुसु

द्रक्तपद्मैःक्षीराज्यलोलितैः॥स्थापयित्वामहाशंखंजपस्थानेजपंचरेत् ॥४२॥ नारीप

न्महानिशिबलिंदद्देत्॥नकार्यःसुक्षुत्क्षीपोयत्नात्ताःपूजयेत्सदा ॥४३॥ जपे

वंदाजपेत् ॥ श्मशानेशून्यसदनेदेवागारेऽथनिर्जने ॥ ४४ ॥ पर्वतेवनमध्येवा

समरेशत्रुनिहतंयद्वापाण्मासिकंशिशुम् ॥ ४५ ॥ विद्यांसंसाधयेच्छीघ्रंसाधितेवंशसिध्यति ॥

ज्ञाप्रभाविद्याधीर्धृतिस्मृतिबुद्धयः ॥ ४६ ॥ विद्येश्वरीतिसंप्रोक्ताःपीठस्यनवशक्तयः ॥ भृगुर्भंगंबिंदुसं

युक्तंमेघवर्त्मसरस्वती ॥ ४७ ॥ योगपीठात्मनेहार्दंपीठस्यमनुरीरितः ॥ ४८ ॥ दत्त्वानेनासनंमूर्तिंमू

लमंत्रेणकल्पयेत् ॥ पूजयेद्विधिवद्देवींतद्विधानमथोच्यते ॥४९॥ तारोमायाभगंब्रह्माजटेसूर्यःसदीर्घ

खम् ॥ यक्षाधिपतयेतद्रीमोपनीतंबलिंततः ॥ ५० ॥

॥ ४८ ॥ ४९ ॥ नित्यबलिदानमंत्रमाह ॥ तारइति ॥ तारः प्रणवः ॥ मायाह्रीं ॥ भगमेकारः ॥ ब्रह्माकः ॥
जटेस्वरूपम् ॥ सूर्योमः ॥ सदीर्घखंहा ॥ तंद्रीमः शिवाह्रीं ॥ स्वरूपमन्यत् ॥ यथा—ॐ ह्रींएकजटे महायक्षा-
धिपतयेममोपनीतंबलिंगृह्णगृह्णह्रींस्वाहेति ॥ अनेनानित्यंनिशीथेबलिंदद्यात् ॥ ५० ॥

॥ ५१ ॥ जलग्रहणादिमंत्रानुद्धराति ॥ ध्रुवइति ॥ ॐवज्रोदकेहुंफाडितिजलग्रहणमंत्रः ॥ ५२ ॥ तारोति ॐह्रीं स्वाहेतिपादक्षालनमंत्रः ॥ तारइति ॥ कर्णीभृगुः उयुतः सः ॥ ५३ ॥ श्वेतः षः नेत्रयुतंजलम्‌वि ॥ स्वरूपमन्यत॥ ॐह्रीं सुविशुद्धधर्मसर्वपापानिशाम्याशेषविकल्पानपनयस्वाहेत्याचमनमंत्रः ॥ ५४ ॥ ध्रुवइति ॥ अक्षियुतोमृत्युः

गृह्णयुग्मंशिवास्वाहाबलिमन्त्रोयमीरितः ॥ दद्यान्नित्यबलिंतेनमध्यरात्रेचतुष्पथे॥५१॥जलदाना
दिकंमंत्रैर्विदध्याद्दशभिस्ततः ॥ ध्रुवोवज्रोदकेवर्मफट्सप्तार्णैर्जलग्रहः ॥ ५२ ॥ तारश्चावह्निजायां
तामायांघ्रिक्षालनेस्मृता ॥ तारोमायाभृगुः कर्णीविशुद्धधर्मवर्णतः ॥ ५३ ॥ सर्वपापानिशाम्याशे
श्वेतोनेत्रयुतंजलम् ॥ कल्पानपनयस्वाहाषड्विंशत्यक्षरोमनुः ॥ ५४ ॥ अनेनाचमनंकुर्याद्ध्रुवो
मणिधरीतिच ॥ वज्रिण्यक्षियुतोमृत्युःखरिनेत्रयुतारतिः ॥ ५५ ॥ सर्वांतेवकःसेंदुःकारिण्यंतेशिरो
र्धिखम् ॥ अस्त्रवह्निप्रियामंत्रस्त्रयोविंशतिवर्णवान् ॥ ५६ ॥

रिशि ॥ नेत्रयुतारतिः णि ॥ ५५ ॥ वकः शं ॥ शिरः कं ॥ अर्धि सेंदुः खं ॥ बिंदुयुतोहः हुं ॥ अस्त्रंफट् ॥ वह्निप्रिया स्वाहा ॥ स्वरूपमन्यत् ॥ यथाॐमणिधरिवज्रिणिशिखरिणिसर्ववशंकारिणिकंहुंफट्स्वाहेतिशिखा बंधनमंत्रः ॥ ५६ ॥

प्रणवइति ॥ दीर्घवर्महूं ॥ अस्त्रंफट् ॥ ठद्वयस्वाहा ॥ ॐरक्ष २ हूंफट्स्वाहेतिभूशोधनमंत्रः ॥ तारेति ॥ ॐसर्व विघ्नानुत्सारयहुंफट्स्वाहेतिविघ्नवारणमंत्रः ॥ ५७ ॥ ५८ ॥ ५९ ॥ भूतशुद्धिमाह ॥ मायेति ॥ ६० ॥ ६१ ॥

शिखाबंधंप्रकुर्वीतमंत्रेणानेनमंत्रवित् ॥प्रणवोरक्षयुगलंदीर्घवर्मास्त्रठद्वयम्॥५७॥नववर्णेनमंत्रेणकुर्याद्भूमिविशोधनम्॥तारान्तेसर्वविघ्नानुत्सारयेतिपदंततः॥५८॥हुंफट्स्वाहागुणद्वर्णोमनुर्विघ्ननिवारणे॥ अनेनविघ्नानुत्सार्यभूतशुद्धिमथाचरेत्॥५९॥मायाबीजंजपापुष्पनिभंनाभौविचिंतयेत्॥तदुत्थेनाग्निनादेहंदहेत्साकंस्वपाप्मना॥६०॥ताराबीजंसुवर्णाभंचिंतयेद्धृदिमंत्रवित् ॥पवनेनतदुत्थेनपापभस्मक्षिपेद्भुवि॥६१॥तुरीयंचंद्रकुंदाभंबीजंध्यात्वाललाटतः॥तदुत्थसुधयादेहंरचयेद्देवतानिभम् ॥६२॥ अनयाभूतशुद्ध्यातुदेवीसादृश्यमाप्नुयात् ॥ तारः पवित्रवज्रेतिभूमेघींशेंदुयुग्वियत् ॥ ६३॥वह्निप्रियामनुः प्रोक्तोरुद्रार्णोभूमिमंत्रणे॥तारोनंतोभृगुः कर्णीपद्मनाभयुतोबली ॥६४॥ खेवज्ररेखेक्रोधाख्यंबीजंपावकवल्लभा ॥ द्वादशार्णेनमंत्रेणरचयेन्मंडलंशुभम् ॥ ६५ ॥

तुरीयामीति ॥ हूं ॥ ६२ ॥ तारइति ॥ अघींशेन्दुयुक्वियत् ॥ ऊबिंदुयुतोहः हूं ॥ ॐपवित्रवज्रभूमेहूंस्वाहेति भूमिनिमंत्रणमंत्रः ॥ ६३ ॥ तारइति अनंतआ कर्णीभृगुः ॥ सु ॥ पद्मनाभयुतोबली एयुतोरः रे ॥ क्रोधबीजम् हुं ॥ ॐ आसुरेखेवज्ररेखेहुंस्वाहेतिमंडलमंत्रः ॥ ६४ ॥ ६५ ॥

तारइति ॥ सहक्निद्रा इयुतोमः भिः ॥ भृगुःसः ॥ विषंमः ॥ सदीर्घमायुतम् ॥ स्मृतिरोंगकाररेफौ सा
क्षौइयुतौग्नि ॥ भगान्वितोमहाकालः एयुतोमः ॥ ६६ ॥ क्रोधोहुं ॥ अस्त्रंफट् ॥ ॐयथागताभिषेकसमाग्निमंहुंफडि
तिपुष्पशोधनमंत्रः ॥ तारइति ॥ पाशआं ॥ पराह्रीं ॥ ॐआंह्रींस्वाहेतिचित्तशोधनमंत्रः ॥ ६७ ॥ अर्घ्यस्था
पनमाह ॥ सेंदुभ्यामिति ॥ मांसलः ॥ तोयंवः ॥ ६८ ॥ साबिंदुभ्यामाभ्यांभूमिंसंशोध्यपूर्वोक्तेनमंडलमंत्रेणवृत्तंत्रि

तारोयथागतानिद्रासहक्षेकभृगुर्विषम्॥सदीर्घस्मृतिरौसाक्षौमहाकालोभगान्वितः ॥ ६६ ॥ क्रोधो
स्त्रंमनुवर्णोयंमनुःपुष्पादिशोधने॥तारःपाशपरास्वाहापंचार्णश्चित्तशोधने ॥ ६७ ॥ मनवोदशसं
प्रोक्ताअर्घ्यस्थापनमुच्यते॥ सेंदुभ्यांमांसतोयाभ्यांभुवंसंमृज्यभूग्रहम् ॥ ६८ ॥ वृत्तंत्रिकोणसंयुक्तं
कुर्यान्मंडलमंत्रतः॥यजेत्तत्राधारशक्तिकच्छपंनागनायकम् ॥ ६९ ॥ आधारंस्थापयेत्तत्रतारा
द्यस्त्रांगमायया ॥ वह्निमंडलमभ्यर्च्यमहाशंखंनिधापयेत् ॥ ७० ॥ वामकर्णेन्दुयुक्तेनफडंतेनविहा
यसा ॥ प्रक्षालितंभृगुंदंडित्रिमूर्तीन्दुयुतंपठन् ॥ ७१ ॥

कोणचतुष्कोणात्मकंमंडलंकुर्यात् ॥ तत्राधारशक्तिकूर्मशेषान्संपूज्य ॥ ६९ ॥ ॐह्रींफडितिमंत्रेणार्घ्याधारंस्थाप
येत् ॥ मंवह्निमंडलायनमइतितत्संपूज्य ॥ ७० ॥ वामकर्णेदुयुक्तेनऊबिंदुयुतेनफडंतेनाविहायसा हकारेण ॥ हुंफ
डितिमंत्रेणप्रक्षालितंमहाशंखंनरकपालम् ॥ दंडित्रिमूर्तीदुयुतंथईबिंदुयुक्तंभृगुंसकारम् स्थींमितिबीजंपठन् ॥
स्थापयेदित्यन्वयः ॥ ७१ ॥

ततोमंत्रचतुष्टयेनमहाशंखपूजा ॥ मंत्रचतुष्टयमाह ॥ दीर्घेति ॥ दीर्घत्रयम् आईऊ ॥ तद्युनामाया सृष्टिःकः सदीर्घयःया ॥ प्रतिष्ठाआकारस्तद्युतंमांसंलः-ला ॥ पवनोयः ॥ हृदयंनमः ॥ क्रांक्रींक्रूंकालीकपालायनमःइत्येकोमंत्रः ॥ ७२ ॥ ७३ ॥ हंसइति ॥ हंसः सः ॥ हरिभुजंगेशौतरौ ताभ्यांयुतः तथादीर्घत्रयबिंदुयुतश्च ॥

ततोर्चयेन्महाशंखंजपन्मंत्रचतुष्टयम् ॥ दीर्घत्रयान्वितामायाकालीसृष्टिःसदीर्घयः ॥ ७२ ॥ प्रतिष्ठा संयुतंमांसंपवनोहृदयंततः ॥ एकादशार्णःप्रथमोमहाशंखार्चनेमनुः ॥ ७३ ॥ हंसोहरिभुजंगेशयुतो दीर्घत्रयेंदुयुक् ॥ तारिण्यंतेकपालायनमोंतोद्वादशाक्षरः ॥ ७४ ॥ खंदीर्घत्रयबिंद्वाढ्यंमेषोवामदृगा न्वितः ॥ लोकपालायहृद्यंततृतीयोयंशिवाक्षरः ॥ ७५ ॥

स्वरूपमन्यत् ॥ ख्रांख्रींख्रूंतारिणीकपालायनम इति द्वितीयः ॥ ७४ ॥ खमिति ॥ खंहः ॥ दीर्घत्रयबिंदुयुतः ॥ वामदृगन्वितोमेषः ईयुतोनः नी ॥ स्वरूपमग्रे ॥ ह्रांह्रींह्रूंनीलाकपालायनमइतितृतीयः ॥ ७५ ॥

चतुर्थमाह ॥ मायेति ॥ मायाह्रीं ॥ स्त्रीबीजंस्त्रीं ॥ अघ्रींदुयुतंखंहूं ॥ स्वर्गस्वरूपम् ॥ खादिमः कः ॥ पालयेत्यादिस्वरूपम् ॥ सर्वःसर्वोद्भवःसर्वशुद्धिमयइतिपदत्रयंचतुर्थ्यंतम् ॥ स्वरूपमग्रे ॥ रुधिरोरनिः णा ॥ वायुः यः ॥ शुभ्रास्वरूपम् ॥ अनिलोयकारः ॥ सुराभाजनायस्वरूपम् ॥ भगीसत्यः एयुतोदः ॥ देवी त्यादिस्वरूपम् ॥ हन्नमः ॥ यथा–ह्रींस्त्रींहूंस्वर्गकपालायसर्वाधारायसर्वायसर्वोद्भवायसर्वशुद्धिमयायसर्वासुर

मायास्त्रीबीजमघ्रींदुयुतंखंस्वर्गखादिमः ॥ पालयसर्वाधारायसर्वः सर्वोद्भवस्तथा ॥७६॥सर्वशुद्धि मयश्चेतिङेन्ताः सर्वासुरांततः॥रुधिरारुरातिदीर्घावायुः शुभ्रानिलःसुरा ॥ ७७ ॥ भाजनायभगीस त्योवीकपालायहन्मनुः ॥ तुर्योरसेषुवर्णोयंमहाशंखप्रपूजने ॥७८॥ तत्रार्कमण्डलंचेष्ट्वासलिलमूल मन्त्रतः ॥ प्रपूरयेत्सुधाबुद्ध्यागंधपुष्पाक्षतान्क्षिपेत् ॥ ७९ ॥

रुधिरारुणायशुभ्रायसुराभाजनायदेवीकपालायनमइतिचतुर्थोमन्त्रः रसेषुवर्णः षट्पञ्चाशदक्षरः ॥ एभिर्मंत्रैर्म हाशंखंसंपूज्यअंसूर्यमण्डलायनम इत्यर्कमंडलंसंपूज्यमूलमन्त्रंपठन्सुधाबुद्ध्यातोयंसंपूर्यतत्रगन्धपुष्पाक्षतान्क्षिपेत ॥ सुधा सुरात्रेतिरहस्यम् ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥

त्रिखंडांमुद्रांबद्ध्वा ॐसोममंडलायनमइतितोयेचन्द्रमण्डलंसंपूज्यैकादशार्णेनमन्त्रेणाष्टवारंजलंमंत्रयेत् ॥ त्रिखंडालक्षणंयथा ॥ परिवर्त्यकरौस्पष्टावंगुष्ठौकारयेत्समौ ॥ अनामांतर्गतेकृत्वातर्जन्यौकुटिलाकृती ॥ कनिष्ठिके नियुंजीतानिजस्थानेमहेश्वरि ॥ त्रिखण्डेयंसमाख्यातात्रिपुराह्वानकर्मणीति ॥ एकादशार्णमाह ॥ वागिति ॥ वाक् ऐं ॥ शक्तिःह्रीं ॥ पद्माश्रीं ॥ रेफानुग्रहबिंदुयुक्गगनम् रेफ औबिंदुयुतोहः ह्रौं ॥ मूलमन्त्रः पूर्वोक्तःपञ्चार्णः ॥ हंसमनुसर्गसमन्वितंवियत् ॥ सऔविसर्गयुतोहः हसौः ॥ दीपिकेंद्राढ्योवराहः ऊ ॥ बिंदुयुतोहः हूं ॥

मुद्रां त्रिखण्डांसंदर्श्यपूजयेच्चन्द्रमण्डलम् ॥ वाक्शक्तिपद्मागगनंरेफानुग्रहबिंदुयुक् ॥८०॥ मूलमन्त्रो वियद्धंसमनुसर्गसमन्वितम् ॥ वराहोदीपिकेंद्राढ्योमनुरेकादशाक्षरः॥८१॥ अष्टकृत्वोमुनामन्त्रीमन्त्रयेत्प्रयतोजलम् ॥ माययामदिरांक्षिप्त्वाशंखयोनिंचदर्शयेत् ॥ ८२ ॥

यथा—ऐंह्रींश्रीं ह्रौं ॐह्रःश्रींहूंफट्हसौःहूमिति ॥ ८० ॥ ८१ ॥ ततोह्रींबीजेनतोयेसुरांप्रक्षिप्यशंखयोनिमुद्रे दर्शयेत् ॥ तयोर्लक्षणंयथा ॥ वामांगुष्ठंतुसंगृह्यदक्षहस्तस्यमुष्टिना ॥ कृत्वोत्तानंतथा मुष्टिमंगुष्ठंतुप्रसारयेत् ॥ वामांगुल्यस्तथाश्लिष्टाःसंयुताःसुप्रसारिताः ॥ दक्षिणांगुष्ठकेलग्नामुद्राशंखस्यभूतिदेतिशंखमुद्रालक्षणम् ॥ मिथः कनिष्ठिकेबद्ध्वातर्जनीभ्यामनामिके ॥ अनामिकोर्ध्वसंश्लिष्टदीर्घमध्यमयोरधः ॥ अंगुष्ठाग्रद्वयंन्यस्येद्योनिमुद्रेयमीरितेतियोनिमुद्रालक्षणम् ॥ ८२ ॥

तत्रार्घ्यजलेवृत्ताष्टषट्कोणरूपंयंत्रंविचिंत्यध्यानोक्तांदेवींचस्मृत्वामूलेनार्चयेत् ॥ ८३ ॥ ततोंगुष्ठयुताभिस्तर्जन्या द्यंगुलीभिरर्घ्यजलेमूलेनतांतर्पयेत् ॥ ८४ ॥ खमिति ॥ खंहः ॥ मनुरौ ॥ भृगुःसः ॥ तथाहकारएवभृग्वादियुतः ॥ ध्रुव ॐ यथा- ॐ ह्सौंहूँसौंनमइत्यानंदभैरवंतर्पयेत् ॥ ८५ ॥ ८६ ॥ इत्यर्घ्यविधिंकृत्वापूर्वोक्तमेधादिनव

तत्रवृत्ताष्टषट्कोणंध्यात्वादेवींविचिंतयेत्॥पूर्वोक्तांपूजयित्वैनांमूलेनाथप्रतर्पयेत् ॥ ८३ ॥ तर्जनी मध्यमानामाकनिष्ठाभिर्महेश्वरी ॥ सांगुष्ठाभिश्चतुर्वारंमहाशंखस्थितेजले ॥ ८४ ॥ खंरेफमनु बिंद्वाढ्यंभृगुमन्बिंदुयुक्तथा ॥ध्रुवाद्येननमोंतेनतर्प्यादानंदभैरवम् ॥८५॥ ततस्तेनार्घ्यतोयेनप्रोक्षे त्पूजनसाधनम् ॥ योनिमुद्रांप्रदर्श्याथप्रणमेद्भवतारिणीम् ॥८६॥ विधानमध्येसंप्रोक्तंसर्वसिद्धिप्रदा यकम् ॥ पूर्वोक्तेपूजयेत्पीठेपद्मपट्कोणकर्णिके ॥८७॥ धरागृहावृतेरम्येदेवींरम्योपचारकैः ॥ मही गृहचतुर्दिक्षुगणेशादीन्प्रपूजयेत् ॥ ८८ ॥ पाशांकुशौकपालंचत्रिशूलंदधतंकरैः॥ अलंकारचयोपेतं गणेशंप्राक्समर्चयेत् ॥८९॥

शक्तिकेपीठेतांपूजयेत् ॥ ८७ ॥ ८८ ॥ गणेशादिध्यानमाह ॥ पाशेति ॥ अंकुशत्रिशूलेदक्षयोः ॥ पाशकपालेवा मयोः ॥ अलंकाराणांचयःसमूहस्तद्युतम् ॥ ८९ ॥

बटुकस्यदक्षे शूलम् ॥ १० ॥ क्षेत्रपालस्यासिशूलेदक्षयोः ॥ ११ ॥ योगिनीनांपाशलिंगेदक्षयोः ॥ १२ ॥ अक्षो
भ्यवज्रपुष्पंप्रतीच्छस्वाहेतिमुनिमंत्रः ॥ १३ ॥ १४ ॥ १५ ॥ सबिंदुनामादिवर्णआद्योयासांईदृश्यः संबोधनांताः
प्रणवाद्यावज्राद्यंताअभिधानामान्येववैरोचनादिमंत्राः ॥ यथा–ॐ वैंवैरोचनवज्रपुष्पंप्रतीच्छस्वाहा ॥ ॐ अंअमि

कपालशूलेहस्ताभ्यांदधतंसर्पभूषणम् ॥ श्वयूथवेष्टितंरम्यंबटुकंदक्षिणेचर्चयेत् ॥ १० ॥ असिशूलक
पालानिडमरुंदधतंकरैः ॥ कृष्णंदिगंबरंक्रूरंक्षेत्रपंपश्चिमेयजेत् ॥ ११ ॥ कपालंडमरुंपाशंलिंगंसंबिभ्र
तीकरैः ॥ अंत्राकल्पारक्तवस्त्रायोगिनीरुत्तरेयजेत् ॥ १२ ॥ अक्षोभ्यंप्रयजन्मूर्ध्निदेव्याःसव्यकपिंशुभम्
अक्षोभ्यवज्रपुष्पंचप्रतीच्छानलवल्लभा ॥ १३ ॥ अक्षोभ्यपूजनेमंत्रः षट्कोणेषुषडंगकम् ॥ वैरोचनं
चामिताभंपद्मनाभाभिधंतथा ॥ १४ ॥ शंखपांडुरसंज्ञंचदिग्दलेषुप्रपूजयेत् ॥ लामकांमामकांचैवपांडुरांता
रकांतथा ॥ १५ ॥ विदिग्गताब्जपत्रेषुपूजयेदिष्टसिद्धये ॥ सबिंदुनामाद्यवर्णाद्याःसंबुध्यंतास्तथाभिधाः ॥ १६

ताभवज्र० ॥ ॐ पंपद्मनाभव० ॥ ॐ शंशंखपांडुरव० ॥ ॐ लांलामकेवज्र० ॥ ॐ मांमामकेवज्र० इत्यादि ॥ पद्मांत
कादिपूजायामप्येवमेवमंत्राः ॥ १६ ॥

॥ ९७ ॥ ९८ ॥ ९९ ॥ नित्यपूजांतेबलिदानमंत्रमाह ॥ नारइति ॥ तार ॐ ॥ मायाह्रीं ॥ वालोवः सनेत्रयुतः
वि ॥ गदीखः ॥ कूर्मश्चकारः ॥ दीर्घोग्निः रा ॥ मेरुःक्षः ॥ भृगुः सः ॥ रमाश्रीं ॥ मायाह्रीं ॥ अस्त्रंफट् ॥ अग्नि

वज्रपुष्पंप्रतीच्छाग्निप्रियांताःप्रणवादिकाः॥वैरोचनादिपूजायांमनवःपरिकीर्तिताः॥९७॥भूगृहस्यच
तुर्द्वार्षुपद्मांतकयमांतकौ ॥ विघ्नांतकाभिधंपश्चान्नारांतकमथोयजेत् ॥ ९८ ॥ शक्रादींश्चापिवज्रादी
न्पूजयेत्तदनंतरम् । एवंसंपूजयेद्देवींपांडित्यंधनमद्भुतम् ॥ ९९ ॥ पुत्रान्पौत्रान्सुखंकीर्तिंलभतेजन
वश्यताम् ॥ तारोमायाश्रीमदेकजटेनीलसरस्वति ॥१००॥ महोग्रतारेदेवालःसनेत्रोगदियुग्मकम् ॥
सर्वभूतपिशाकूर्मोदीर्घोग्निर्मेरुसान्ग्रसः ॥ १०१ ॥ ग्रसद्वयंममजाड्यंचच्छेदयद्वितयंरमा ॥ मायास्त्रा
ग्निप्रियांतोयंद्विपंचाशल्लिपिर्मनुः ॥ २ ॥ अनेननित्यपूजांतेऽन्वहंदेव्यैबलिंहरेत् ॥ एवंसिद्धेमनौ
मंत्रीप्रयोगान्विदधीतच ॥ ३ ॥ जातमात्रस्यबालस्यदिवसत्रितयादधः ॥ जिह्वायांविलिखेन्मन्त्रं
मध्वाज्याभ्यांशलाकया ॥ १०४ ॥

प्रियास्वाहा ॥ स्वरूपमन्यत् ॥ यथा–ॐ ह्रीं श्रीमदेकजटेनीलसरस्वतिमहोग्रतारेदेविखखसर्वभूतपिशाचराक्षसान
ग्रस ग्रस ममजाड्यंछेदय छेदय श्रींह्रींफट्स्वाहेतिद्विपंचाशदर्णः ॥ १०० ॥ १०१ ॥ १०२ ॥ १०३ ॥ १०४ ॥

॥ १०५ ॥ प्रयोगांतरमाह ॥ उपरागइति ॥ ग्रहणेतडागेतररक्तकाष्ठंदत्तादंतेनानीयतेनलेखनींकृत्वातैलमधुसुराभिः पद्मिनीपत्रेतयामनुमालिख्यमातृकावर्णैः संवेष्ट्यकुंडंनिखायतदुपर्यग्निंप्रतिष्ठाप्यगोदुग्धाक्तेनरक्तपद्मसहस्रेणतत्र हुत्वाषोडशार्णेनमांसैर्होमांतेबलिंदत्त्वामध्यरात्रेपूर्वोक्तमंत्रेणबलिंदद्यात् ॥ एवंकृते उक्तफलसिद्धिः ॥ १०६ ॥

सुवर्णकृतयायद्वामंत्रीधवलदूर्वया ॥ गतेऽष्टमेऽब्देबालोसौजायतेकविराड्ध्रुवम्॥१०६॥तथापरैरजेयो पिभूपसंघैर्धनार्चितः॥ उपरागेदत्तानीयतरद्दारुसरोजले ॥६॥ निर्मायकीलकंतेनतैलमध्वसृतौलिखे त् ॥ सरोजिनीदलेमन्त्रंवेष्टयेन्मातृकाक्षरैः ॥ ७ ॥ निखायतद्दलंकुंडेचतुरस्रेसमेखले ॥ संस्थाप्य पावकंतत्रजुहुयान्मनुनाऽमुना ॥८॥सहस्ररक्तपद्मानांधेनुदुग्धजलाप्लुतम् ॥ होमांतेविविधैरन्नैःपलैर पिबलिंहरेत्॥९॥बलिमंत्रेणविधिवद्बलिमंत्रःप्रकाश्यते॥तारपद्मेयुगतंद्रीवियद्दीर्घंचलोहितः॥११०॥ अत्रिर्विषभगारूढोवदेत्पद्मावतीपदम् ॥ झिंटीशाढ्योनिलःस्वाहाषोडशार्णोबलेर्मनुः ॥ १११ ॥

॥ १०७ ॥ १०८ ॥ १०९ ॥ षोडशार्णमाह ॥ तारइति ॥ तंद्रीमः ॥ दीर्घं वियत् हा ॥ लोहितःपः ॥ विषभ गारूढोत्रिः ॥ मण्युतोदः ॥ अनिलोझिंटीशाढ्यःयण्युतःये ॥ यथा-ॐ पद्मे पद्मे महापद्मेपद्मावतीयेस्वा हेति ॥ ११० ॥ १११ ॥

१ ॐ पद्मेपद्मेमहापद्मेपद्मावतीयेस्वाहेतिषोडशार्णः ।

॥११२॥ अलिकेललाटेधरेत् तिलकंकुर्यादित्यर्थः ॥ ११३ ॥ ११४ ॥ ११५ ॥ विरोधिनःशत्रूनुच्चाटयति निष्कासयति ॥ क्षाराढ्यानिशया सैंधवयुक्तयाहरिद्रया ॥ ११६ ॥ ११७ ॥ यंत्रमाह ॥ षडिति ॥ षट्कोणेसाध्यान्वितं

ततोनिशीथेपिबलिंपूर्वोक्तमनुनाहरेत्।एवंकृतेपंडितानामजेयःकविराड्भवेत्।११२।निवासोभारती लक्ष्म्योर्जनतारंजनक्षमः ॥ शताभिजप्तांयोमंत्रीरोचनामलिकेधरेत् ॥ १३॥ सयंपश्यतितस्यासौदासवज्जायतेक्षणात् ॥ श्मशानांगारमाहृत्यशर्वयांकुजवासरे ॥१४॥ कृष्णांबरेणसंवेष्ट्यनिबद्धंरक्ततंतुभिः ॥ शताभिजप्तमूलेननिःक्षिपेद्वैरिवेश्मनि ॥ १५ ॥ उच्चाटयतिसप्ताहात्सकुटुंबान्विरोधिनः ॥ क्षाराढ्यनिशयामंत्रंलिखित्वापौरुषेस्थिनि ॥ १६ ॥ रविवारेनिशीथिन्यांसहस्रमभिमंत्रयेत् ॥ तत्क्षिप्तंशत्रुसदनेमंडलाद्ध्वंशकंभवेत् ॥ १७ ॥ क्षेत्रेक्षिप्तंसस्यहान्यैजवहृत्तुरगालये ॥ षट्कोणमध्ये प्रविलिख्यमूलंसाध्यान्वितंकेसरगस्वराढ्यम् ॥ काद्यष्टवर्गान्वितपत्रमब्जंलिखेद्बहिर्भूमिपुरेणवीतम् ॥ १८ ॥ यंत्रमेतल्लिखेद्भूर्जेरसेनजतुजन्मना ॥ पीताम्बरेणसंवेष्ट्यबध्नीयात्पीतसूत्रतः ॥ ११९ ॥

मूलममुकंरक्षरक्षेतियुक्तंमूलमंत्रंविलिख्याष्टदलकेसरेषुअंआमित्यादिस्वराणांयुग्मपत्रेषुकचटतपयशलेतिवर्गान्विलिख्यबहिश्चतुष्कोणेनवेष्टयेत् ॥ ११८ ॥ जतुजन्मनालाक्षोत्थेनरसेन ॥ ११९ ॥

॥ १२० ॥ १२१ ॥ १२२ ॥ १२३ ॥ तारेति ॥ गोप्या अहंतदुपासकइतिकस्याप्यग्रेनप्रकाशयेत् ॥ १२४ ॥ इति श्रीमंत्रमहोदधिव्या०नौकायांतारामंत्रनिरूपणश्चतुर्थस्तरङ्गः ॥ ४ ॥ ताराभेदानाह ॥ ब्रह्मोपासितांतावदाह ॥

शिशूनांकंठतोबद्धंरक्षकंभूतभीतितः ॥वामबाहौतुनारीणांपुत्रदंसुभगत्वकृत् ॥ १२० ॥ दक्षबाहौ नृणांबद्धंनिर्द्धनानांधनप्रदम् ॥ ज्ञानदज्ञानमिच्छूनांराज्ञांतुविजयप्रदम् ॥ २१ ॥ एतद्यंत्रंपुराधृत्वागौतमाद्यामहर्षयः ॥ लेभिरेमोक्षसंसिद्धिंसाम्राज्यंभूमिनायकाः ॥ २२ ॥ किंभूरिणानृणामेतद्वांछितांयच्छतिश्रियम् ॥ कवित्वंराजमानंचकीर्तिमायुररोगताम् ॥ २३ ॥ नैवतारासमाकाचिद्देवतासर्वसिद्धिदा॥कलौयुगेततोगोप्यावांछितांसिद्धिमीप्सुना ॥१२४॥ इति श्रीमंत्रमहोदधौतारामंत्रोक्तिश्चतुर्थस्तरंगः॥४॥छ॥ ताराभेदाअथोच्यंतेशीघ्रसिद्धिप्रदायिनः॥ वह्निवामाक्षिबिंद्वाढ्याकामिकाभुवनेश्वरी॥१॥भुवनेशीवर्मरुद्धाफडंताप्रणवादिका॥सप्ताक्षरीमहाविद्याविरिंचिसमुपासिता २॥



वह्नीति ॥ रेफईबिंदुयुताकामिका ॥ तकारःत्रीं ॥ १ ॥ वर्मरुद्धाभुवनेशी वर्मद्वयमध्यंगतेत्यर्थः ॥ यथा ॐ त्रीं ह्रींहुंह्रींहुंफडिति ॥ २ ॥

विष्णूपासितामाह ॥ वागिति ॥ कामः क्लीं ॥ अनुग्रहसर्गवान् हसः औविसर्गयुतःसः सौः ॥ यथा-ऐंह्रींश्रींक्लीं सौःहुंउग्रतारेहुंफडिति ॥ ३ ॥ द्वितीयांविष्णूपासितामाह ॥ तारेति ॥ शिवाह्रीं ॥ भृगुःसः ॥ यथा-ॐहुंह्रींक्लीं सौःहुंफडिति ॥ ४ ॥ चतुर्मुखोपासितंमंत्रद्वयमाह ॥ एतयोरिति ॥ एतयोरनंतरोक्तयोर्विष्णूपासितयोर्द्वादशा क्षरसप्ताक्षरयोर्विद्ययोःपंचमेबीजेसौरूपेयदिआदौहकारः अंतेरेफःतदातद्देवविद्याद्वयंचतुर्मुखसेवितंहः आदौ

वाक्शक्तिः कमलाकामोहंसोनुग्रहसर्गवान् ॥ वर्मोग्रतारेवर्मास्त्रंविष्णवर्चाद्वादशाक्षरी ॥ ३ ॥ तार वर्मशिवाकामोमनुसर्गयुतोभृगुः॥वर्मास्त्रमेषासप्तार्णासिद्धिदाविष्णुसेविता ॥४॥ एतयोःपंचमेबीजे सकारोहादिरांतिमः ॥ तदाविद्याद्वयंप्रोक्तंचतुर्मुखसमर्चितम् ॥ ५ ॥ तारोमायावर्ममायावर्मास्त्रंच रसाक्षरी ॥ हरिरग्निस्त्रिमूर्तीन्दुयुग्वर्मपुटिताद्विजा ॥ ६ ॥ अस्त्रांतापंचवर्णोयंप्रोक्तमेकजटाद्वयम् ॥ रेफशांतीन्दुयुङ्णांतोवर्मास्त्रंकामवाग्भवम् ॥ ७ ॥

यस्यरःअंतिमोयस्यसः हादिरांतिमः ॥ यथा-ऐंह्रींश्रींक्लींहसौःहुंउग्रतारेहुंफडित्याद्या ॥ ॐ हुंह्रींक्लींहसौःहुंफडिति द्वितीया ॥ ५ ॥ एकजटाद्वयमाह ॥ तारइति ॥ अग्नित्रिमूर्तीन्दुयुक्हरिःरईबिंदुयुक्तकारस्त्रीं ॥ स्पष्टमन्यत् ॥ यथा-ॐ ह्रींहुंह्रींहुंफट्इतिप्रथमा ॥ त्रींहुंत्रींहुंफडितिद्वितीया ॥ नारायणीयामाह ॥ रेफेति ॥ रेफःरः ॥ शांतिः ईकारः ॥ अनुस्वारयुक्तोणांतस्तः त्रीं ॥ यथा-त्रींहुंफट्क्लींऐंमिति ॥ ६ ॥ ७ ॥

उक्तानामष्टविद्यानामृष्याद्याह ॥ अमूषामिति ॥८॥ गायत्रीछंदः ॥ तारादेवता ॥ पूर्ववत्षड्दीर्घाढ्यमायाबीजेनह्रांह्रींमित्यादि ॥ ९ ॥ ध्यानमाह ॥ श्वेतेति ॥ कर्त्रींदक्षे ॥ १० ॥ प्रयोगानाह ॥ मध्विति ॥ ११ ॥ १२ ॥ १३ ॥

नारायणोपासितेयंपंचार्णासर्वसिद्धिदा ॥ अमूषामष्टविद्यानामृषिः[1]शक्तिर्वसिष्ठजः ॥ ८ ॥गायत्री तारकेछंदोदेवतेपरिकीर्तिते ॥ न्यासंतुपूर्ववत्कृत्वाध्यायेत्तारांहृदंबुजे ॥९॥ श्वेतांबरांशारदचंद्रकांतिंसद्भूषणांचंद्रकलावतंसाम् ॥ कर्त्रीकपालान्वितपाणिपद्मांतारांत्रिनेत्रांप्रभजेखिलर्द्ध्यै ॥ १० ॥ जपपूजादिकंसर्वमासांपूर्ववदाचरेत् ॥ मधुयुक्परमान्नेनहोमाद्विद्यानिधिर्भवेत् ॥ ११ ॥ रक्तांवश्ये स्वर्णवर्णास्तंभनेमारणेसिताम् ॥ उच्चाटनेधूम्रवर्णांशांतौश्वेतांस्मरेदिमाम् ॥ १२ ॥ भूरिणाकिमिहोक्तेनविद्याएताः प्रसाधिताः ॥ पूरयन्त्यखिलंनृणांमनोरथमिहध्रुवम् ॥ १३ ॥ मायात्द्भगवत्येकजटेममजलंस्थिरा ॥ वह्न्यासनगतापुष्पंप्रतीच्छानलवल्लभा ॥ १४ ॥

एकजटामाह ॥ मायेति ॥ जलंवः ॥ वह्न्यासनगतास्थिरा रेफयुतोजःज्र ॥ यथा–ॐ ह्रींनमोभगवत्येकजटेमम वज्रपुष्पंप्रतीच्छस्वाहेति ॥ १४ ॥



[1] अष्टविद्यानांवसिष्ठऋषिःगायत्रीछंदःतारकादेवताममाभीष्टसिद्ध्यर्थेजपेवि० ।

॥ १५ ॥ १६ ॥ नीलसरस्वतामिाह ॥ रमेति ॥ व्यापिन्यारूढौऔयुतौ ॥ नीलस्वरूपम् ॥ भृगुःसः ॥ रस्वत्यै
स्वरूपम् ॥ ठद्वयं ॥ स्वाहा ॥ यथा-ॐ श्रींह्रींहसौः हुंफट्नीलसरस्वत्यैस्वाहा ॥ मनुवर्णश्चतुर्दशार्णः ॥ १७ ॥

द्वाविंशत्यक्षरोमंत्रस्ताराादिःसर्वसिद्धिदः ॥ ऋषिःपतंजलिश्छंदोगायत्र्येकजटापुनः ॥ १५ ॥ दे
वतादीर्घषट्काढ्यमाययास्यात्षडंगकम् ॥ ध्यानार्चनप्रयोगांस्तुकुर्यात्पूर्वोक्तमंत्रवत् ॥१६॥ रमां
मायाहसौव्यापिन्यारूढौसर्गसंयुतौ ॥ वर्मास्त्रंनीलभृगुरस्वत्यैठद्वयमीरितम् ॥१७॥ प्रणवाद्योमनुः
सर्वसिद्धिदोमनुवर्णकः॥ऋष्याद्याब्रह्मगायत्रीतथानीलसरस्वती ॥ १८ ॥ नेत्रंचंद्रंदुंनेत्रौंगंनेत्रार्णैरं
गकल्पना॥मंत्रोत्थितैरथोध्यायेद्देवींसर्वेष्टसिद्धिदाम् ॥ १९ ॥ घंटाशिरःशूलमसिंकराग्रैःसंबिभ्रतीं
चंद्रकलावतंसाम् ॥ प्रमथ्नतींपादतलेपशुंतांभजेमुदानीलसरस्वतीशाम् ॥ २० ॥

॥ १८ ॥ षडंगमाह ॥ नेत्रेति ॥ नेत्रशब्देनार्णद्वयंचंद्रएकः ॥ अंगानिषट् ॥ १९ ॥ ध्यानमाह घंटामिति ॥
शूलासीदक्षयोः ॥ घंटाशिरसीवामयोः ॥ २० ॥

१ अस्यश्रीमदेकजटामंत्रस्यपतंजालिर्ऋषिःगायत्रीछंदःएकजटादेवताममाभीष्टसिद्ध्यर्थेजपेविनियोगः । २ अस्यनीलसरस्वतीमंत्रस्यब्रह्माऋषिःगायत्री छंदःनीलसरस्वतीदेवताममाभीष्टसिद्ध्यर्थेजपेविनियोगः ।

॥ २१ ॥ मंत्रांतरमाह ॥ मायेति ॥ सामायाअनंतसंयुता आकारसंयुता ह्रां ॥ ङेयुतातारा ताराये ॥ समहापदाद्या महातारायै ॥ भृगुःसः ॥ ब्रह्माकः ॥ अनलांतिमोलः ॥ स्पष्टमन्यत् ॥ तथातारााद्या त्रींबीजाद्या ॥ यथा–ॐत्रींह्रांहुंनमस्तारायैमहातारायैसकलदुस्तरांस्तारय २ तर २ स्वाहेति ॥ २२ ॥ २३ ॥ द्वात्रिंशदर्णावि

जपपूजादिकंसर्वमस्याःपूर्ववदीरितम्॥विशेषाज्जयदावादेविधेयंसाधितानृणाम् ॥२१॥ मायासानंतसंयुक्तावर्मह्न्ङेयुतापुनः ॥ तारामहापदाद्यासाभृगुब्रह्मानलांतिमः ॥ २२ ॥ दुस्तरांस्तरयद्वंद्वंतरयुग्मंचठद्वयम् ॥ द्वात्रिंशदर्णाताराद्यापूजास्याःपूर्ववन्मता ॥२३॥ विद्याराज्ञीमथोवक्ष्येसुरेंद्रस्यापिदुर्लभाम् ॥ लब्ध्वायांमानवाःस्वेष्टंसाधयंत्यर्चनेरताः ॥२४॥ वाङ्मायाश्रीर्मनोजन्माहंसोनुग्रहबिंदुयुक्॥कामःशक्तिश्चवाग्बीजंफांतोलाघींशबिंदुयुक् ॥ २५ ॥ स्त्रीबीजंनीलतारेस्यात्संबुद्ध्यंतासरस्वती ॥ अत्रीसरेफौक्रमतःशेषवामाक्षिसंयुतौ ॥ २६ ॥

द्याराज्ञीमाह॥विद्येति ॥२४॥वागिति ॥ मनोजन्माक्लीं ॥ अनुग्रहाबिंदुयुक्हंसः सःसौं॥लाघींशबिंदुयुक्फांतःलऊंबिंदुयुतोबःब्लूं ॥ २५ ॥ स्त्रीबीजंत्रींसरेफौरेफयुक्तौ शेषवामाक्षिसंयुतौ क्रमतआईसंयुतौ अत्रीइकारौ ॥ २६ ॥

सानुस्वारौद्रांद्रीमिति ॥ कामबीजंक्लीं ॥ मांसाघींबिंदुयुग्लऊबिंदुयुक्तःफांतोबःब्लूं ॥ सर्गीभृगुःसः ॥ हृल्लेखा ह्रीं यथा–ऐंह्रीं श्रींक्लींसौंक्लींह्रींऐंब्लूंस्त्रींनीलतारेसरस्वतिद्रांद्रींक्लींब्लूंसःऐंह्रीं श्रींक्लींसौःसौः ह्रींस्वाहेति ॥ २७ ॥

सानुस्वारौकामबीजंफांतोमांसार्घिबिंदुगः ॥ सर्गीभृगुर्वाग्हृल्लेखारमाकामौथसौद्वयम् ॥ २७ ॥ सर्गांतंभुवनेशानीस्वाहाद्वात्रिंशदक्षरी ॥ महाविद्याहिसाख्यातासेविताभोगमोक्षदा ॥२८॥ ब्रह्मानु ष्टुप्सरस्वत्योमुन्याद्याअङ्गकल्पना ॥ पंचपंचांष्टपंचेषुयुगार्णैर्मंत्रसंभवैः ॥२९॥ शवासनांसर्पविभू षणाढ्यांकर्त्रींकपालंचषकंत्रिशूलम् ॥ करैर्दधानांनरमुंडमालांत्र्यक्षांभजेनीलसरस्वतींताम् ॥ ३०॥ चतुर्लक्षंजपेद्विद्यांकिंशुकैर्मधुरान्वितैः ॥ दशांशंजुहुयाद्वह्नौश्रद्धापूर्वमतंद्रितः ॥ ३१ ॥ पूर्वोक्तेपूजये त्पीठेवक्ष्यमाणेनवर्त्मना ॥ आदौत्रिकोणंषट्कोणमष्टषोडशपत्रकं ॥ ३२॥ द्वात्रिंशत्पत्रमब्जंस्याच्च तुष्षष्टिदलंततः ॥ त्रिरेखाढ्यंधरागेहंचतुरस्रमतःपरम् ॥ ३३ ॥ एवंयंत्रंसमालिख्यबाह्यतःपूजनंच रेत् ॥ चतुरस्रस्याग्निकोणेविघ्नेशंपरिपूजयेत् ॥ ३४ ॥

॥ २८ ॥ षडंगमाह ॥ पंचेति ॥ २९ ॥ ध्यानमाह । शवेति ॥ कर्त्रींत्रिशूलेदक्षयोः ॥ ३० ॥ किंशुकैः पलाश पुष्पैः ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

१ ऐंह्रींश्रींक्लींसौंक्लींह्रींऐंब्लूंस्त्रींनीलतारेसरस्वतिद्रांद्रींक्लींब्लूंसःऐंह्रींश्रींक्लींसौःह्रींस्वाहा ।२ अस्यमहाविद्यामंत्रस्यब्रह्माऋषिःअनुष्टुप्छंदः । सरस्वतीदेवताम मामीष्टसिद्ध्यर्थेजपेविनियोगः ।

वायुकोणेक्षेत्रपालमैशान्येभैरवंतथा ॥ नैर्ऋतेयोगिनीःसर्वावाममागेगुरुंयजेत् ॥ ३५ ॥ भूगृहस्या
द्यरेखायामणिमालघिमातथा ॥ महिमाचेशितापूज्यावशिताकामपूरणी ॥ ३६ ॥ गरिमाप्राप्ति
रित्येताःपूज्याःपूर्वादिदिक्क्रमात् ॥ धरागृहस्यरेखायांद्वितीयायांतुभैरवाः ॥ ३७ ॥ असितांगो
रुरुश्चंडःक्रोधोन्मत्तकपालिनः ॥ भीषणश्चाथसंहारएतेष्टौभैरवाः स्मृताः ॥ ३८ ॥ भूमिगेहेतृती
यायां रेखायांमातरः पुनः ॥ ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा ॥ ३९ ॥ वाराहींद्राणिकाचै
वचामुंडासप्तमीस्मृता ॥ महालक्ष्मीस्तथेज्यास्ताःपूर्वादिषुयथाक्रमम् ॥ ४० ॥ इत्थमावृतिंचेष्ट्वा
योनिमुद्रांप्रदर्शयेत् ॥ चतुःषष्टिदलेपद्मेशक्तीरर्चेच्चतावतीः ॥४१॥ कुलेशीकुलनंदाचवागीशीभैर
वीतथा ॥ उमाश्रीः शांतयाचंडाधूम्राकालीकरालिनी ॥ ४२ ॥ महालक्ष्मीश्चकंकालीरुद्रकालीसर
स्वती ॥ वाग्वादिनीचनकुलीभद्रकालीशशिप्रभा ॥४३॥ प्रत्यंगिरासिद्धलक्ष्मीरमृतेशीचचंडिका॥
खेचरीभूचरीसिद्धाकामाक्षीहिंगुलाबला ॥४४॥ जयाचविजयाचाप्याजितानित्यापराजिता॥ विला
सिनीतथाघोराचित्रासुग्धाधनेश्वरी ॥ ४५ ॥

॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ योनिमुद्रोक्ता ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥

॥ ४६ ॥ ४७ ॥ ४८ ॥ चतुःषष्टिदलेतावतीः शक्तीरभ्यर्च्यखेचरीमुद्रांदर्शयेत् ॥ तल्लक्षणंयथा ॥ सव्यंदक्षिणहस्तं
तुसव्यहस्तेतुदाक्षिणम् ॥ बाहूकृत्वामहादेविहस्तौसंपरिवर्त्यच ॥ कनिष्ठानामिकेदेवियुक्तातेनक्रमेणतु ॥ तर्ज

सोमेश्वरीमहाचंडाविद्याहंसीविनायिका ॥ वेदगर्भातथाभीमाउग्रावैद्याचसद्गतिः ॥४६॥ उग्रेश्वरी
चंद्रगर्भाज्योत्स्नासत्यायशोवती ॥ कुलिकाकामिनीकाम्याज्ञानवत्यथडाकिनी॥४७॥राकिनीला
किनीचाथकाकिनीशाकिनीत्यपि ॥ हाकिनीतिचतुःषष्टिशक्तयःसिद्धिदायिकाः॥४८॥दर्शयेत्खे
चरीमुद्रांद्वितीयावरणेर्चिते ॥ द्वात्रिंशत्पत्रमध्येतुपूज्याएतास्तुशक्तयः ॥ ४९ ॥ किरातायो
गिनीवीरावेतालायक्षिणीहरा ॥ ऊर्ध्वकेशीचमातंगीमोहिनीवंशवर्द्धिनी ॥ ५० ॥मालिनीललिता
दूतीमनोजापद्मिनीधरा ॥ वर्वरीछत्रहस्ताचरक्तनेत्राविचर्चिका ॥ ५१ ॥मातृकादूरदर्शीचक्षेत्रेशीरं
गिनीनटी ॥ शांतिर्दीप्तावज्रहस्ताधूम्राश्वेतासुमंगला ॥ ५२ ॥

नीभ्यांसमाक्रांतिसर्वोर्ध्वमापिमध्यमे ॥ अंगुष्ठौतुमहादेविसरलावपिकारयेत् ॥ इयंसाखेचरीनाममुद्रासर्वोत्तमो
त्तमेति ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥

तृतीयावरणंसंपूज्यबीजमुद्रांदर्शयेत् ॥ तल्लक्षणंयथा—परिवर्त्यकरौस्पष्टावर्द्धचंद्राकृतीप्रिये ॥ तर्जन्यंगुष्ठयुगलंयुगपत्कारयेत्ततः ॥ अधःकनिष्ठावष्टब्धेमध्यमेविनियोजयेत् ॥ तथैवकुटिलेयोज्येसर्वाधस्तादनामिके ॥ बीजमुद्रेयमुदितासर्वसिद्धिप्रदायिनीति ॥ ५३ ॥ ५४ ॥ षोडशपत्रंसंपूज्यसृणिमुद्रामंकुशमुद्रांदर्शयेत् ॥ सापूर्वमुक्ता ॥

इष्ट्वातृतीयावरणंबीजमुद्रांप्रदर्शयेत् ॥ ततःषोडशपत्रेषुपूज्याःषोडशशक्तयः ॥ ५३ ॥ मुग्धाश्रीः
कुरुकुल्लाचत्रिपुरातोतलाक्रिया ॥ रतिःप्रीतिस्तथाबालामुसुखीश्यामलाविला ॥ ५४ ॥ पिशाची
चविदारीचशीतलावज्रयोगिनी ॥ सर्वेश्वरीतिसंपूज्यसृणिमुद्रांप्रदर्शयेत् ॥ ५५ ॥ अष्टपत्रेस्वस्वमंत्रै
र्यजेदष्टसरस्वतीः ॥ तारोहल्लोहितःसत्योवैकुंठानंतसंयुताः ॥ ५६ ॥ भृगुर्नेशब्दरूपेवाङ्मायाकामो
वदद्वयम् ॥ वाग्वादिन्यग्निकांतेतिमंत्रोवेदाक्षिवर्णवान् ॥ ५७ ॥

॥ ५५ ॥ अष्टपत्रेसरस्वत्यष्टकंस्वमंत्रैर्यजेदित्युक्तम् ॥ तासांमंत्रान्क्रमेणवदन्नादौवागीश्वरीमंत्रमाह ॥ तारइति ॥ लोहितः पः ॥ वैकुंठानंतसंयुतःसत्यःमआयुतोदःश्मा ॥ ५६ ॥ भृगुःसः ॥ स्पष्टमन्यत् ॥ यथा—ॐ पद्मासनेशब्दरूपेऐंह्रींक्लींवद २ वाग्वादिनीस्वाहेति वेदाक्षिवर्णवान् चतुर्विंशत्यर्णः ॥ ५७ ॥

चित्रेश्वरीमंत्रमाह ॥ वराहेति ॥ वराहहंसचक्रींद्रसंयुताभुवनेश्वरी हसकलह्रीं ॥ ५८ ॥ वद २ चित्रेश्वरि ऐंस्वा
हेति ॥ प्रथमंषट्कूटम् ॥ यथा—क्लींवद २ चित्रेश्वरीऐंस्वाहा ॥ वह्नौआग्निकोणे ॥ ५९ ॥ कुलजामंत्रमाह ॥ वागि

अनेनमनुनापूर्वपत्रेवागीश्वरींयजेत् ॥ वराहहंसचक्रींद्रसंयुताभुवनेश्वरी ॥ ५८ ॥ वदयुग्मंचचित्रेश्व
रिवाग्बीजानलप्रिया ॥ द्वादशार्णेनमनुनावह्नौचित्रेश्वरींयजेत् ॥ ५९ ॥ वाग्बीजंकुलजेवाक्चसर
स्वत्यनलांगना ॥ एकादशार्णमनुनाकुलजांदक्षिणेर्चयेत् ॥ ६० ॥ वाङ्मायाश्रींवदद्वंद्वंकीर्तीश्वरि
वसुप्रिया ॥ त्रयोदशार्णेनयजेन्नैर्ऋत्येकीर्तिनायिका ॥ ६१ ॥ वाङ्मायाचांतरिक्षांतेसरस्वतिचठद्व
यम् ॥ रव्यर्णेनयजेत्प्रत्यगंतरिक्षसरस्वतीम् ॥ ६२ ॥

ति ॥ ऐंकुलजेऐंसरस्वतिस्वाहेति ॥ ६० ॥ कीर्तीश्वरीमंत्रमाह ॥ वागिति ॥ ऐंह्रींश्रींवद २ कीर्तीश्वरिस्वाहेति ।
वसुरग्निः ॥ ६१ ॥ अंतरिक्षसरस्वतीमंत्रमाह ॥ वागिति ॥ ऐंह्रींअंतरिक्षसरस्वतिस्वाहेति ॥ ६२ ॥

घटसरस्वतीमंत्रमाह् ॥ एवंविधायोनिरैकारः ॥ कीदृशी वराहहंसचंडीशजनार्दनकृशानुयुक् हसखफरयुता ॥ सेंदुःसबिंदुश्च ॥ कूटमिदम् ॥ मनुरौकारः ॥ कीदृशः ॥ लकुलीभृगुवह्नीदुयुक् हसरबिंदुयुतः ॥ शांतिरीअरुणादियुता ॥ अरुणाह्ः ॥ भृगुःसः ॥ शिखीफः ॥ अग्नीरःएतैर्युता ॥ सबिंदुश्चवाक् ऐं मायाह्रींश्री श्रीः ॥ इषुबीजानिवाणबीजानि द्रांद्रींक्लींब्लूंसइति ॥ घ्रीमितिस्वरूपम् ॥ टायुतातृतीयांतारुद्राज्ञा ॥ कृष्णवर्त्मनोग्नेः प्रेयसी

वराहहंसचंडीशजनार्दनकृशानुयुक् ॥ सेंदुर्योनिश्चलकुलीभृगुवह्नींदुयुङ्मनुः ॥ ६३ ॥ अरुणाभृगुशिख्यग्निसंयुताशांतिरिंदुयुक् ॥ वाङ्मायाश्रीषुबीजानिघ्रींघटांतेसरस्वतीम्॥ ६४॥ घटेवदतरद्वंद्वंरुद्राज्ञाटायुताममम ॥ अभिलाषंकुरुद्वंद्वंप्रेयसीकृष्णवर्त्मनः ॥ ६५ ॥ गुणवेदार्णेनयजेद्धायौघटसरस्वतीम् ॥ भूधरेंद्रयुतोघींशोबिंद्वाढ्योवेंवदद्वयम् ॥ ६६ ॥

स्वाहा ॥ यथा--ह्सफ्रंह्स्त्रौः ह्स्फ्रींऐंह्रीं श्रींद्रांद्रींक्लींब्लूंसःघ्रींघटसरस्वतीघटेवद २ तर २ रुद्राज्ञयाममाभिलाषंकुरुकुरुस्वाहेति॥ ६३ ॥ ६४ ॥ ६५ ॥ गुणवेदार्णस्त्रिचत्वारिंशदक्षरः ॥ नीलामंत्रमाह् ॥ भूधरेति ॥ अर्घीशऊ ॥ भूधरोबः ॥ इन्द्रोलः ॥ ताभ्यांयुतः बिंदुयुतश्चब्लूं ॥ वेंवदवदस्वरूपम् ॥ यथा--ब्लूंवेंवद २ त्रींहुंफडिति

किणिमंत्रमाह ॥ वाग्बीजामिति ॥ अधराक्रांतोनकुलीऐंयुतोहः ॥ शांतिचंद्राढ्यमाकाशमूर्ध्निबिंदुयुतोहः ॥ सहक्
जलंवि ॥ भगाक्रान्तंकूर्मद्वंद्वम्ऐंयुतंचद्वंद्वंच ॥ यथा–ऐं हैंह्लींकिणि २ विच्चेइति ॥ ६६॥ ६७॥ ६८ ॥ एवंसरस्वत्यष्ट
कंसंपूज्य क्षोभमुद्रादर्शनम् ॥ तल्लक्षणम्–मध्यमांमध्यमेकृत्वाकानिष्ठांगुष्ठरोधिते ॥ तर्जन्यौदंडवत्कृत्वामध्य

त्रींहुंफट्नवार्णेननीलामचैंदुदग्दिशि ॥ वाग्बीजमधराक्रांतोनकुलीबिंदुमान्पुनः ॥ ६७ ॥ शांतिचं
द्राढ्यमाकाशंकिणिद्वंद्वंसहग्जलम् ॥कूर्मद्वंद्वंभगाक्रांतंनवार्णेनामुनायजेत् ॥ ६८ ॥ मंत्रेणशाग
दिग्भागेकिणिसंज्ञांसरस्वतीम् ॥ पंचमावृत्तिमाराध्यक्षोभमुद्रांप्रदर्शयेत् ॥ ६९ ॥ डाकिन्याद्याः
पूर्वमुक्ताःषट्कोणेषट्प्रपूजयेत् ॥ दर्शयेद्द्राविणींमुद्रांषष्ठावरणपूजने ॥ ७० ॥

मोपर्यनामिके ॥ क्षोभाभिधानामुद्रेयंसर्वसंक्षोभकारिणीति ॥ ६९ ॥ डाकिन्याद्याःपूर्वोक्ताः ॥ डाकिनीराकिनी
लाकिनीकाकिनीशाकिनीहाकिन्यः ॥ द्राविणीमुद्रालक्षणं यथा–क्षोभमुद्रालक्षणमुक्त्वोक्तम् ॥ एतस्या
एवमुद्रायामध्यमेंसरलेयदा ॥ क्रियेतेपरमेशानितदाविद्राविणीमतोति ॥ ७० ॥

पराबालाभैरवीतिस्वस्वमंत्रैः--ह्रींपरायैनमः--ऐंक्लींसौः बालायैनमः--ह्सैंह्स्क्लींह्सौः भैरव्यैनमइति ॥ आकर्षिणी मुद्रालक्षणं यथा--मध्यमातर्जनीभ्यांतुकनिष्ठानामिकेसमे ॥ अङ्कुशाकाररूपाभ्यांमध्यमे परमेश्वरि ॥ इयमाकर्षिणीमुद्रात्रैलोक्याकर्षणेक्षमेति ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ सात्त्विकध्यानमाह ॥ श्वेतेति ॥ कमंडलुवराक्षस्रक्पु

पराबालाभैरवीतिपूजनीयास्त्रिकोणके॥सप्तमावृतिपूजायांमुद्रांकुर्याच्चकर्षिणीम् ॥ ७१॥ इत्थंसंपूज्य तारेशींमनोभीष्टमवाप्नुयात् ॥ गणेशक्षेत्रपालाभ्यांयोगिन्यैभैरवायच ॥७२॥ तारायैचापिवितरेद्बलिंनित्यंचतुष्पथे॥मांसमाषान्नशाकाज्यपायसापूपकादिकम् ॥ ७३ ॥ बलिद्रव्यंसमाख्यातंतेनेष्टंसाप्रयच्छति ॥तस्याध्यानंत्रिधावच्मिसत्त्वादिगुणभेदतः ॥ ७४ ॥ श्वेतांबराढ्यांहंसस्थांमुक्ताभरणभूषिताम् ॥ चतुर्वक्त्रामष्टभुजैर्दधानांकुंडिकांबुजे ॥७५॥ वराभयेपाशशक्तीअक्षस्रक्पुष्पमालिके ॥ शब्दपाथोनिधौध्यायेत्सृष्टिध्यानमुदीरितम् ॥७६॥ रक्तांबरांरक्तसिंहासनस्थांहेमभूषिताम् ॥ एकवक्त्रांवेदसंख्यैर्भुजैःसंबिभ्रतींक्रमात् ॥ ७७ ॥ अक्षमालांपानपात्रमभयंवरमुत्तमम् ॥ श्वेतद्वीपस्थितांध्यायेत्स्थितिध्यानमिदंस्मृतम् ॥ ७८ ॥

ष्पमालादक्षेषु ॥ इतराणिवामेषु ॥ ७५ ॥ ७६ ॥ राजसध्यानमाह ॥ रक्तेति ॥ अक्षमालावरौदक्षयोः ॥ अन्ययोरन्ये ॥ ७७ ॥ ७८ ॥

तामसंध्यानमाह ॥ कृष्णेति ॥ परशुदर्वीखड्गमुसलकर्त्रीशूलवज्रपाशगदादक्षेषु ॥ शेषाणिवामेषु ॥ ७९ ॥ ८० ॥

कृष्णांबराढ्यांनौसंस्थामस्थ्याभरणभूषिताम् ॥ नववक्त्रांभुजैरष्टादशभिर्दधतींवरम् ॥७९॥ अभयं परशुंदर्वींखड्गंपाशुपतंहलम् ॥ भिंडिंशूलंचमुसलंकर्त्रींशक्तिंत्रिशीर्षकम् ॥ ८० ॥ संहारास्त्रं वज्रपाशौखट्वांगंगदयासह ॥ रक्तांभोधौस्थितांध्यायेत्संहारध्यानमीदृशम् ॥ ८१ ॥ कर्मसुक्रूरसौम्येषुध्यायेन्मंत्रीयथातथा ॥ एवंसिद्धेमनौमंत्रीगिरावाचस्पतिर्भवेत् ॥८२॥ दूर्वोत्थयातुलेखन्यारोचनारसयुक्तया ॥ बालस्याच्छिन्ननालस्यजिह्वायांविलिखेन्मनुम् ॥८३॥ संप्राप्तेचाष्टमेवर्षेसर्वशास्त्रज्ञतामियात् ॥ मन्त्रेणायुतसंजप्तांवचांबालस्यकंठतः ॥ ८४ ॥ बध्नीयात्पूर्वसंप्रोक्तंबलिंदत्त्वा विधानतः ॥ द्वादशेवत्सरेप्राप्तेभक्षितासाकवित्वकृत् ॥ ८५ ॥ ज्योतिष्मतीभवंतैलंकर्षमात्रंसुमंत्रितम् ॥ उपरागेजलस्थोयोऽश्नीयाद्वाचस्पतिर्भवेत् ॥८६॥ चतुष्पथेश्मशानेवाहित्वालज्जाभयंतथा ॥ जपेच्छवंसमारुह्यविद्यातत्परमानसः ॥८७॥ शृणोत्यसावमुंशब्दंनिशीथेजपतत्परः ॥ पारगोभव विद्यानांसर्वांसिद्धिमवाप्नुहि ॥ ८८ ॥

॥ ८१ ॥ क्रूरेषुमारणे तामसध्यानम् ॥ उच्चाटनवश्यादौरक्तम् ॥ शांतौपुष्टौश्वेतम् ॥ ८२–८८ ॥

॥ ८९ ॥ उभावपिशिशूनैयायिकवेदांतिनौभूत्वाविवादंकुर्वात ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ निर्वासानग्नः वि शिखोमुक्तकेशः ॥ कृष्णभूताहे कृष्णपक्षचतुर्दश्याम् ॥ ९४ ॥ ९५ ॥ इति श्रीमंत्रमहोदधिव्या० नौकायांतारा



विद्वत्कुलसमुद्भूतमष्टवर्षशिशुद्वयम् ॥ उपवेश्यतयोर्मूर्ध्निकरौदत्त्वाजपेन्मनुम् ॥८९॥ वेदांतन्यायसंयुक्त्याविवदेतेउभावपि ॥ यःकौतुकीसआश्चर्यंविद्यायाःपश्यतुध्रुवम् ॥९०॥ विधायवेदिकांरम्यांविजनेकदलीवने ॥ तत्रासीनोजपेद्विद्यामर्कलक्षंविधानतः ॥९१॥ दासीचालितदोलायामारूढांसुस्मिताननाम्॥पुन्नागचंपकाशोकरंभाविपिनसंस्थिताम् ॥ ९२ ॥ एवंध्यायन्भगवतींबलिंदद्याज्जपांततः॥ एवंकुर्वन्नरःसर्वमभीष्टंलभतेचिरात् ॥९३॥ निर्वासाविशिखःप्रेतभूमिस्थोयोजपेन्मनुम् ॥ अयुतंकृष्णभूताहेसवाक्सिद्धिमवाप्नुयात् ॥९४॥ विद्यांसौख्यंधनंपुष्टिमायुःकीर्तिंबलंश्रियः ॥ रूपंकामयमानेनतारासेव्यानिरंतरम् ॥९५ ॥ इति श्रीमन्मंत्रमहोदधौतारामंत्रभेदकथनंनामपंचमस्तरंगः॥५॥छिन्नमस्तामनुंवक्ष्येशीघ्रसिद्धिविधायिनम्॥पद्मासनाशिवायुग्मंभौतिकःशशिशेखरः॥१॥



भेदोनामपंचमस्तरंगः ॥ ५ ॥ छिन्नमस्तामंत्रमाह ॥ पद्मेति ॥ पद्मासनाश्रीं ॥ शिवाह्रीं ॥ भौतिकःसबिंदुःऐं॥१ ॥

पद्मानिभयुतः सदागतिः एयुतो यः ये ॥ यथा ॐ श्रीं ह्रीं ह्रीं ऐं वज्रवैरोचनीये ह्रीं ह्रीं फट् स्वाहेति ॥ २ ॥

॥ ३ ॥ ४ ॥ अस्त्रमंत्रमाह ॥ विसर्गइति ॥ ॐ अः वसुरक्ष ह्रीं ह्रीं अस्त्रंफडिति ॥ सर्वैस्वाहांताः ॥ ध्यान

वज्रवरोचनीपद्मनाभयुक्तःसदागतिः ॥ मायायुगास्त्रदहनप्रियांतःप्रणवादिकः ॥ २ ॥ मन्त्रः सप्त
दशार्णोयंभैरवोस्यमुनिर्मतः ॥ सम्राट्छंदश्छिन्नमस्तादेवताभुवनेश्वरी ॥ ३ ॥ आंखड्गायहृदा
ख्यातमींखड्गायशिरःस्मृतम् ॥ ऊंवज्रायशिखाप्रोक्ताऐंपाशायतनुच्छदम् ॥ ४ ॥ औमंकुशायने
त्रंस्याद्विसर्गोवसुरक्षयुक् ॥ मायायुग्मंचास्त्रमंगमनवःप्रणवादिकाः ॥ ५ ॥ स्वाहांताःप्रोदिता
एवमंगेविन्यस्यतांस्मरेत् ॥ भास्वन्मंडलमध्यगांनिजशिरश्छिन्नंविकीर्णालकं स्फारास्यंप्रपिबद्गला
त्स्वरुधिरंवामेकरेबिभ्रतीम् ॥ याभासक्तरतिस्मरोपरिगतांसख्यौनिजेडाकिनीवर्णिन्यौपरिदृश्यमोद
कलितांश्रीछिन्नमस्तांभजे ॥ ६ ॥ ध्यात्वैवंप्रजपेल्लक्षचतुष्कंतद्दशांशतः ॥ पालाशैर्बिल्वजैर्वापिजुहु
यात्कुसुमैःफलैः ॥ ७ ॥ आधारशक्तिमारभ्यपरतत्त्वांतपूजिते ॥ पीठेजयाख्याविजयाजिताचाप्यप
राजिता ॥ ८ ॥ नित्याविलासिनीषष्ठीदोग्ध्र्यघोराचमंगला ॥ दिक्षुमध्येचसंपूज्यावनपीठस्यशक्तयः ॥ ९ ॥

माह ॥ भास्वादिति ॥ याभोमैथुनंतदासक्तरतिकामोपरिस्थिताम् ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

१ अस्यश्रीछिन्नमस्तामंत्रस्यभैरवऋषिः सम्राट्छंदः छिन्नमस्ताभुवनेश्वरीदेवताममाभीष्टसिद्ध्यर्थेजपेविनियोगः ।

पीठमंत्रमाह ॥ सर्वांति ॥ सद्दक्भृगुः सिः ॥ समौतिकः खड्गीशः ऐयुतोवःवै ॥ भगम् ए यथा-ॐसर्वबुद्धिप्रदेवर्ण नीयेसर्वसिद्धिप्रदेडाकिनीयेॐवज्रवैरोचनयिएह्योहिनमः॥ वेदरामाक्षरश्चतुस्त्रिंशदर्णः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

सर्वबुद्धिप्रदेवर्णनीयेसर्वभृगुःसद्दक् ॥ द्धिप्रदेडाकिनीयेचतारोवज्रसमौतिकः ॥१०॥ खड्गीशोरोच
नीयेचभगंह्येहिनमौतिकः ॥ तारादिः पीठमंत्रोयंवेदरामाक्षरोमतः ॥ ११ ॥ समर्प्यासनमेतेनतत्रसं
पूजयेच्छिवाम् ॥ त्रिकोणमध्यषट्कोणपद्मभूपुरमध्यतः ॥ १२ ॥ बाह्यावरणमारभ्यपूजयेत्प्रतिलो
मतः ॥ भूपुराद्बाह्यभागेषुवज्रादीनिप्रपूजयेत् ॥१३॥ तदंतःसुरराजादीन्पूजयेद्धरितांपतीन् ॥ भूपुर
स्यचतुर्द्वार्षुद्वारपालान्यजेदथ ॥ १४ ॥ करालविकरालाख्यावतिकालस्तृतीयकः ॥ महाकालश्चतु
र्थःस्यादथपद्मेष्टशक्तयः ॥१५॥ एकलिंगायोगिनीचडाकिनीभैरवीतथा ॥ महाभैरविकेंद्राक्षीत्वसि
तांगीतुसप्तमी ॥१६॥ संहारिण्यष्टमीचेतिषट्कोणेष्वंगमूर्तयः । त्रिकोणगच्छिन्नमस्तापार्श्वयोस्तुसखी
द्वयम् ॥१७॥ डाकिनीवर्णिनीसंज्ञेतारवाग्भ्यांप्रपूजयेत् ॥ एवंपूजादिभिःसिद्धेमंत्रेमंत्रीमनोरथान् १८॥

सुरराजादीन् इन्द्रादीन् ॥ हरितांदिशांपतीन् ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ तारवाग्भ्याम् ॐऐंडाकिन्यैनमः॥१८॥

॥ १९ ॥ २० ॥ करवीरस्यकुसुमैःपुष्पैः ॥ प्रसूनंकुसुमंसुमामित्यमरोक्तेः ॥२१॥ रक्तैःकरवीरैरितिपूर्वेण संबंधः॥ तत्संख्ययालक्षेण ॥ २२ ॥ गोमायुःशृगालः ॥ तामेवलक्ष्मीमेव ॥ पायसांधसापायसान्नेन ॥ २३ ॥ २४ ॥ नार्या

प्राप्नुयान्निखिलान्सद्योदुर्लभांस्तत्प्रसादतः ॥ श्रीपुष्पैर्लभतेलक्ष्मींतत्फलैःस्वसमीहितम् ॥ १९ ॥
वाक्सिद्धिंमालतीपुष्पैश्चंपकैर्हवनात्सुखम् ॥ घृताक्तंछागमांसयोजुहुयात्प्रत्यहंशतम् ॥२०॥ मास
मेकंतुवशगास्तस्यस्युःसर्वपार्थिवाः ॥ करवीरस्यकुसुमैःश्वेतैर्लक्षंजुहोतियः ॥ २१ ॥ रोगजालंपरा
भूयसुखीजीवेच्छतंसमाः ॥ रक्तैस्तत्संख्ययाहुत्वावशयेन्मंत्रिणोनृपान्॥२२॥फलैर्हुत्वाप्नुयाल्लक्ष्मी
मुदुंबरपलाशजैः ॥ गोमायुमांसैस्तामेवकवितापायसांधसा ॥२३॥ बंधूककुसुमैर्भाग्यंकर्णिकारैःस
मीहितम्॥तिलतंडुलहोमेनवशयेन्निखिलाञ्जनान्॥२४॥ नारीरजोभिराकृष्टिर्मृगमांसैःसमीहितम्॥
स्तंभनंमाहिषैर्मांसैःपंकजैःसघृतैरपि ॥ २५ ॥ चिताग्नौपरभृत्पक्षैर्जुहुयादरिमृत्यवे॥उन्मत्तकाष्ठदी
प्तेग्नौतत्फलंवायसच्छदैः॥ २६ ॥

रजोभिर्ऋतुकालनिर्गतरुधिरैराकर्षणम् ॥ सघृतैःपंकजैरपिस्तंभनमेव ॥ २५ ॥ परभृत्कोकिलः ॥ उन्मत्तोधत्तूरः॥ तत्काष्ठज्वलितेऽग्नौकाकपक्षैर्होमात्फलमारिमृत्युरेवस्यात् ॥ २६ ॥

॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥३२॥३३॥३४॥३५॥३६॥ प्रयोगांतरमाह ॥ उषसीति ॥ कविंशुक्राचार्यम् ॥ ३७ ॥



द्यूतेवनेनृपद्वारेसमरेवैरिसंकटे ॥ विजयंलभतेमंत्रीध्यायन्देवींजपन्मनुम् ॥ २७॥मुक्तौमुक्तौसितां
ध्यायेदुच्चाटेनीलरोचिषम् ॥ रक्तांवश्येमृतौधूम्रांस्तंभनेकनकप्रभाम् ॥ २८ ॥ निशिदद्याद्बलिं
तस्यैसिद्ध्यैमदिरादिना ॥ गोपनीयःप्रयोगोथप्रोच्यतेसर्वसिद्धिदः ॥ २९ ॥ भूताहेकृष्णपक्षस्य
मध्यरात्रेतमोवने ॥ स्नात्वारक्तांबरधरोरक्तमाल्यानुलेपनः ॥ ३० ॥ आनीयपूजयेन्नारींछिन्नमस्ता
स्वरूपिणीम् ॥ सुंदरींयौवनाक्रांतांनरपंचकगामिनीम् ॥३१॥ सस्मितांमुक्तकबरींभूपादानप्रतोषि
ताम् ॥ विवस्त्रांपूजयित्वैनामयुतंप्रजपेन्मनुम् ॥ ३२ ॥ बलिंदत्त्वानिशांनीत्वासंप्रेष्यधनतोषि
ताम्॥ भोजयेद्विविधैरन्नैर्ब्राह्मणान्देवताधिया॥३३॥अनेनविधिनालक्ष्मींपुत्रान्पौत्रान्यशःसुखम्॥
नारीमायुश्चिरंधर्मानिष्टमन्यदवाप्नुयात् ॥ ३४ ॥ तस्यांरात्रौव्रतंकार्यंविद्याकामेनमंत्रिणा॥मनोरथे
षुचान्येषुगच्छेत्तांप्रजपन्मनुम् ॥ ३५ ॥ किंबहूक्तेनविद्यायाअस्याविज्ञानमात्रतः॥ शास्त्रज्ञानंपाप
नाशःसर्वसौख्यंभवेद्ध्रुवम् ॥ ३६ ॥ उषस्युत्थायशय्यायामुपविष्टोजपेच्छतम् ॥ षण्मासाभ्यंतरे
मंत्रीकवित्वेनजयेत्कविम् ॥ ३७ ॥

तारापुटांमायां ॐ ह्रीं ॐ इति ॥ ३८ ॥ ३९ ॥ रेणुकाशबरीमाह ॥ प्रणवइति ॥ कमलाश्रीं ॥ मायाह्रीं ॥ सृणिः क्रों ॥ इंदुयुतोऽधरः ऐं ॥ मंत्रोयथा-ॐ श्रींह्रींक्रोंऐं ॥ षडंगमाह ॥ पंचेति ॥ समस्तेनाखिलम् ॥ ४० ॥ ४१ ॥ ४२ ॥

शिवेनकीलिताविद्यातदुत्कीलनमुच्यते ॥ मायांतारपुटांमंत्रीजप्यादष्टोत्तरंशतम् ॥ ३८ ॥ मंत्रस्यादौ तथैवांतेभवेत्सिद्धिप्रदातुसा ॥ एषनूनंविधिर्गोप्यःसिद्धिकामेनमंत्रिणा ॥ ३९ ॥ उदिताछिन्नमस्तेयं कलौशीघ्रमभीष्टदा ॥ रेणुकाशबरीविद्यातादृश्येवोच्यतेधुना ॥ ४० ॥ प्रणवःकमलामायासृणिरिंदुयुतोधरः ॥ पंचाक्षरीमहाविद्याभैरवोस्यमुनिर्मतः ॥ ४१ ॥ पंक्तिश्छंदोरेणुकाख्याशबरीदेवतोदिता ॥ पंचवर्णैःसमस्तेनकुर्वीतमनुनांगकम् ॥ ४२ ॥ हेमाद्रिसानावुद्यानेनानाद्रुममनोहरे ॥ रत्नमंडपमध्यस्थवेदिकायांस्थितांस्मरेत् ॥ ४३ ॥ गुंजाफलाकल्पितहाररम्यांश्रुत्योः शिखंडंशिखिनोवहंतीम् ॥ कोदंडबाणौदधतींकराभ्यांकटिस्थवल्कांशबरींस्मरेयम् ॥ ४४ ॥ ध्यात्वैवंप्रजपेल्लक्षंपंचकंतद्दशांशतः ॥ फलैर्बिल्वैःप्रजुहुयात्तत्काष्ठैरेधितेऽनले ॥ ४५ ॥

ध्यानमाह ॥ हेमाद्रीति ॥ मेरुशिखरे ॥ ४३ ॥ शिखिनोमयूरस्यपिच्छंकर्णयोर्दधतीम् ॥ कोदंडंधनुर्वामे ॥ बाणंदक्षे ॥ ४४ ॥ ४५ ॥

---

१ अस्यरेणुकाशबरीमंत्रस्यभैरवऋषिःपंक्तिश्छंदःरेणुकाशबरीदेवताममाभीष्टसिद्ध्यर्थेजपेविनियोगः ।

पूर्वोदितेजयादिके ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ स्वयंवरकलामाह ॥ तारइति ॥ निद्राभकारः ॥

पूर्वोदितेर्चयेत्पीठेषडंगावृत्तिरादिमा ॥ द्वितीयावरणेपूज्याःशबर्य्योअष्टशक्तयः ॥ ४६ ॥ हुंकारी खेचरीचाथचंडास्याच्छेदनीतथा ॥ क्षेपणास्त्रीचहुंकारीक्षेमकारीतथाष्टमी ॥ ४७ ॥ तृतीयेदशादिक्पालावज्राद्यानिचतुर्थके ॥ एवंसिद्धंमनुंसम्यक्काय्र्येकर्मणियोजयेत् ॥४८॥ मल्लीपुष्पैर्जनावश्या इक्षुखंडैर्धनाप्तयः॥पंचगव्यैर्धेनवःस्युरशोककुसुमैस्सुताः॥४९॥ इंदीवरैःकृतेहोमेनृपपत्नीवशंवदा॥ अन्नाद्यिरन्नैःसकलंमधूकैर्वांछितंभवेत् ॥५०॥ प्रोदिताशबरीविद्याकलौत्वरितसिद्धिदा॥अथोच्यते विवाहाप्त्यैस्वयंवरकलाशिवा ॥५१॥ तारोमायायोगिनीतिद्वयंयोगेश्वरिद्वयम् ॥ योगनिद्रायंकरि स्यात्सकलस्थावरेतिच॥५२॥जंगमस्यमुखंप्रोच्यहृदयंममसंपठेत्॥वशमाकर्षयाकर्षयपवनोवह्नि सुंदरी ॥५३॥पंचाशद्वर्णविद्यायामुनिरस्याःपितामहः॥छंदोतिजगतीदेवीगिरिपुत्रीस्वयंवरा॥५४॥

पवनोयः ॥ वह्निसुन्दरीस्वाहा ॥ स्वरूपमन्यत् ॥ यथा–ॐ ह्रीं योगिनि योगिनि योगेश्वरि योगेश्वरि योगभयंकरि सकलस्थावरजंगमस्यमुखंहृदयंममवशमाकर्षयाकर्षयस्वाहेति ॥ ५२ ॥ ५३ ॥ ५४ ॥

१ अस्यस्वयंवराकलामंत्रस्यब्रह्माऋषिःजगतीछंदःदेवीगिरिपुत्रीस्वयंवरादेवताममाभीष्टसिद्ध्यर्थेजपेविनियोगः ।

षडंगमाह॥जगत्त्रयेतीति ॥ ५५ ॥ तारमायादिकाः॥ वश्यमोहिन्यैपदंपश्चिममन्तर्वर्तियेषामीदृशाः ॥ षडंगमन्त्राइ

जगत्त्रयेतिहृदयंत्रैलोक्येतिशिरोमतम्॥उरगेतिशिखासर्वराजेतिकवचंतथा॥५५॥सर्वस्त्रीपुरुषेत्यक्षि
सर्वेत्यस्त्रंसमीरितम्॥तारमायादिकावश्यमोहिन्यैपदपश्चिमाः ॥ ५६ ॥ षडंगमंत्राउद्दिष्टामूलेनव्या
पकंचरेत्॥ध्यायेद्देवींमहादेवंवरीतुंसमुपागताम् ॥५७॥ शंभुंजगन्मोहनरूपपूर्णंविलोक्यलज्जाकुलि
तांस्मिताढ्याम् ॥ मधूकमालांस्वसखीकराभ्यांसंबिभ्रतीमद्रिसुतांभजेयम् ॥५८॥ एवंध्यात्वाजपेल्लक्ष
चतुष्कंतद्दशांशतः ॥ पायसान्नेनजुहुयात्पीठेपूर्वोदितेयजेत् ॥५९॥ त्रिकोणचतुरस्रांगकोणाष्टदल
दिग्दलम् ॥ दिक्कलादंतपत्राणिचतुष्षष्टिदलंपुनः ॥६०॥ वृत्तत्रयंचतुर्द्वारयुक्तंधरणिकेतनम् । पूजा
यंत्रंप्रकुर्वीततत्रसंपूजयेदिमाम् ॥ ६१ ॥

त्युक्तत्वात् ॥ ॐह्रींजगत्त्रयवश्यमोहिन्यैहृदयायनमः-ॐह्रींत्रैलोक्यवश्यमोहिन्यैशिर०-ॐह्रीं उरगवश्यमोहिन्यै
शिखेत्यादिबोध्यम् ॥ मायात्रदीर्घषट्कयुताकार्या ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥

---

१ ॐ ह्रींजगत्त्रयवश्यमोहिन्यै हृदयायनमः ।ॐ ह्रींत्रैलोक्यवश्यमोहिन्यै शिरसेस्वाहा । ॐ ह्रींउरगवश्यमोहिन्यै शिखायैवषट् । ॐ ह्रींसर्वराज वश्यमोहिन्यै कवचायहुं ॐ ह्रीं सर्वस्त्रीपुरुषवश्यमोहिन्यै नेत्रत्रयायवौषट् ॐ ह्रींसर्ववश्यमोहिन्यै अस्त्रायफट् ।

॥ ६२ ॥ ६३ ॥ कलापत्रेषोडशदले ॥ ताराद्येनरमान्तेनश्रीबीजेन ॐश्रींश्रीमितिमनुनाश्रियंयजेत् ॥ द्विरामारे
द्वात्रिंशद्दले ॥ पाशमायांकुशैः ॥ आंह्रींक्रोंशिवायैनमइतिद्वात्रिंशद्वारंतांयजेत् ॥ ६४ ॥ वेदांगपत्रेचतुष्षष्टिदले ॥
श्रीमायामदनैः श्रींह्रींक्लींत्रिपुरायैनमइतितांयजेत् ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ मधुमतीमाह ॥ नारायणइति ॥

त्रिकोणेपार्वतीमिष्ट्वाचतुरस्रेर्चयेदिमाः॥मेधांविद्यांपुनर्लक्ष्मींमहालक्ष्मींचतुर्थिकाम्॥६२॥षट्कोणे
षुषडंगानिस्वरानष्टदलेर्चयेत् ॥ दिग्दलद्वितयेदेवानिंद्रादीनायुधानिच ॥ ६३ ॥ ताराद्येननमोन्ते
नश्रीबीजेनरमांयजेत् ॥ कलापत्रेद्विरामारेपाशमायांकुशैःशिवा॥६४॥वेदांगपत्रेत्रिपुटांश्रीमायामदनै
र्यजेत् ॥ वृत्तत्रयेमहालक्ष्मींभवानींपुष्पसायकाम् ॥६५॥ चतुरस्रंचतुर्द्वार्षुविघ्नेटक्षेत्रेशभैरवान्॥यो
गिनीःपूजयेदित्थंनवावरणमर्चनम्॥६६॥एवंयोभजतेदेवींवश्यास्तस्याखिलाजनाः॥लाजैस्त्रिमधुरो
पेतैर्जुहुयादयुतंतुयः॥६७॥लभतेवांछितांकन्यांधनमानसमन्विताम्॥ एवंस्वयंवराप्रोक्ताप्रोच्यतेमधुम
त्यथ ॥६८॥ नारायणोबिंदुयुतोहल्लेखांकुशमन्मथाः॥ दीर्घवर्मध्रुवोवह्निप्रेयसीवसुवर्णवान्॥६९॥

बिंदुयुतोनारायणः आं ॥ हल्लेखाह्रीं ॥ अंकुशः क्रों ॥ मन्मथः क्लीं ॥ दीर्घवर्महूं ॥ ध्रुवः ॐ वह्निप्रेयसी स्वाहा ॥
मंत्रोयथा-आंह्रींक्रोंक्लींहूं ॐस्वाहा ॥ ६९ ॥

॥७० ॥ स्वाहान्तप्रणवेनास्त्रम् ॥ ७१ ॥ ध्यानमाह ॥ अहीति ॥ नागवल्लीदलंदक्षेनीलपद्मंवामे ॥ ७२ ॥ ७३ ॥

मुनिरस्यमधुश्छन्दस्त्रिष्टुब्मधुमतीतिच ॥ मुन्याद्याःपंचभिर्बीजैःपंचांगानिप्रकल्पयेत् ॥ ७० ॥
अस्त्रंस्वाहांततारेणकृत्वादेवींस्मरेद्बुधः॥ नानाद्रुमलताकीर्णेकैलासगतकानने ॥ ७१ ॥ अहिलता
दलनीलसरोजयुक्करयुगांमणिकांचनपीठगाम् ॥ अमरनागवधूगणसेवितांमधुमतीमखिलार्थकरीं
भजे ॥७२॥ प्रजप्यवसुलक्षंतद्दशांशंजुहुयाद्दलैः॥ बिल्वोत्थैःपूजयेत्पीठेजयादिसर्वशक्तिके ॥७३॥
काणकायांषडंगानिशक्तयोवसुपत्रके ॥ निद्राच्छायाक्षमातृष्णाकांतिरार्याश्रुतिःस्मृतिः ॥ ७४ ॥
शक्रादयस्तदस्त्राणिपूज्यान्यंतेसुखाप्तये ॥ यइत्थंसेवतेदेवींससमृद्धःपदंलभेत् ॥७५॥ रक्तांभोजैर्हु
तैर्म्मंत्रीभूपतीन्वश्यतांनयेत् ॥ नानाभोगान्पायसेनतांबूलैर्वामलोचनाम् ॥ ७६ ॥ दामोदरोबिंदु
युक्तोमधुमत्याःपरोमनुः ॥ पूर्ववद्यजनंचास्यध्यायेद्देवींकुमारिकाम् ॥७७॥ कोटिरुद्धंजपंकुर्वन्वि
द्यापारंगमोभवेत्॥मधुमत्यासमानान्यानानाभोगसुखप्रदा ॥ ७८ ॥

॥ ७४ ॥ ७५ ॥ ७६ ॥ मन्त्रान्तरमाह ॥ दामोदर इति दामोदरएकारः ॥ ७७ ॥ ७८ ॥

---

१ अस्यमधुमतीमंत्रस्यमधुर्ऋषिःत्रिष्टुप्छन्दःमधुमतीदेवताममाभीष्टसिद्ध्यर्थेजपेविनियोगः ।

प्रमदामंत्रमाह ॥ मायेति ॥ वह्न्यासनः शूरः॥ रेफयुतःपःप्र ॥ मदेस्वरूपम् ॥ पावकसुंदरी स्वाहा ॥ मंत्रोयथा ॥ ह्रींप्रमदेस्वाहेतिषडर्णः ॥ ७९ ॥ ८० ध्यानमाह ॥ केयूरेति । केयूरमंगदोवरोदक्षे ॥ संक्रंदनः इंद्रः तदाद्यै

मायावह्न्यासनःशूरोमदेपावकसुंदरी ॥ षडर्णोमनुराख्यातोमुनिःशक्तिःसमीरितः ॥ ७९ ॥ गायत्रीछंदआख्यातंदेवताप्रमदाभिधा ॥ षडंगानिप्रकुर्वीतदीर्घषट्काढ्यमायया ॥ ८० ॥ केयूरमुख्याभरणाभिरामांवराभयेसंदधतींकराभ्याम् ॥ संक्रंदनाद्यामरसेव्यपादांसत्कांचनाभांप्रमदांभजामि ॥ ८१ ॥ रसलक्षंजपेन्मंत्रंदशांशंजुहुयाद्घृतैः ॥ पूर्वोक्तेपूजयेत्पीठेषडंगाशाधवायुधैः ॥ ८२ ॥ निर्जनेकाननेरात्रावयुतंनियुतंजपेत् ॥ सहस्रंपायसान्नेनहुत्वाशयनमाचरेत् ॥८३॥ त्रिसप्तदिवसंयावदेवमाचरतोनिशि ॥ देवीदृग्गोचरीभूयदद्यादिष्टानिमंत्रिणे ॥ ८४ ॥ मायाप्रमोदेठद्वंद्वंषडर्णोमनुरुत्तमः ॥ ऋष्याद्यर्चनपर्यंतंप्रमदावदुदीरितम् ॥ ८५ ॥

दैवैःसेव्यौपादौयस्याः ॥ ८१ ॥ आशाधवादिक्पालाः ॥ ८२ ॥ ८३ ॥ ८४ ॥ प्रमोदामाह ॥ मायेति ॥ ठद्वयं स्वाहा ॥ मंत्रोयथा ॥ ह्रींप्रमोदेस्वाहेतिषडर्णः ॥ ८५ ॥

॥ ८६ ॥ बंदीमंत्रमाह ॥ तारइति ॥ ॐहिलि हिलि बंदीदेव्यैनमइत्येकादशाक्षरः ॥ ८७ ॥ ८८ ॥ ध्यानमाह ॥

सरितोनिर्जनेतीरेमण्डलेचंदनैःकृते ॥ जपहोमौविधायोक्तौप्रमोदांपश्यतिध्रुवम् ॥ ८६ ॥ तारोहि
लियुगंबन्दीदेवीङेन्तानमोंतकः ॥ एकादशाक्षरोमंत्रोभैरवत्रिष्टुभौपुनः॥ ८७ ॥ बन्दीमुन्यादयः
प्रोक्ताएकेनद्वन्द्वशोङ्गकम् ॥ विधायसंस्मरेद्वंदीरत्नसिंहासनस्थिताम् ॥८८॥ सतोयपाथोदसमान
कांतिमंभोजपीयूषकरीरहस्ताम् ॥ सुरांगनासेवितपादपद्मांभजामिबंदींभवबंधमुक्त्यै ॥८९॥ लक्ष
युग्मंजपेन्मन्त्रीपायसान्नैर्दशांशतः ॥ हुत्वापूर्वोदितेपीठेपूजयेद्बंधमुक्तये ॥९०॥ अंगपूजाकेसरेषुश
क्तयःपत्रमध्यगाः ॥ कालीताराभगवतीकुब्जाह्वाशीतलापिच ॥ ९१ ॥ त्रिपुरामातृकालक्ष्मीर्दिगी
शाआयुधान्यपि ॥ एवमाराधिताबंदीप्रयच्छेदीप्सितंनृणाम् ॥९२॥ एकविंशतिवस्रांतमयुतंप्रत्यहं
जपेत् ॥ ब्रह्मचर्य्यरतोमंत्रीगणेशार्चनपूर्वकम् ॥ ९३ ॥

सतोयेति ॥ सजलमेघश्यामांपीयूषकरीरोऽमृतकुंभःसदक्षे ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ वस्रोदिनम् ॥ ९३ ॥

---

१ अस्यबंदीमन्त्रस्यभैरवऋषिःत्रिष्टुप्छंदः बंदीदेवताममाभीष्टसिद्धयर्थेजपेविनियोगः ।

प्रयोगांतरमाह ॥ चतुरस्रइति ॥ अपूपोपरिघृतेनचतुरस्रांतर्वर्तिठकारंविलिख्यतत्रामुकंमोचयेतिलिखेत् ॥ दिक्षु मायाबीजंच ॥ अष्टादशार्णमंत्रेणतंवेष्टयित्वातत्रदेवीमावाह्याभ्यर्च्यकारागृहस्थायाऽपूपंदद्यात् ॥ सचतज्जग्ध्वाबंधनान्मुच्यते ॥ १४ ॥ १५ ॥ अष्टादशार्णमाह ॥ वागिति ॥ केशवःअकारः ॥ ठद्वयंस्वाहा ॥ स्वरूपमन्यत् ॥

कारागृहनिबद्धस्यमोक्षएवंकृतेभवेत् ॥ चतुरस्रेठकारांतरपूपोपरिसंलिखेत् ॥ १४ ॥ साध्यनामघृते नैवमायाबीजंचदिक्ष्वपि ॥ मनुनाष्टादशार्णेनचतुरस्रंप्रवेष्टयेत् ॥ १५ ॥ वाग्बीजंभुवनेशानीरमाबंदिचकेशवः॥मुष्यबंधन्ततोमोक्षंकुरुयुग्मंचठद्वयम्॥१६॥ वसुचन्द्रार्णमन्त्रोयंक्षिप्रंबन्धविमोक्षदः॥ तस्मिन्नपूपेसंपूज्यबन्दीमावरणान्विताम् ॥१७॥ कारानिकेतनस्थायमित्रायप्रददीततम् ॥ सशुद्धो वाक्यतोभुत्वाभक्षयेत्तमपूपकम् ॥ १८॥ तस्मिन्संभक्षितेबद्धोमुच्यतेबन्धनाद्द्रुतम् ॥ एवंसंप्रोदिता बन्दीस्मरणाद्बंधमुक्तिदा ॥१९॥ इति श्रीमन्महीधरविरचितेमन्त्रमहोदधौछिन्नमस्तादिमंत्रकथनं नामषष्ठस्तरंगः ॥ ६ ॥

स्पष्टंच ॥ यथा ॥ ऐंह्रींश्रींबंदिअमुष्यबंधमोक्षंकुरु कुरु स्वाहेति ॥ वसुचंद्रार्णोऽष्टादशार्णः ॥१६॥ १७॥१८॥१९॥
इतिमंत्रमहोदधिनौकायांछिन्नमस्तादिकथनंनामषष्ठस्तरंगः॥ ६ ॥

अथवटयाक्षिणीमाह ॥ पद्मनाभइति ॥ पद्मनाभए ॥ झिंटीशस्थौवियद्वायूपस्थितौहकारयकारौह्यै ॥ सद्दृकावियताहि ॥ १ ॥ यक्षीत्यादिस्वरूपम् ॥ सनासिकंतोयम् ऋयुतोवः ॥ वृक्षेत्यादिस्वरूपंस्पष्टम् ॥ यथा ॥ एह्येहियक्षियक्षिमहायक्षिवटवृक्षनिवासिनिशीघ्रंमेसर्वसौख्यंकुरुकुरुस्वाहा ॥ द्वात्रिंशदर्णः ॥ २ ॥ ३ ॥ ४ ॥ वर्ण

अथसर्वेष्टसंसिद्ध्यैप्रवक्ष्येवटयक्षिणीम् ॥ पद्मनाभोवियद्वायूझिंटीशस्थौसद्दृग्वियत् ॥ १ ॥ यक्षियक्षिमहायक्षिवटतोयंसनासिकम् ॥ क्षनिवासिनिशीघ्रंमेवसर्वसौख्यंकुरुद्वयम् ॥ २ ॥ स्वाहाद्वात्रिंशदर्णोयंमन्त्रोऽखिलसमृद्धिदः ॥ ऋषिः[१]स्याद्विश्रवाश्छंदोनुष्टुब्देवीतुयक्षिणी ॥ ३ ॥ वह्निभिः[३]श्रुतिभिर्वेदैर्वसुभिः[४]सप्तभीरसैः ॥ प्रकुर्वीतषडंगानिमन्त्रवर्णान्न्यसेत्ततः ॥ ४ ॥ मस्तकेनेत्रयोर्वक्त्रनासाकर्णांसयुग्मतः ॥ स्तनयोःपार्श्वयोर्द्वन्द्वेहृदिनाभौशिवोदरे ॥ ५ ॥ कट्यूरुनाभिजंघासुजानुनोर्मणिबन्धयोः ॥ हस्तयोर्मूर्ध्निविन्यस्यध्यायेद्देवींवटस्थिताम् ॥ ६ ॥ अरुणचन्दनवस्त्रविभूषितांसजलतोयदतुल्यतनूरुचम् ॥ स्मरकुरंगदृशंवटयक्षिणींक्रमुकनागलतादलयुक्कराम् ॥ ७ ॥

न्यासमाह ॥ मस्तकइति ॥ नेत्रयोर्द्वौ ॥ नासाकर्णांसस्तनपार्श्वकट्यूरुजंघाजानुमणिबंधहस्तेषुद्वौद्वौ ॥ अन्यत्रैकः ॥ शिवंलिंगम् ॥ ५ ॥ ६ ॥ ध्यानमाह ॥ अरुणेति ॥ क्रमुकंपूगीफलंदक्षे ॥ ७ ॥

१ अस्य यक्षिणीमंत्रस्याविश्रवाऋषिरनुष्टुप्छंदः यक्षिणीदेवताममाभीष्टसिद्ध्यर्थेजपेविनियोगः ।

॥८॥९॥१०॥११॥१२॥१३॥१४॥१५॥१६॥१७॥पद्मोति॥पद्माद्व्यंश्रींश्रीं॥यक्षिणीस्वरूपम्॥सचंद्रंगगनत्रयंहंहंहं ॥ १८॥

लक्षद्वयंजपेन्मंत्रंबन्धूकैस्तद्दशांशतः ॥ हुत्वापीठेयजेद्देवीमुच्यंतेपीठशक्तयः ॥८॥ कामदामानदानक्षामधुरामधुरानना ॥ नर्मदाभोगदानंदाप्राणदापीठशक्तयः ॥ ९ ॥ मनोहरायययक्षिण्यायोगपीठायहृन्मनुः ॥ पीठस्योक्तस्तत्रदेवींपूजयेद्वटयक्षिणीम् ॥१०॥कर्णिकायांपडंगानिपत्रेष्वेतायजेत्पुनः॥ सुनंदाचंद्रिकाहासासुलापामदविह्वला ॥ ११॥ आमोदाचप्रमोदापिवसुदेत्यष्टशक्तयः॥इंद्रादीनथवज्रादीन्संपूज्यलभतेसुखम् ॥१२॥ एवमाराधितोमंत्रःप्रयोगेषुक्षमोभवेत्॥निर्मनुष्येवनेगत्वान्यग्रोधाधस्तलेजपेत् ॥ १३ ॥ प्रतिघस्रंतमस्विन्यांसहस्रंनियतेंद्रियः ॥ सप्तमेदिवसेप्राप्तेकृत्वाचन्दनमण्डलम् ॥१४॥ तत्राज्यदीपंकृत्वास्मिन्पूजयेद्वटयक्षिणीम्॥तदग्रेप्रजपेन्मंत्रमानिशीथंसमाहितः॥ ॥ १५ ॥ शृणोतिनूपुरारावंमंत्रीगीतध्वनिंततः ॥ श्रुत्वैवप्रजपेन्मंत्रंवीतत्रासश्चतांस्मरेत् ॥ १६ ॥ ततःप्रत्यक्षतोदेवीमीक्षतेसुरतार्थिनीम्॥तत्कामपूरणात्सातुददातीष्टानिमन्त्रिणे ॥ १७॥ किंबहूक्तेनसर्वेष्टपूरणीवटयक्षिणी ॥ पद्माद्व्यंयक्षिणीतिसचन्द्रंगगनत्रयम् ॥ १८ ॥

१ मनोहराययक्षिणीयोगपठिायनमः।

वैश्वानरप्रियास्वाहा ॥ १९ ॥ चंपकानांकांतारेवने ॥ २० ॥ २१ ॥ २२ ॥ मंत्रांतरमाह ॥ क्रोधीशोति ॥ मन्विंदु

वैश्वानरप्रियांतोयंदशवर्णोमनुर्मतः ॥ ऋषिःपूर्वोदितश्छंदःपंक्तिर्देवीतुयक्षिणी ॥ १९ ॥ चंद्रैकत्रि त्रियु

ग्मेनसर्वेणांगक्रियामता ॥ स्मरेच्चंपककांतारेरत्नसिंहासनस्थिताम् ॥ २० ॥ सुवर्णप्रभांरत्नभूषाभिरामां

जपापुष्पसच्छायवासोयुगाढ्याम् ॥ चतुर्दिक्षुदासीगणैःसेवितांघ्रिंभजेसर्वसौख्यप्रदांयक्षिणींताम् ॥

॥ २१ ॥ एवंध्यात्वाजपेल्लक्षंजपापुष्पैर्दशांशतः ॥ जुहुयात्पूर्ववत्पीठेपूर्वोक्तेप्रयजेदिमाम् ॥ २२ ॥

क्रोधीशवह्निमन्विन्दुयुक्तोमदनमेखले ॥ हृदयाग्निप्रियांतोयंताराद्योद्वादशाक्षरः ॥ २३ ॥ अस्येज्या

पूर्ववत्सर्वामेखलायक्षिणीत्वियम् ॥ चतुर्दशाहपर्य्यंतंमधूकावनिरुट्तले ॥ २४ ॥ प्रजपेदयुतंनित्यं

सहस्रंहवनंचरेत् ॥ मधूकपुष्पैर्मध्वक्तैस्तत्काष्ठैश्चहुताशने ॥ २५ ॥ मंतुष्टैवंकृतेदेवीप्रयच्छेदंजनंशु

भम् ॥ येनाक्तनयनोमंत्रीनिधिंपश्येद्धरागतम् ॥ २६ ॥

युक्तो ॥ औंबिन्दुयुक्तो क्रोधीशवह्नीकारतेनक्रौं ॥ मदनमेखलेस्वरूपम् ॥ हृदयंनमः ॥ अग्निप्रियास्वाहा ॥ २३ ॥

मधूकावनिरुट्तले ॥ मधूकवृक्षाधस्तात् ॥ २४ ॥ २५ ॥ २६ ॥

---

१ श्रींश्रींयक्षिणीहंहंस्वाहेतिदशार्णः । २ अस्यवटयाक्षिमंत्रस्यविश्रवाऋपिःपङ्क्तिश्छंदःयक्षिणीदेवताममाभीष्टसिद्ध्यर्थेजपेविनियोगः । ३ ॐक्रौंमदनमे

खलेनमःस्वाहेतिद्वादशार्णः ।

मंत्रान्तरमाह ॥ प्रणवइति ॥ वाकऐं ॥ विशालेस्वरूपं॥मायाह्रीं ॥ पद्माश्रीं ॥ मनोभवःक्लीं ॥ ठद्वयंस्वाहा ॥ २७ ॥

प्रणवोवाग्विशालेचमायापद्मामनोभवः॥ ठद्वयांतोदशार्णोयंविशालायक्षिणीमनुः॥२७॥ मुन्यादि पूजापर्य्यंतंपूर्ववत्समुदीरितम् ॥ चिंचातरोरधःस्थित्वाशुचिर्लक्षंजपेन्मनुः ॥२८॥ शतपत्रैर्दशांशेन जुहुयात्तोषिताततः ॥ रसंददातियेनासौनीरोगायुरवाप्नुयात् ॥२९॥ वाक्चंद्रशेखरौशार्ङ्गीपिनाकी शौमनुस्थितौ ॥ लांगलित्रितयंसेंदुवर्मदीर्घंशुचिप्रिया ॥३०॥ वस्वक्षरमनोःशत्रुघातिनःकपिलोमु निः ॥ छन्दोनुष्टुप्चवाराहीवार्तालीदेवतोदिता ॥ ३१ ॥ द्विचंद्रंभूमिचंद्रैकयुग्माणैरंगकल्पना ॥ वाराहींचेतसिध्यायेच्छत्रुनिग्रहकारिणीम् ॥ ३२ ॥

॥२८॥२९॥वाराहीमाह ॥ वागिति ॥ मनुस्थितौचंद्रशेखरौशार्ङ्गीपिनाकीशौ ॥ औबिंदुयुतौगलौ ॥ ग्लौं ॥ सेंदु लांगलित्रयंठत्रयं ठंठंठं दीर्घवर्महूं ॥ शुचिप्रियास्वाहा ॥ ३० ॥ ३१ ॥ ३२ ॥

१ ॐ ऐंविशालेह्रींश्रींक्लींस्वाहेतिदशार्णः । २ ऐंग्लौंठंठंठंहूँस्वाहा । ३ अस्यशत्रुघातिनःमंत्रस्यकपिलऋषिःअनुष्टुप्छन्दःवाराहीवार्त्तालीदेवताममाभीष्ट सिद्ध्यर्थेजपेविनियोगः ।

ध्यानमाह ॥ विद्युदिति ॥ पाशमुद्गरादक्षयोः ॥ अंकुशशक्तीवामयोरूर्ध्वाधःस्थयोः॥नेत्रजैर्वीतिहोत्रैरग्निभिर स्माकमरिसमूहंनाशयतु ॥ ३३ ॥ वसुलक्षमष्टलक्षंहयारिजैःकरवीरैः ॥ हूयादित्याशीर्लिङ् ॥ ३४ ॥ दिगिना

विद्युद्रोचिर्हस्तपद्मैर्दधानापाशंशक्तिंमुद्गरंचांकुशंच॥ नेत्रोद्भूतैर्वीतिहोत्रैस्त्रिनेत्रावाराहीनःशत्रुवर्गंक्षि णोतु ॥ ३३ ॥ वसुलक्षंजपित्वांतेबिल्वपत्रैर्हयारिजैः॥धात्रीफलैर्भृंगराजैःकुशैर्हूयाद्दशांशतः ॥३४॥ पूर्वोदितेयजेत्पीठेषडंगैर्दिगिनायुधैः ॥ एवंसिद्धंमनुंमंत्रीयोजपेच्छत्रुनिग्रहे ॥ ३५ ॥सृणिनाशत्रुमा नीयबद्ध्वापाशेनतंदृढम् ॥ मुद्गरेणघ्नतींमूर्ध्नितांस्मरन्नयुतंजपेत् ॥३६॥ जुहुयादयुतंशुद्धैर्वनशुष्कैस्तु गोमयैः॥ प्रक्षिपेद्धोमजंभस्मवापीकूपादिपाथसि ॥३७॥ तत्पानीयस्यपातारोम्रियंतेरिपवोध्रुवम्॥ निर्यांतिहित्वास्थानंवाविद्विषंतःपरस्परम् ॥ ३८ ॥ शत्रुनिग्रहणेदक्षास्मरणादपिमंत्रिणाम् ॥ प्रकीर्तितेयंवाराहीधूमावत्यधुनोच्यते ॥ ३९ ॥ सात्वतत्रितयंसार्धंतत्राद्यौचन्द्रशेखरौ ॥ वैकुंठोऽ नन्तसंयुक्तोजलंनेत्रयुतोहरिः ॥ ४० ॥

दिक्पालाः ॥ ३५ ॥ सृणिनांकुशेन ॥ ३६ ॥ पाथसिजले ॥ ३७ ॥ ३८ ॥ ३९ ज्येष्ठामंत्रमाह ॥ सात्वतेति ॥ सार्धंउयुतं ॥ सात्वतात्रितयं धत्रयं ॥ तेषुद्वौसाबिंदू ॥ धूंधूं ॥ अनंतसंयुतोवैकुंठः आयुतोमः ॥ मा ॥ जलंवः ॥ नेत्रयुतोहरिः ॥ इयुतस्तः ॥ ४० ॥

वह्निजायास्वाहा ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥४५॥ रूषा ॥ अक्षमा ॥ ४६ ॥ ४७ ॥ क्षपाशनोरात्रिभोजी॥४८॥४९॥

अष्टार्णोवह्निजायान्तोमंत्रः[१]शत्रुविनाशनः ॥ पिप्पलादोनिचृज्ज्येष्ठामुनिश्छंदोस्यदेवता ॥ ४१ ॥ आद्यबीजद्वयांतस्थैःषड्वर्णैरंगमीरितम् ॥ श्मशानेसंस्थितांध्यायेज्ज्येष्ठांवायससंस्थिताम् ॥४२॥ अत्युच्चामलिनांबराखिलजनोद्वेगावहादुर्मनारूक्षाक्षित्रितयाविशालदशनासूर्योदरीचंचला॥प्रस्वेदांबुचिताक्षुधाकुलतनुःकृष्णातिरूक्षप्रभाध्येयामुक्तकचासदाप्रियकलिर्धूमावतीमंत्रिणा ॥ ४३ ॥ एवंध्यात्वाजपेल्लक्षंश्मशानेविगतांबरः । निशाभोजीदशांशेनतिलैर्हवनमाचरेत् ॥ ४४ ॥ पूर्वोक्तेपूजयेत्पीठेज्येष्ठांशत्रुविनष्टये ॥ केसरेषुषडंगानिपत्रस्थाअष्टशक्तयः॥ ४५ ॥ क्षुधातृष्णारतिर्निद्रानिर्ऋतिर्दुर्गतीरुषा ॥ अक्षमेतिततोदेवाइंद्राद्याआयुधानिच ॥ ४६ ॥ एवंज्येष्ठांसमाराध्यसिद्धमंत्रःप्रजायते ॥ उपोष्यकृष्णभूताहेनग्नोमुक्तशिरोरुहः ॥ ४७ ॥ शून्यागारेश्मशानेवाकांतारेभूधरेथवा ॥ प्रत्यहंप्रजपेन्त्रिभीर्ध्यायन्देवींक्षपाशनः ॥ ४८ ॥ एवंलक्षंजपन्मंत्रीनाशयेदचिरादरिम् ॥ जुहुतालवणोपेतांराजिकांनिशितत्फलम् ॥ ४९ ॥

१ धूँधूँधूमावतिस्वाहेत्यष्टार्णः । २ अस्यधूमावतीमंत्रस्यपिप्पलादऋषिःनिचृच्छंदःज्येष्ठादेवताममाभीष्टसिद्ध्यर्थंजपेविनियोगः ।

कर्णपिशाचिनीमाह ॥ तारइति ॥ तार ॐ ॥ मायाह्रीं कर्णपिशा स्वरूपम् ॥ कूर्मधांतिमोचनी ॥ सदृशौ इयुतौ ॥
चिनि ॥ कर्णेमेस्वरूपम् ॥ विधिःकः ॥ दंडीथः ॥ इरोयःद्धठयंस्वाहा ॥ ५० ॥ षडंगमाह ॥ एंकाति ॥ अंगानिषट्

तारोमायाकर्णपिशासदृशौकूर्मधांतिमौ ॥ कर्णेमेविधिदंडीरोठद्वयंषोडशार्णकम् ॥ ५० ॥ मनुर्ऋ
ष्यादिपूर्वोक्तंदेवतातुपिशाचिनी॥ ऐंकैकांगोग्निरामाक्षिवर्णैरंगमनोमतम्॥५१॥ चितासनस्थांनरमु
डमालांविभूषितामस्थिमणीन्कराब्जैः ॥ प्रोतांनरांत्रैर्दधतींकुवस्त्रांभजामहेकर्णपिशाचिनींताम् ॥
॥५२॥ श्मशानस्थःशवस्थोवाजपेल्लक्षंसमाहितः ॥ दशांशंजुहुयाद्वह्नौबिभीतकसमिद्वरैः ॥ ५३ ॥
यजेत्पूर्वोदितेपीठेषडंगामरहेतिभिः॥सिद्धमंत्रेजपंकुर्य्यादधस्ताद्बदरीतरोः॥५४॥अशुचिर्लक्षसंख्या
तंतेनतुष्टापिशाचिनी॥परचित्तस्थितांवार्ताभाविनींचवदेच्छ्रुतौ॥५५॥ध्रुवःशिवारमाशीतलायैहार्दन
वाक्षरः॥उपमन्युश्चबृहतीशीतलामुनिपूर्विका॥षड्दीर्घयुक्छिवालक्ष्मीबीजाभ्यांस्यात्षडंगकम्॥५६॥

अमयस्त्रयोरामाश्च ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ शीतलामाह ॥ ध्रुवइति – ध्रुव ॐ ॥ शिवाह्रीं ॥ रामाश्रीं ॥
शीतलायैस्वरूपम् ॥ हार्दनमः षडंगमाह ॥ षडिति ॥ ह्रांश्रांहृत् ॥ ह्रींश्रींशिरइति ॥ ५६ ॥

१ ॐ ह्रींकर्णपिशाचिनिकर्णेमेकथयस्वाहेतिषोडशार्णः । २ अस्यकर्णपिशाचिनीमंत्रस्यपिप्पलादऋषिःनिचृच्छंदः कर्णपिशाचिनीदेवताममाभीष्टसिद्ध्यर्थेजपेविनियोगः । ३ ॐह्रींश्रींशीतलायैनमइतिनवार्णः । अस्यशीतलामंत्रस्यउपमन्युर्ऋषिःबृहतीछंदःशीतलादेवताममाभीष्टसिद्ध्यर्थेजपेविनियोगः ।

ध्यानमाह ॥ दिगिति ॥ मार्जनीदक्षे ॥ शूर्पवामे ॥ ५७ ॥ ५८ ॥ ५९ ॥ स्वप्नेश्वरीमाह ॥ प्रणवइति ॥ प्रणव ॐ ॥



दिग्वाससंमार्जनिकाचशूर्पंकरद्वयेसंदधतींघनाभाम्॥श्रीशीतलांसर्वरुजार्तिनष्टौरक्तांगरागस्रजमर्च
यामि ॥५७॥ अयुतंप्रजपेन्मंत्रंपायसेनसहस्रकम् ॥ जुहुयात्पूर्ववत्पीठेस्फोटानांनाशिनीत्वियम् ॥
॥ ५८ ॥ नाभिमात्रेजलेस्थित्वायःसहस्रंजपेन्मनुम् ॥ तेनसंमार्जितास्तीव्राःस्फोटानश्यंतितत्क्षणा
त् ॥५९॥ प्रणवःकमलास्वप्नेश्वरिकार्य्यंचमेवद ॥ स्वाहात्रयोदशार्णोयंमन्त्रोमुन्यादिपूर्ववत्॥६०॥
अक्षिवेदाक्षिभूर्युग्मनेत्रार्णैरंगकंमनोः ॥ विन्यस्यदेवतांध्यायेत्स्वप्नेशीमिष्टसिद्धये॥६१॥वराभयेपद्म
युगंदधानांकरैश्चतुर्भिःकनकासनस्थाम्॥सितांबरांशारदचंद्रकांतिंस्वप्नेश्वरींनौमिविभूषणाढ्याम्॥६२॥

कमलाश्रीं ॥ स्वरूपमन्यत् ॥ ६० ॥ ६१ ॥ ध्यानमाह ॥ वरेति ॥ वरोदक्षे ॥ ६२ ॥



१ ॐ श्रींस्वप्नेश्वरिकार्यंमेवदस्वाहेतित्रयोदशार्णः ।

त्रिदशाइंद्रादयः ॥ ६३ ॥ ६४ ॥ ६५ ॥ मातंगीमाह ॥ तार इति ॥ तार ॐ ॥ मायाह्रीं ॥ वाक्ऐं ॥ लक्ष्मीः श्रीं ॥ हृत्नमः ॥ निद्राभः ॥ स्मृतिर्गः ॥ लांतिमोवः ॥ सनेत्रोहरिःति ॥ उच्छिष्टचांडास्वरूपम् ॥ नेत्रयुता क्रिया

लक्षंजपेद्बिल्वपत्रैर्जुहुयात्तद्दशांशतः ॥ पूर्वोदितेयजेत्पीठेषडंगत्रिदशायुधैः ॥ ६३ ॥ रात्रौसंपूज्यदेवेशीमयुतंपुरतोजपेत् ॥ शयीतब्रह्मचर्य्येणभूमौदर्भास्थिताजिनैः ॥६४॥ देव्यैनिवेद्यस्वंहादंसास्वप्नेवदतिध्रुवम् ॥ यक्षिण्याद्याइतिप्रोच्यमातंगीगद्यतेधुना ॥६५॥ तारोमायाचवाग्लक्ष्मीहृन्निद्रास्मृतिलांतिमाः ॥ सनेत्रोहरिरुच्छिष्टचांडानेत्रयुताक्रिया ॥ ६६ ॥ श्रीमातंगेश्वरिपदंसर्वशूलीनलांतशम् ॥ करिवह्निप्रियामंत्रोद्वात्रिंशद्वर्णवानयम् ॥ ६७ ॥ मतंगोमुनिरस्योक्तोनुष्टुप्छंदस्तुदेवता ॥ मातंगीसर्वजनतावशीकरणतत्परा ॥६८॥ चतुर्भिःषड्भिरङ्गैश्चपंडष्टनैयनैरपि ॥ मंत्रोस्यवर्णैरंगानिन्यस्यदेवींविचिंतयेत् ॥ ६९ ॥

लि ॥ ६६ ॥ श्रीमातंगेश्वरिसर्वेतिस्वरूपम् ॥ शूलीजः ॥ नस्वरूपम् ॥ लांतोवः ॥ शंस्वरूपम् ॥ करिस्वरूपम्॥ वह्निप्रियास्वाहा ॥ ६७ ॥ ६८ ॥ ६९ ॥

---

१ ॐह्रींऐंश्रींनमोभगवतिउच्छिष्टचांडालिश्रीमातंगेश्वरिसर्वजनवशंकरिस्वाहा।अस्यमंत्रस्यमतंगऋषिरनुष्टुप्छंदोमातंगीदेवतामामाभीष्टसिद्ध्यर्थेजपेविनियोगः।

॥ ७०॥७१॥७२॥ मातङ्ग्यताइमाः ॥ विभूत्यैनमइत्यादिकाः ॥ ७३ ॥ पीठमन्त्रमाह ॥ सर्वेति ॥ ॐह्रींऐंश्रींसर्वश

घनश्यामलांगींस्थितांरत्नपीठेशुकस्योदितंशृण्वतींरक्तवस्त्राम् ॥ सुरापानमत्तांसरोजस्थितांश्रीभजे वल्लकींवादयंतींमतंगीम् ॥ ७० ॥ जपोयुतंसहस्रंतुहोमःपुष्पैर्मधूकजैः ॥ मध्वक्तैःपूजयेत्पीठेवक्ष्य माणविधानतः ॥ ७१ ॥ त्रिकोणाष्टदलद्वंद्वंकलास्रचतुरस्रकम् ॥ पीठंकृत्वायजेत्तस्मिन्पीठशक्तीर्नि वेष्टदाः ॥७२॥ विभूतिरुन्नतिःकान्तिःसृष्टिःकीर्तिश्चसन्नतिः ॥ व्युष्टिरुत्कृष्टिऋद्धीन्नमातंग्यंताःसमी रिताः ॥७३॥सर्वशक्तिकमस्यांतेलासनायहृदंतिकः॥तारमायावाग्रमाद्यःपीठमंत्रःकलार्णकः॥७४॥ विश्राण्यासनमेतेनपाद्यादीनिप्रकल्पयेत्॥ मूलेनपुष्पपूजांतेकुर्य्यादावरणार्चनम् ॥७५ ॥ त्रिकोणे ष्वर्चयेत्तिस्रोरतिप्रीतिमनोभवाः॥ केसरेषुषडंगानिमातृश्चदलमध्यगाः ॥ ७६ ॥ द्वितीयेष्टदलेपूज्या असितांगादिभैरवाः ॥ षोडशाख्येनुवामाख्याज्येष्ठारौद्रीप्रशांतिका ॥ ७७ ॥ श्रद्धामाहेश्वरीचापि क्रियाशक्तिश्चसप्तमी ॥ सुलक्ष्मीःसृष्टिमोहिन्यौप्रमथाश्वासिनीतथा ॥७८॥ विद्युल्लताचचिच्छक्तिः सुंदरीनंदयासह ॥ नंदबुद्धिःषोडशींतुपूजनीयाःप्रयत्नतः ॥ ७९ ॥

क्तिकमलासनायनमइति ॥ ७४ ॥ विश्राण्यदत्त्वा ॥ ७५ ॥ ७६ ७७ ॥ ७८ ॥ ७९ ॥

सामहादिकामहामातंगी ॥ ८० ॥ ८१ ॥ ध्रुवमिति ॥ आवरणदेवतानामादौध्रुवादीम् अंतेमातंगीपदंचयो

चतुरस्रेचतुर्दिक्षुमातंगीसामहादिका ॥ महालक्ष्मीस्तथासिद्धंपुनर्वह्न्यादिकोणतः ॥८०॥ विघ्नेश
दुर्गावटुकक्षेत्रेशादिग्धवास्ततः ॥ वज्राद्याःपूजनीयाःस्युरित्थंसिद्धिर्मनोर्भवेत् ॥८१॥ ध्रुवंभवानी
वाग्बीजंरमामादौप्रयोजयेत् ॥ सर्वावरणदेवानांमातंगीपदमंततः ॥ ८२ ॥ मल्लिकाकुसुमैर्होमाद्रो
गोराज्यंचबिल्वजैः ॥ पत्रैःफलैर्वावश्यास्याज्जनताब्रह्मवृक्षजैः॥८३॥रोगनाशोमृताखण्डैर्निंबैःश्री
स्तंडुलैरपि ॥ आकृष्टिर्लवणैर्विद्यात्तगरैर्वेतसैर्जलम् ॥ ८४ ॥ लवणैर्निम्बतैलाक्तैःशत्रुनाशोंधसाश
नम् ॥ निशाचूर्णयुतैर्लोणैर्होमात्स्यात्स्तंभनंनृणाम् ॥८५॥ रक्तचन्दनकर्चूरमांसीकुंकुमरोचनाः॥
चन्दनागुरुकर्पूरैर्गंधाष्टकमुदीरितम्॥८६ ॥ एतद्धोमाज्जगद्वश्यंजायतेमंत्रिणोध्रुवम् ॥ एतत्तिपद्मश
तंजप्त्वातिलकेनजगत्प्रियः ॥ ८७ ॥ कदलीफलहोमेनसर्वंघ्रसमवाप्नुयात् ॥ किंबहूक्तेनमातंगीपूजि
ताकामदानृणाम् ॥ ८८ ॥

जयेत् ॥ ॐ ह्रींऐंश्रींरत्यैमातंग्यैनमइत्यादि ॥ ८२ ॥ ८३ ॥ अमृताखंडैर्गुडूचीशकलैः ॥ ८४ ॥ अंधसान्नेनहुते
नाशनमन्नंप्राप्यते ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥

॥ ८९ ॥ ९० ॥ ९१ ॥ बाणेशीमाह ॥ सत्यइति ॥ सत्योंदः ॥ अग्नियुक्तोरेफयुतः ॥ अनंतेंदुसंयुतः आबिंदुयुतश्च तेनद्रामित्यादिर्बीजं ॥ सष्वरेफयुतोदः आस्थानेशांतिरीतेनयुतोद्रीं ॥ ९२ ॥ इंद्रशांतिबिंद्वाढ्योब्रह्मालई

मध्वक्तलोणरचितांपुत्तलींदक्षिणांघ्रितः ॥ हूयादष्टोत्तरशतंखादिराग्नौवशंनिशि ॥८९॥ शालिपिष्ट मयींतांतुभक्षयेत्स्त्रीवशीकृतौ॥कृष्णभूतनिशिध्वांक्षोदरेक्षिप्त्वासमुद्रजम्॥९०॥नीलसूत्रेणसंवेष्टयचि ताग्नौप्रदहेदमुम् ॥ सहस्रजमंतद्भस्मयस्मैदद्यात्सदासवत् ॥९१॥ सत्योग्नियुक्तोनंतेंदुसंयुक्तंबीजमा दिमम् ॥ एतस्यानंतसंस्थानेशांतियुक्तोद्वितीयकम् ॥९२॥ब्रह्मेन्द्रशांतिबिंद्वाढ्यस्तृतीयंबीजिमीरि तम् ॥ भूधरोवसुधाधीशचन्द्राढ्यस्तत्तुरीयकम् ॥९३॥ सर्गीहंसःपंचमःस्यात्पंचबीजात्मकोमनुः॥ ऋषिःसंम्मोहनश्छंदोगायत्रीदेवतापुनः ॥९४॥ बाणेशीव्यस्तवर्णेनमंत्रेणोक्तंषडंगकम् ॥ मूर्ध्निपा देमुखेगुह्येहृदयेपंचदेवताः ॥ ९५॥ न्यस्तव्याःपंचबीजाद्याद्राविणीक्षोभिणीपुनः ॥ वशीकरण्याक र्षण्यौसंमोहिन्यपिपञ्चमी ॥ ९६ ॥

बिंदुयुतःकः क्लीं॥वसुधाधीशचन्द्राढ्योलऊ॥ बिंदुयुतोभूधरोबः॥ब्लूँ॥९३॥सर्गीहंसःसः॥९४॥ व्यस्तवर्णैनपंचबीजैः पंचांगानिसर्वैर्णाह्क्रम्॥पञ्चबीजाद्याद्राविण्याद्यादेवता मूर्द्धादौन्यस्याः॥ द्रांद्राविण्यै नमोमूर्ध्नीत्यादि॥९५॥९६॥ 

१ द्रांद्रींक्लींब्लूंसः ॥ २ अस्यबाणेशीमंत्रस्यसंमोहनऋषिःगायत्रीछंदः बाणेशीदेवताममाभीष्टसिद्ध्यर्थेजपेविनियोगः ।

ध्यानमाह ॥ उद्यादिति ॥ बाणांकुशौदक्षयोः ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥ १०१ ॥ अनंगाद्याकुसुमापराअनं

उद्यद्भास्वत्संनिभारक्तवस्त्रानानारत्नालंकृतांगीवहंती ॥ हस्तैःपाशंचांकुशंचापबाणौबाणेशीनःकाम
पूर्तिंविधत्ताम् ॥ ९७ ॥ एवंध्यात्वाजपेल्लक्षपंचकंतद्दशांशतः ॥ हुत्वाबाणेश्वरींदेवींपूजयेद्विधिपूर्व
कम्॥९८॥मोहिनीक्षोभिणीत्रासीस्तंभिन्याकर्षिणीतथा॥द्राविण्याह्लादिनीक्लिन्नाक्लेदिनीपीठशक्त
यः॥९९॥बाणेशीयोगपीठायनमोमूलादिकोमनुः॥दत्त्वातेनासनंमंत्रीतस्मिन्देवींप्रपूजयेत्॥१००॥
आदौषडंगान्याराध्यदिक्ष्वग्रेद्राविणीमुखाः ॥ दलेष्वनंगरूपास्यादनंगमदनातथा ॥ १ ॥ अनंग
मन्मथानंगकुसुमामदनापरा ॥ अनंगाद्यातथानंगशिशिरानंगमेखला ॥ २ ॥ अनंगदीपिकेत्यष्टौ
शक्त्याद्याआयुधान्यपि॥एवंसिद्धंमनुंमंत्रीकाम्येषुविनियोजयेत् ॥३॥ दधियुक्तैरशोकस्यपुष्पैर्योदि
वसत्रयम् ॥ सहस्रंजुहुयात्तस्यवश्याःस्युःप्राणिनोखिलाः ॥४॥ लाजैर्दधियुतैर्होमान्मन्त्रीकन्यामवा
प्नुयात् ॥ कन्यापिवरमाप्नोतिमासद्वितयमध्यतः ॥ १०५ ॥

गकुसुमेत्यर्थः ॥ १०२ ॥ १०३ ॥ १०४ ॥ १०५ ॥

ससंपातम् आहुतिशेषस्यपात्रांतरेप्रक्षेपः संपातः तद्युतंहुत्वासंपाताज्यंस्त्रियैदद्यात ॥ किंभूतायै ॥ विश्राणितश्रियै दत्तदक्षिणायै ॥ दक्षिणामादावादायपश्चादाज्यंदद्यादित्यर्थः ॥ अन्यथाफलाभावात ॥ १०६ ॥ १०७ ॥ कामेशी माह ॥ मायेति ॥ मायाह्रीं ॥ मन्मथः क्लीं ॥ वाग्बीजंऐं ॥ ब्लूँ स्त्रींस्वरूपम ॥ १०८ ॥ ध्यानमाह ॥ पाशाङ्कु

गव्याज्येनससंपातंहुत्वासाष्टशतंनरः ॥ आज्यंसंपातितंदद्यात्स्त्रियैविश्राणितश्रियै ।१०६। सातदाज्यं निजंकांतंभोजयित्वावशंनयेत् ॥ सुगंधकुसुमैर्हुत्वाधनमाप्नोतिवांछितम् ॥७॥ मायामन्मथवाग्बीजंब्लूंस्त्रींपञ्चाक्षरोमनुः ॥ ऋषिश्छंदश्चपूर्वोक्तेकामेशीदेवतास्मृता ॥८॥ पाशांकुशाविक्षुशरान्बाणौकरैर्वहंतीमरुणांशुकाढ्याम् ॥ उद्यत्पतंगाभिरुचिंमनोज्ञांकामेश्वरींरत्नचितांप्रणौमि ॥९॥ भूतलक्षंजपित्वैनामधलक्षंपलाशजैः ॥ कुसुमैर्जुहुयात्पीठपूर्वोक्तेपूजयेदिमाम् ।११०। आदावंगानिसंपूज्यदिक्षुमध्यमनोभवम् ॥ मकरध्वजकन्दर्पौमन्मथंकामदेवकम् ॥१११॥ ततोह्यनंगरूपाद्याइंद्राद्यस्त्राणितद्बहिः ॥ एवंसिद्धमनुर्मंत्रीपूर्वोक्तंयोगमाचरेत् ।११२। इतिमंत्रमहोदधौयक्षिण्यादिमंत्रकथनंनामसप्तमस्तरङ्गः ॥७॥

शेति ॥ पाशेक्षुचापौवामयोः ॥ उद्यन्यःसहस्रांशुरादित्यस्तत्समकांतिरत्नाश्चितांव्यातांप्रणौमिप्रकर्षेण स्तौमि ॥ ॥ १०९ ॥ भूतलक्षंपंचलक्षम् ॥ ११० ॥ कामदेवंमध्ये ॥ १११ ॥ योगं प्रयोगम् ॥ ११२ ॥ इतिमन्त्रमहोदधिव्याख्यायां नौकायां यक्षिण्यादिकथनंनाम सप्तमस्तरंगः ॥ ७ ॥

१ ह्रींक्लींऐंब्लूंस्त्रीं । इतिपंचार्णः । अस्यकामेशीमंत्रस्यसंमोहनऋषिःगायत्रीछंदःकामेशीदेवताममाभीष्टसिद्ध्यर्थंजपेविनियोगः ।

॥ १ ॥ बालामंत्रमाह ॥ दामोदरइति ॥ दामोदरऐ ॥ चंद्रयुतोबिंदुयुतःऐं ॥ वागितिसंज्ञास्य ॥ विधिःकः॥वास
वशांतीदुयुतः ॥ लईबिंदुयुतःक्लीं ॥ भृगुः सः ॥ संकर्षणऔ ॥ तेनाविसर्गेणचयुतःसौः ॥ २ ॥ ३ ॥ मध्यांतेमध्यं

अथबालांप्रवक्ष्यामिमंत्रीसंसेव्ययांद्भुतम्॥बृहस्पतिःकुबेरश्चजायतेविद्ययाधनैः॥१॥दामोदरश्चंद्रयुत
आद्यंवाग्बीजमीरितम्॥विधिर्वासवशांतींदुयुक्तंकामाभिधंपरम्॥२॥संकर्षणविसर्गाढ्योभृगुस्तार्ती
यमीरितम्॥त्रिबीजीगदिताबालाजगत्रितयमोहिनी॥३॥दक्षिणामूर्तिपंक्तीचमुनिश्छंदःक्रमात्स्मृतम्
देवतात्रिपुराबालामध्यांतेशक्तिबीजके ॥ ४ ॥ नाभेरापादमाद्यंतुनाभ्यंतंहृदयात्परम् ॥ मूर्धिहृदं
तंतार्तीयंक्रमाद्देहेप्रविन्यसेत्॥५॥आद्यंवामकरेदक्षकरेन्यदुभयोःपरम्॥पुनर्बीजत्रयंन्यस्येन्मूर्ध्निगुह्ये
चवक्षसि॥६॥नवयोन्यभिधन्यासेनवकृत्वोमनुंन्यसेत्॥कर्णयोश्चिबुकेन्यस्येच्छंखयोर्मुखपंकजे॥७॥

शक्तिः अंते बीजम् ॥४॥ नाभेः पादांतमाद्यंबीजंन्यस्येत् ॥ एवमग्रेपि ॥ ५ ॥ दक्षकरेऽन्यद्द्वितीयम् ॥ परंतृती
यंतूभयोः करयोर्न्यस्येत् ॥ ६ ॥ कर्णौचिबुकमित्याद्यवयवानांत्रिकोणाकारत्वाद्योनिन्यासोयम् ॥ ७ ॥

---

१ ऐंक्लींसौःइतित्रिवर्णः। २ अस्यबालामंत्रस्यदक्षिणामूर्तिर्ऋषिःपंक्तिश्छंदःत्रिपुराबालादेवतामध्यंक्लींशक्तिःअंतेसौःबीजंममाभीष्टसिद्ध्यर्थेजपेविनियोगः।

॥ ८ ॥ ९ ॥ वागिति ॥ ऐं रत्यैनमो गुह्ये ॥ अंत्यादिका ॥ सौः प्रीत्यैनमो हृदि ॥ क्लीं मनोभवायनमो भ्रूमध्ये ॥ १० ॥
पुनर्वाक् ॥ अंत्यकामाद्या अमृतेशी योगेशी विश्वयोनीः एष्वेव गुह्यहृद्भ्रूमध्ये पुन्यसेत ॥ ऐं अमृतेश्यैनम इत्यादि ॥



नेत्रयोर्नासिकायांचस्कंधयोरुदरेतथा॥न्यसेत्कूर्परयोर्नाभौजानुनोर्लिंगमस्तके॥८॥पादयोरपिगुह्ये
चपार्श्वयोर्हृदयेपुनः ॥ स्तनयोःकंठदेशेचवामांगादिप्रविन्यसेत्॥९॥वाग्भवाद्यागतिंगुह्येप्रीतिमंत्या
दिकाहृदि ॥ कामबीजादिकान्यस्येद्भ्रूमध्येतुमनोभवा ॥ १० ॥ पुनर्वागंत्यकामाद्यास्तिस्रएष्वेव
विन्यसेत्॥अमृतेशींचयोगेशींविश्वयोनिंतृतीयकाम् ॥११॥मूर्ध्निवक्त्रेहृदिन्यस्येद्गुह्येचरणयोरपि॥
कामेशीपंचबीजाद्यान्स्मरान्मनोभवादिकान् ॥ १२ ॥

॥ ११ ॥ मूर्ध्नीति ॥ कामेशीपञ्चबीजानि ह्रींक्लींऐंब्लूँस्त्रीमित्युक्तानि ॥ तदाद्यान्मनोभवादिकान् ॥ मनोभवमक
रध्वजकन्दर्पमन्मथकामदेवाख्यान्स्मरान्शिरोमुखहृद्गुह्यपत्सुन्यसेत ॥ ह्रींमनोभवायनमइत्यादि ॥ १२ ॥



१ ह्रींमनोभवायनमःशिरसि । ह्रींमकरध्वजायनमःमुखे । ऐंकंदर्पायनमःहृदि । ब्लूंमन्मथायनमःगुह्ये । स्त्रींकामदेवायनमःचरणयोः ।

शिरइति ॥ बाणेशीबीजानि॥ द्रांद्रींक्लींब्लूंसइति ॥ तत्पूर्वाद्राविण्याद्या द्राविणीक्षोभणीवशीकरण्याकर्षणीसंमोहनीसंज्ञाःबाणदेवताःशिरःपादमुखगुह्यहत्सुन्यसेत् ॥ द्रांद्राविण्यैनमःशिरसीत्यादि ॥ १३ ॥ षडंगमाह ॥ तार्ती

शिरःपन्मुखगुह्येषुहृदयेपंचदेवताः ॥ द्राविण्याद्याःक्रमान्न्यस्येद्बाणेशीबीजपूर्विकाः ॥१३॥ तार्तीयवाग्मध्यगेनकामेनस्यात्षडंगकम् ॥ षड्दीर्घस्वरयुक्तेनततोदेवींविचिंतयेत् ॥ १४ ॥ रक्तांबरांचंद्रकलावतंसांसमुद्यदादित्यनिभांत्रिनेत्राम् ॥ विद्याक्षमालाभयदामहस्तांध्यायामिबालामरुणांबुजस्थाम् ॥ १५ ॥ लक्षत्रयंजपेन्मंत्रंदशांशंकिंशुकोद्भवैः ॥ पुष्पैर्हयारिजैर्वापिजुहुयान्मधुरान्वितैः ॥ ॥ १६ ॥ नवयोन्यात्मकंयंत्रंबहिरष्टदलावृतम् ॥ भूगृहेणपुनर्वीतंपूजनायलिखेत्सुधीः ॥ १७ ॥ मध्ययोनौतुतार्तीयमष्टयोनिषुमन्मथम् ॥ केसरेषुस्वरान्न्यस्येद्वर्गानष्टौदलेष्वपि ॥१८॥ दलाग्रेषुत्रिशूलानिपद्ममातृकयावृतम् ॥ एवंविलिखितेयंत्रेपीठशक्तीःप्रपूजयेत् ॥ १९ ॥ इच्छाज्ञानक्रियाचैवकामिनी कामदायिनी ॥ रतीरतिप्रियानंदामनोन्मन्यपिचांतिमा ॥ २० ॥

येति ॥ तार्तीयंसौः ॥ वाक्ऐं ॥ तन्मध्यगतेनदीर्घाढ्येनकामेनषडंगम् ॥ सौः क्लांऐंहृत्॥सौःक्लींऐंशिरः ॥ सौःक्लूंऐंशिखेत्यादि ॥ १४ ॥ ध्यानमाह ॥ रक्तेति ॥ विद्याभयेवामयोः ॥ अन्ययोरन्ये ॥ १५ ॥ १६ ॥ पूजायंत्रमाह॥ नवेति ॥ स्पष्टम् ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

पीठमंत्रमाह ॥ व्योमहः तत्पूर्वंनृतीयं ॥ ह्सौः सदाशिवमहाप्रेतपद्मासनायनमइति ॥ २१ ॥ २२ ॥ २३ ॥ अंगपूजामाह ॥ योनीति ॥ मध्येयोनिमध्येएवाग्नेनिर्ऋतिवाय्वीशानेषुहृच्छिरःशिखावर्माणिसंपूज्याग्रेयादित्रिदिक्ष्वस्त्रं

पीठशक्तीरिमाइष्ट्वापीठंतंमनुनादिशेत् ॥ व्योमपूर्वंतुतार्तीयंसदाशिवमहापदम् ॥२१॥ प्रेतपद्मासनं
ङेंतंनमोंतःपीठमंत्रकः ॥ षोडशार्णस्ततोमूर्त्तौक्लृप्तायांमूलमंत्रतः ॥ २२ ॥ आवाह्यपूजयेद्देवीमुपचा
रैःपृथग्विधैः ॥ देवीमिष्ट्वामध्ययोनौत्रिकोणगतिर्यविकाः ॥ २३॥ वामकोणेरतिंदक्षेप्रीतिमग्रेमनोभ
वाम् ॥ योन्यंतर्वह्निकोणादावंगानिपरिपूजयेत् ॥२४॥ मध्ययोनेर्बहिःपूर्वादिक्षुचाग्रेप्यगापि ॥
बाणदेवीस्तद्वदेवशक्तीरष्टसुयोनिषु ॥ २५ ॥ सुभगाख्याभगापश्चात्तृतीयाभगसर्पिणी ॥ भगमालि
तथानंगानंगाद्याकुसुमापरा॥२६॥अनंगमेखलानंगमदनेत्यष्टशक्तयः ॥ पद्मकेसरगाब्राह्मीमुखाःपत्रे
षुभैरवाः॥२७॥दीर्घाद्यामातरःपूज्याह्रस्वाद्याश्चाष्टभैरवाः॥ दलाग्रेष्वष्टपीठानिकामरूपाख्यमादिम
म् ॥२८॥मलयंकोल्लगिर्य्याख्यंचौहाराख्यंकुलांतकम् ॥जालंधरंतथोड्यानंकोट्टपीठमथाष्टमम्॥२९

यजेत् ॥ २४ ॥ मध्ययोनेर्बहिर्भागेदिक्षुचतुरःपंचममग्रेएवंकामान्यजेत् ॥ बाणदेवीद्राविण्याद्यास्तद्वत्कामवत् ॥ दिक्ष्वग्रेचशक्तीःसुभगाद्यादीर्घाद्यामातरःआंब्राह्म्यैनमइत्यादि ॥ ह्रस्वाद्याभैरवाःअंअसितांगायनमइत्यादि ॥ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥

दशदिक्षुहेतुकाद्योगणाः ॥३०॥ शक्राद्यान्स्वस्वदिक्ष्वित्युक्तेः पूर्वावरणानिकल्पितदिक्ष्वेव ॥ एवंमर्थेन ॥ ३१ ॥ वि

भूगृहेदशदिक्ष्वचैवंहेतुकंत्रिपुरांतकम् ॥ वेतालमग्निजिह्वंचकालांतककपालिनौ ॥ ३० ॥ एकपादं
भीमरूपंमलयंहाटकेश्वरम् ॥ शक्राद्यानायुधैःसार्द्धंस्वस्वदिक्षुसमर्चयेत् ॥ ३१ ॥ तद्बहिर्दिक्षु
वटुकंयोगिनीक्षेत्रपालकम् ॥ गणेशंविदिशास्वचैवंवसून्सूर्याञ्छिवांस्ततः ॥ ३२ ॥ भूतांश्चेत्थंभजे
द्बालानीशःस्याद्धनविद्ययोः ॥ रक्ताम्भोजैर्हुतैर्नार्योवश्याःस्युःसर्षपैर्नृपाः ॥ ३३ ॥ नंद्यावर्तैराजवृक्षैः
कुंदैःपाटलचंपकैः ॥ पुष्पैर्बिल्वफलैर्वापिहोमाल्लक्ष्मीःस्थिराभवेत् ॥३४॥ अपमृत्युंजयेन्मंत्रीगुडू
च्या दुग्धयुक्तया ॥ पयोक्तदूर्वाहोमात्तुनीरोगायुःसमश्नुते ॥३५॥ ज्ञानंकविंत्वंलभतेचंद्रागुरुपुरै
र्हुतैः ॥ द्विजेन्द्रावश्यतांयांतिकुसुमैरपराजितैः ॥३६॥ कल्हारैःक्षत्रियाःकर्णिकारजैःक्षितिपांगनाः ॥
कोरंटकुसुमैर्वैश्याःपादजाःपाटलैर्हुतैः ॥ ३७ ॥

दिशासु ॥ अग्न्यादिषु वस्वाद्यः ॥ वसुभ्योनमइत्यादि ॥ ३२ ॥ ३३ ॥ नंद्यावर्तस्तगरः ॥ ३४ ॥ ३५ ॥ चंद्रःकर्पूरः ॥ पुरंगुग्गुलु ॥ अपराजितायोन्याकारपुष्पवल्लीतद्भिन्नास्त्वपराजितानितैः ॥ ३६ ॥ ३७ ॥

सारघंमधु ॥ ३८ ॥ तिलकमाह ॥ रक्तेति ॥ मांसीजटामांसी ॥ ३९ ॥ भागानाह ॥ भूमिरेकः ॥ नंदानव ॥
अब्धयश्चत्वारः ॥ दिशोदश ॥ निगमाश्चत्वारः ॥ रक्तचंदनमेकभागमित्यादि ॥ एतान्येकीकृत्यकृष्णचतुर्दशी

पालाशपुष्पैर्वाक्सिद्धिरन्नाप्तिर्भक्तहोमतः ॥ सारघक्षीरदध्यक्तॉंल्लाजान्हुत्वारुजोजयेत् ॥ ३८ ॥
रक्तचंदनकर्पूरकस्तूरागुरुरोचनाः॥चंदनंकेसरंमांसीक्रमाद्भागैर्नियोजयेत् ॥ ३९ ॥भूमिचन्द्रैकनंदा
ब्धिदिक्संतनिगमोन्मितैः॥श्मशानेकृष्णभूतस्यनिशिनीहारपाथसा ॥ ४० ॥ कुमार्यापेषयेत्ता
निमंत्रणाप्यभिमंत्रयेत्॥विदध्यात्तिलकंतेनदर्शनाद्वशयेज्जनान् ॥ ४१॥ गजसिंहादिभूतानिराक्षसा
ञ्छाकिनीरपि ॥ प्रयोगेष्वेषुकथ्यंतेक्रमाद्ध्यानानिसिद्धये ॥ ४२ ॥ मातुलिंगपयोजन्महस्तांकन
कसन्निभाम् ॥ पद्मासनगतांबालांलक्ष्मीप्राप्तौविचिंतयेत् ॥ ४३ ॥ वरपीयूषकलशपुस्तकाभीतिधा
रिणीम् ॥ सुधांस्रवंतींज्ञानाप्तौब्रह्मरंध्रेविचिंतयेत् ॥४४॥ शुक्लांबरांशशांकाभांरोगनाशेस्मरेच्छिवा
म् ॥ अकारादिक्षकारांतवर्णावयवरूपिणीम् ॥ ४५ ॥

रात्रौ कुमार्यासंपेष्यमूलेनाभिमंत्र्यतिलकंकुर्यात् ॥ वशयेदितिशाकिन्यंतानित्यर्थः॥ ४० ॥ ४१ ॥ ४२ ॥ ध्यानभे
दानाह ॥ मातुलिंगेति ॥ मातुलिंगंबीजपूरंतदक्षे ॥ ४३ ॥ रोगनाशध्याने ॥ वरामृतकुंभौदक्षयोः ॥ ४४ ॥ ४५ ॥

वशीकरणध्याने ॥ पाशोदक्षे ॥ ४६ ॥ बीजानामिति ॥ त्रयाणामित्यर्थः ॥४७॥ वाग्बीजध्यानमाह ॥ विद्येति ॥

सृणिपाशधरांदेवींरत्नालंकारभूषिताम् ॥ प्रसन्नामरुणांध्यायेद्वशीकरणसिद्धये ॥४६ ॥ अथप्रत्येक मंत्रस्यजपध्यानविधिंब्रुवे ॥ शापोद्धारप्रकारंचबीजानांदीपिनीरपि ॥ ४७ ॥ विद्याक्षमालासुकपाल मुद्राराजत्करांकुंदसमानकांतिम् ॥ मुक्ताफलालंकृतिशोभितांगींबालांस्मरेद्वाङ्मयसिद्धिहेतोः ॥४८॥ ध्यात्वैवंवाग्भवंलक्षत्रयंशुक्लांबरावृतः ॥ शुक्लचंदनलिप्तांगोमौक्तिकाभरणान्वितः ॥ ४९ ॥ जपित्वा तद्दशांशेनपालाशकुसुमैर्नवैः ॥ जुहुयान्मधुराक्तैर्यःसकविर्युवतिप्रियः ॥ ५० ॥ भजेत्कल्पवृक्षाधउ द्दीप्तरत्नासनेसन्निषण्णांमदाघूर्णिताक्षीम् ॥ करैर्बीजपूरंकपालेषुचापंसपाशांकुशांरक्तवर्णांदधानाम् ॥ ५१ ॥ ध्यात्वादेवींजपेल्लक्षत्रयंयोमध्यबीजकम् ॥ रक्तवस्त्रावृतोरक्तभूषणोरक्तलेपनः ॥ ५२ ॥ दशांशंमालतीपुष्पैश्चंद्रचंदनलोलितैः ॥ जुहुयात्तस्यवश्याः स्युस्त्रिलोकीजनताःक्षणात् ॥ ५३ ॥

अक्षमालाज्ञानमुद्रेदक्षयोः ॥ ४८ ॥ ४९ ॥ ५० ॥ कामबीजध्यानमाह ॥ कल्पेति ॥ बीजपूरबाणांकुशादक्षेषु ॥ कपालचापपाशावामेषु ॥ निषण्णांस्थिताम् ॥ षड्ढस्तेयम् ॥ ५१ ॥ ५२ ॥ ५३ ॥

तृतीयबीजध्यानमाह ॥ व्याख्यानेति ॥ व्याख्यानमुद्राक्षस्रजौदक्षयोः ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ शापोद्धा
रप्रकारमाह ॥ योजयेदिति ॥ आद्येएतान् योजयेत् ॥ वाराहोहः ॥ भृगुःसः ॥ पावकोरः ॥ तेनहस्रौं द्वितीय

व्याख्यानमुद्रामृतकुंभविद्यामक्षस्रजंसंदधतींकराग्रैः ॥ चिद्रूपिणींशारदचंद्रकांतिंबालांस्मरेन्मौक्तिक
भूषिताङ्गीम् ॥ ५४ ॥ ध्यात्वैवंचरमंबीजंजपेल्लक्षत्रयंसुधीः ॥ सितवस्त्रानुलेपाढ्यमात्मानंदेवतांस्म
रेत् ॥ ५५ ॥ मालतीकुसुमैर्हुत्वाचंदनाक्तैर्दशांशतः ॥ लक्ष्मींविद्यासुकीर्तीनामाधारोजायतेचिरात्
॥५६॥ देव्याशताकीलिताचविद्येयंतत्रसिद्धिदा ॥ शापोद्धारमथोत्कीलंविधायजपमाचरेत् ॥५७॥
योजयेदादिबीजेनवराहभृगुपावकान् ॥ मध्यमादौनभोहंसौमध्यमांतेनपावकम् ॥५८॥ आदावंते
चतार्तीयेक्रमात्स्वंधूमकेतनम् ॥ एवंजप्ताशतंविद्याशापहीनाफलप्रदा ॥ ५९ ॥ यद्वाद्येचरमेबीजेनैव
रेफंनियोजयेत् ॥ शापोद्धारप्रकारोन्योयद्वायंकीर्तितोबुधैः ॥ ६० ॥

स्यादौ नभोहंसौहसौ ॥ अंतेरेफः ॥ तेनहसकलरीमितिकूटम् ( ! ) ॥ तृतीयस्यादौ ॥ स्वंहः ॥ अंतेधूमकेतनो
रेफः ( ! ) ॥ तेनहस्रौः ॥ एवंभैरवीजाता ॥ अस्यांशतंजप्तायांबालाशापहीनास्यात् ॥ ५८ ॥ ५९ ॥ यद्वात्रैवा
द्यंत्यचबीजेरेफयोगाभावः ॥ तेनहसौः ॥ मध्यमंतद्वेव ॥ ६० ॥

शापोद्धारेप्रकारांतरम् ॥ नवार्णजपमाह ॥ आद्यमिति ॥ ऐंऐंसौः क्लीं क्लीं ऐंसौःसौःक्लीं एतेनवार्णः ॥ शतंजप्तः शापनिवर्तकः ॥ ६१ ॥ ६२ ॥ चेतनीमंत्रमाह ॥ त्रीति ॥ अधरऐं ॥ शांतिरी ॥ अनुग्रहऔं ॥ एतेत्रयः स्वराः केवलाश्चेतनीमंत्रः ॥ शतंजप्तोबालांनिष्कीलांकरोति ॥ आह्लादिनीमंत्रमाह ॥ तारादीति ॥ ॐ क्लींनमइति ॥

आद्यमाद्यंचतार्तीयंकामःकामोथवाग्भवम् ॥ अंत्यमंत्यमनंगंचनवार्णःकीर्तितोमनुः ॥६१॥ जप्तो यंशतधाशापंबालायाविनिवर्तयेत् ॥ चेतन्याह्लादिनीमंत्रौजप्तौनिष्कीलताकरौ ॥६२॥ त्रिस्वराश्चे तनीमंत्रोधरःशांतिरनुग्रहः ॥ तारादिहृदयांतःस्यात्कामआह्लादिनीमनुः ॥६३॥ तथात्रयाणांबीजा नांदीपनैर्मनुभिस्त्रिभिः ॥सुदीप्तानिविधायादौजपेत्तानीष्टसिद्धये ॥ ६४ ॥ वदयुग्मंसदीर्घांबुस्मृति बालावनंतगौ ॥ सत्यःसनेत्रोनस्ताहृग्वाङ्नवार्णाद्यदीपिनी ॥ ६५ ॥

अयमप्युत्कीलनकरः ॥ ६३ ॥ ६४ ॥ वाग्बीजस्यदीपिनीविद्यामाह ॥ वदेति ॥ सदीर्घांबुवा ॥ अनंतगौस्मृति बालौ आस्थितौगवौ ॥ तेनग्वा ॥ सनेत्रः सत्यो दि ॥ ताहृग्नःनिः ॥ वाक् ऐं ॥ इयमाद्यस्यबीजस्यदीपिनी प्रकाशकर्त्री ॥ ६५ ॥

---

१ ऐंऐंसौःक्लींक्लींऐंसौःसौःक्लीं इति नवार्णः । २ वदवदवाग्वादिनिऐं ।

कामबीजस्यदीपिनीमाह ॥ क्लिन्नेइति ॥ स्वरूपम् ॥ वैकुंठोमः ॥ दीर्घखंहाः अंतिमः क्षः सद्यगः ओगतःक्षो सचंद्रानिद्राभं ॥ कुरुस्वरूपं ॥ शिवार्णाएकादशवर्णा ॥ मध्यबीजस्यदीपिनी ॥ ६६ ॥ तारइति ॥ तारःप्रणवः ॥

क्लिन्नेक्लेदिनिवैकुण्ठोदीर्घखंसद्यगोंतिमः ॥ निद्रासचन्द्राकुर्वंताशिवार्णामध्यदीपिनी ॥६६॥ तारो मोक्षंचकुर्वंतापंचार्णांत्यस्यदीपिनी ॥ दीपिनीमंतराबालाराधितापिनसिध्यति ॥६७॥ इदंरहस्यं नारूयेयंकृतघ्नेकितवेशठे ॥ परीक्षितायदातव्यमन्यथादातृदोषदम् ॥६८॥ वागंत्यकामान्प्रजपेद्दरी णांक्षोभहेतवे ॥ कामवागंत्यबीजानित्रैलोक्यस्यवशीकृतौ ॥६९ ॥ कामांत्यवाणीबीजानिमुक्तये नियतोजपेत् ॥ पूजाविधौतुबालायास्त्रिविधानर्चयेद्गुरून् ॥ ७० ॥

मोक्षंकुर्विंतिस्वरूपम् ॥ अंत्यस्थबीजस्यदीपिनी ॥ उक्तांदीपिनीम् अंतराविना आराधितापिबालानसिद्ध्यति ॥ ६७ ॥ ६८ ॥ जपभेदान्कामभेदेनाह ॥ वागिति ॥ ऐंसौंक्लीमित्यरिनाशाय ॥ क्लींऐंसौरितिवशीकरणे ॥ ॥ ६९ ॥ क्लींसौः ऐमितिमुक्त्यै ॥ ७० ॥

१ क्लिन्नेक्लेदिनिमहाक्षोभंकुरु । २ ॐ मोक्षंकुरु ।

दिव्यौघानाह ॥ परप्रकाशइति ॥ आनंदपदपश्चिमाइतिवक्ष्यमाणत्वात्परप्रकाशानंदायनमइत्यादिप्रयोगः ॥ ७१ ॥
॥ ७२ ॥ सिद्धौघानाह ॥ ईशानाख्यइति ॥ ७३ ॥ यंत्रमाह ॥ नवेति ॥ गायत्र्यास्त्रिपुरागायत्र्यावक्ष्यमाणा

दिव्यौघश्चेतिसिद्धौघोमानवौघइतित्रिधा ॥ परमप्रकाशःपरमेशानःपराशिवस्तथा ॥७१॥ कामेश्वरस्ततोमोक्षःषष्ठःकामोमृतोंतिमः ॥ एतेसप्तैवदिव्यौघाआनंदपदपश्चिमाः ॥ ७२॥ ईशानाख्यस्तत्पुरुषोघोराख्योवामदेवकः ॥ सद्योजातइमेपंचसिद्धौघाख्याःस्मृताबुधैः ॥ ७३॥ मानवौघःप्रविज्ञेयःस्वगुरोःसंप्रदायतः ॥ नवयोन्यात्मकेयंत्रेविलिखेन्मध्ययोनितः ॥ ७४ ॥ प्रादक्षिण्येनबीजानित्रिवारंसाधकोत्तमः ॥ त्रींस्त्रींन्वर्णांस्तुगायत्र्याअष्टपत्रेषुसंलिखेत् ॥७५॥ बहिर्मातृकयावेष्ट्यतद्बहिर्भूपुरद्वयम् ॥ कामबीजलसत्कोणंव्यतिभिन्नंपरस्परम् ॥ ७६॥ यन्त्रंत्रैपुरमाख्यातंजप्तंसंपातसाधितम् ॥ बाहुनाविधृतंदद्याद्धनंकीर्तिंसुखंसुतान् ॥ ७७ ॥

यावर्णत्रयंप्रातियंत्रंलिखेत् ॥ ७४ ॥ ७५ ॥ भूपुरद्वयंचतुष्कोणद्वयम् ॥ कीदृशंपरस्परंव्यतिभिन्नम् एकंविदिग्गतकोणम् अपरंदिग्गतकोणमित्यर्थः ॥ ७६ ॥ संपातसाधितम् आहुतिशेषघृतेनसंयोजितम् ॥ ७७ ॥

गायत्रीमुद्धरति ॥ कामान्तइति ॥ कामःक्लीं ॥ भगिण्युतांविषमःमे ॥ बकःशः खड्गीशं वकारमारूढः श्वः ॥ सने त्रःअग्निःरि ॥ स्वरूपमन्यत् ॥ ७८ ॥ ७९ ॥ बालाभेदप्रथमंमंत्रांतरमाह ॥ मायेति ॥ मायाह्रीं ॥ कामःक्लीं तार्तीं

कामांतेत्रिपुरादेविविद्महेकाविषंभगि ॥ बकःखड्गीशमारूढःसनेत्रोग्निश्चधीमहि ॥७८॥ तन्नःक्लिन्ने प्रचोदांतेयादंताकीर्तिताबुधैः ॥ गायत्रींत्रैपुरीसर्वसिद्धिदासुरसेविता ॥७९॥ अथवक्ष्यामिबालाया भेदानागमगोपितान् ॥ मायाकामोंबरारूढंतार्तीयंत्र्यक्षरोमनुः ॥ ८० ॥ अनुलोमप्रतिलोमाभ्यां बालामन्त्रःषडक्षरः ॥ बालाश्रीकामहृल्लेखासंपुटोयंनवाक्षरः ॥ ८१ ॥

यंसौः अंबरारूढंहयुतं हसौः प्रथमः ॥ ८० ॥ मंत्रांतरमाह ॥ अनुलोमेति ॥ ऐंक्लींसौःसौःक्लींऐंद्वितीयः ॥ मंत्रां तरमाह ॥ बालेति ॥ श्रींक्लींह्रींऐंक्लींसौःह्रींक्लींश्रीमितितृतीयः ॥ ८१ ॥



१ क्लींत्रिपुरादेविविद्महेकामेश्वरिधीमहि । तन्नःक्लिन्नेप्रचोदयात् ।२ ह्रींक्लींह्सौः इतित्र्यक्षरः । ३ श्रींक्लींह्रींऐंक्लींसौःह्रींक्लींश्रीं ।

मन्त्रांतरमाह ॥ बालेन्ति ॥ ऐंक्लींसौः बालात्रिपुरेस्वाहेतिचतुर्थः ॥ पञ्चममाह ॥ वागिति ॥ वाक्‌ऐं ॥ कामःक्लीं व्योमभृग्विंदुयुङ्मनुःहसबिंदुयुतऔं ह्सौं दीर्घभूधरः बा ॥ पिनाकीला ॥ ८२ ॥ स्वरूपमन्यत् ॥ षष्ठमाह ॥ मायेति ॥ मायाह्रीं ॥ लक्ष्मीःश्रीं ॥ मनोजन्माक्लीं ॥ ठद्वयंस्वाहा ॥ स्वरूपमन्यत् ॥ सप्तममाह ॥ कमलेति ॥

बालांतेबालत्रिपुरेस्वाहांतोदशवर्णवान्[1]॥वाक्कामोव्योमभृग्विन्दुयुङ्मनुर्दीर्घभूधरः ॥८२॥ पिनाकी त्रिपुरेसिद्धिंदेहिह्नन्मनुर्वर्णवान्[2] ॥ मायालक्ष्मीर्मनोजन्मात्रिपुरांतेतुभारती॥८३॥कवित्वंदेहिठद्वंद्वं षोडशार्णोमनुः[3]स्मृतः ॥ कमलापार्वतीकामस्त्रिपुरांतेचमालती ॥८४॥ महांसुखंततोदेहिस्वाहासप्त दशाक्षरः ॥ भृगुब्रह्मक्रियावह्नियुक्ताशांतिस्सरात्रिपा ॥८५॥ दहनांत्यमहाकालभुजंगपुरुषोत्तमाः॥ मन्वर्घीशेंदुसंयुक्ताद्वितीयंबीजमीरितम् ॥ ८६ ॥

कमला श्रीं ॥ पार्वतीह्रीं ॥ कामःक्लीं ॥ स्वरूपमन्यत ॥ ८३ ॥ ८४ ॥ अष्टममाह॥भृग्विति ॥ भृगुःसः ॥ ब्रह्माकः ॥ क्रियालः ॥ वह्नीरः ॥ एतैर्युक्ताशांतिरीकारः सरात्रिपा सबिंदुः स्क्लरीं ॥ ८५ ॥ दहनोरः ॥ अंत्यःक्षः ॥ महा कालोमः ॥ भुजंगोरः ॥ पुरुषोत्तमोयः ॥ एतेमन्वर्घीशेंदुसंयुक्ताऔं बिंदुयुताः ॥ तेनक्ष्म्र्यौं ॥ ८६ ॥

१ ऐंक्लींसौः बालात्रिपुरेस्वाहा । २ ऐंक्लींह्सौंबालात्रिपुरेसिद्धिंदेहिनमइतिचतुर्दशार्णः । ३ ह्रींश्रींक्लींत्रिपुराभारतीकवित्वंदेहिस्वाहेतिषोडशार्णः ।

वाग्बीजंऐं ॥ हृत्नमः ॥ स्वरूपंशेषम् ॥ वह्निप्रियास्वाहा ॥ ८७ ॥ नवममाह ॥ हृल्लेखेति ॥ हृल्लेखात्रितयंह्रीं ३ ॥ अनंतआ स्वरूपमपरम् ॥ ८८ ॥ दशममाह ॥ मायेति ॥ मायांह्रीं ॥ रमाश्रीं ॥ मन्मथःक्लीं ॥ स्वरूपं शेषम् ॥

वाग्बीजंत्रिपुरेसर्ववांछितंदेहिहृत्ततः ॥ वह्निप्रियासप्तदशवर्णोयंकीर्तितोमनुः ॥ ८७ ॥ हृल्लेखात्रितयंप्रौढत्रिपुरेनंतारोग्यमै ॥ श्वर्य्यंदेहिप्रियावह्नेर्मनुरष्टादशाक्षरः ॥८८॥ मायारमामन्मथांतेत्रिपुरामदनेपदम् ॥ सर्वंशुभंसाधयाग्नेःप्रियान्तोष्टादशाक्षरः ॥८९॥ हृल्लेखाकमलानंगोबालांतेत्रिपुरेपदम् ॥ मदायत्तांततोविद्याकुरुहृद्वह्निवल्लभा ॥ ९० ॥ मंत्रोविंशतिवर्णोयंमायापद्मामनोभवः ॥ परापरेतेत्रिपुरेसर्वमीप्सितमुच्यताम् ॥ ९१ ॥

॥ ८९ ॥ एकादशमाह ॥ हृल्लेखेति हृल्लेखाह्रीं ॥ कमलाश्रीं ॥ अंनगःक्लीं हृत्नमः ॥ वह्निवल्लभा स्वाहा ॥ शेषं स्वरूपम् ॥ ९० ॥ द्वादशमाह ॥ मायेति ॥ माया ह्रीं ॥ पद्माश्रीं ॥ मनोभवःक्लीं ॥ ९१ ॥

१ स्क्लींह्स्यौंऐंत्रिपुरेसर्ववांछितंदेहिनमःस्वाहेतिसप्तदशार्णः । २ ह्रींह्रींह्रींप्रौढत्रिपुरेआरोग्यमैश्वर्यंदेहिस्वाहेत्यष्टादशार्णः । ३ ह्रींश्रींक्लीं त्रिपुरामदनेसर्वशुभंसाधयस्वाहेत्यष्टादशाक्षरः । ४ ह्रींश्रींक्लींबालत्रिपुरेमदायत्तांविद्यांकुरुनमःस्वाहेतिविंशत्यर्णः ।

अनलकांतास्वाहा ॥ अन्यत्स्वरूपम् ॥ त्रयोदशमाह ॥कामेति ॥ कामद्वंद्वंक्लीं २ रमायुग्मंश्रीं २ ॥ मायायुक्ह्रीं ॥ त्रिपुराललितेमदीप्सितांयोषितंदेहिवांछितंकुरु इति स्वरूपम् ॥ ज्वलनकामिनीस्वाहा ॥ १२ ॥ १३ ॥ चतुर्दश

साधयानलकांतायमन्योविंशतिवर्णकः ॥ कामद्वंद्वंरमायुग्मंमायायुक्त्रिपुरापदम् ॥ १२ ॥ ललिते तेमदीप्सीतितामंतेयोषितंपदम् ॥ देहिवांछितमित्युक्त्वाकुरुज्वलनकामिनी ॥१३॥ अष्टाविंशति वर्णोयंमनुरिष्टप्रियाप्रदः ॥ कामपद्माद्रिपुत्रीणांप्रत्येकंत्रितयंवदेत् ॥ १४ ॥ त्रिपुरांतेसुंदरीतिसर्वंज गदिनद्वयम् ॥ वशंकुरुद्वयंमह्यंबलंदेह्यनलांगता ॥ १५ ॥ सर्वाभीष्टप्रदोमंत्रउक्तोबाणगुणाक्षरः ॥ च तुर्दशानामेतेषांमनूनामृषिरीरितः ॥१६॥ दक्षिणामूर्तिसंज्ञस्तुच्छंदोगायत्रमुच्यते ॥ त्रिपुरादेवता बालाषडंगंमातृकासमम् ॥ १७ ॥

माह ॥ कामेति ॥ कापपद्माद्रिपुत्रीणांप्रत्येकंत्रयं क्लीं ३ श्रीं ३ ह्रीं ३॥१४॥इनद्वयंमद्वयंमम ॥अनलांगनास्वाहा ॥ स्वरूपमपरम् ॥ १५ ॥ एतेचतुर्दशबालाभेदाः ॥तेषाम् ॥ १६ ॥ ऋष्याद्याह ॥ दक्षिणेति ॥ १७ ॥

---

ह्रींश्रींक्लींपरापरेत्रिपुरेसर्वमीप्सितंसाधयस्वाहेतिविंशत्यर्णः । २ क्लीं क्लीं श्रींश्रींह्रींत्रिपुराललितेमदीप्सितांयोषितंदेहिवांछितंकुरुस्वाहेत्यष्टाविंशत्यर्णः । ३ क्लीं क्लींक्लींश्रींश्रींश्रींह्रींह्रींह्रींत्रिपुरसुंदरिसर्वंजगन्ममवशंकुरुकुरुमह्यंबलंदेहिस्वाहेतिपंचत्रिंशदर्णः। ४ अस्यबालामंत्रस्यदक्षिणामूर्तिर्ऋषिःगायत्रीछंदः त्रिपुराबालादेवता ममाभीष्टसिद्ध्यर्थेजपेविनियोगः ।

ध्यानमाह ॥पाशेति ॥ अंकुशाक्षसूत्रेदक्षयोः ॥ ९८ ॥ हयारिःकरवीरः ॥ सायकैःपंचबाणदेवताभिः ॥ ९९ ॥ दिगधीशास्त्रैरिति । दिशामीशैस्तदस्त्रैश्चेत्यर्थः ॥ १०० ॥ बालामुक्त्वालघुश्यामामाह ॥ वाग्बीजमिति वाग्बीजंऐं ॥

पाशांकुशौपुस्तकमक्षसूत्रंकरैर्दधानासकलामरार्च्या ॥ रक्तात्रिनेत्राशशिशेखरेयंध्येयाखिलर्द्ध्यैत्रिपुरात्रबाला ॥ ९८ ॥ जपेल्लक्षंदशांशेनहोमःपुष्पैर्हयारिजैः ॥ पूजापूर्वोदितेपीठेरत्याद्यैश्चसायकैः ॥ ॥ ९९ ॥ मातृभिर्दिगधीशास्त्रैःप्रयोगाः पूर्ववन्मताः ॥ लघुश्यामामथोवक्ष्येस्मरणादिष्टदायिनीम् ॥ ॥ १०० ॥ वाग्बीजंहृदयंकर्णएकनेत्रःसनेत्रकः ॥ वृषोमुकुंदमारूढोकूर्मोदीर्घेंदुसंयुतः ॥ १०१ ॥ नंदीदीर्घोलिमातंगिसर्वांतेस्याद्वशंकरि ॥ वैश्वानरप्रियांतोऽयंमंत्रोविंशतिवर्णवान् ॥२॥ मदनोस्य[2] मुनिःप्रोक्तोगायत्रीनिचृदादिका ॥ छंदोदेवीलघुश्यामाबीजंवाग्वह्निवल्लभा ॥ शक्तिरुक्ताखिलाभीष्टसाधनेविनियोजनम् ॥ १०२ ॥

हृदयंनमः ॥ कर्णउ ॥ सनेत्रकएकनेत्रःइयुतश्च्छिःच्छि ॥ मुकुंदमारूढोवृषः टस्थितःषःष्ट ॥ [1]दीर्घेंदुसंयुतःकूर्मः चःचां ॥ १ ॥ दीर्घोनंदी डा ॥ लिमातंगिसर्ववशंकरिस्वरूपम् ॥ वैश्वानरप्रियास्वाहा ॥२॥ऐंबीजंस्वाहाशक्तिः॥१०३॥

१ ऐंनमउच्छिष्टचांडालिमातंगिसर्ववशंकरिस्वाहेतिविंशत्यर्णः । २ अस्यलघुश्यामामंत्रस्यमदनऋषिःनिचृद्गायत्रीछंदः देवीलघुश्यामादेवताऐंबीजं स्वाहाशक्तिःममाखिलाभीष्टसिद्ध्यर्थेजपेविनियोगः ।

न्यासानाह ॥ वागिति ॥ ऐंरत्यैनमःमूर्ध्नि ॥ ह्रींप्रीत्यैनमोहृदि ॥ १०४॥ क्लींमनोभवायैनमःपादयोः ॥ इच्छेति ॥ ऐंइच्छाशक्त्यैनमोमुखे ॥ ह्रींज्ञानशक्त्यैनमःकंठे ॥ क्लींक्रियाशक्त्यैनमोलिंगे ॥ ५ ॥ बाणेशीबीजानि-द्रांद्रीं क्लींब्लूंसःइति ॥ तत्पूर्वकान् ॥ द्रावणाद्यान्बाणान् कास्यहृद्गुह्यपादेन्यसेत् ॥ द्रांद्रावणबाणायनमइत्यादि ॥ कंशिरः ॥ आस्यंमुखं ॥६॥७॥ षडङ्गमाह । रामेति ॥ मातृकान्यासमाह॥ङेइति॥दीर्घस्वराआद्यायस्येहशांवि

वाक्पूर्विकांरतिंमूर्ध्निप्रीतिंमायादिकांहृदि ॥१०४॥ पादयोर्विन्यसेन्मंत्रीकामपूर्वांमनोभवाम् ॥ इच्छाशक्तिंज्ञानशक्तिंक्रियाशक्तिंक्रमान्न्यसेत् ॥५॥ वाङ्मायाकामबीजाद्यांमुखेकंठेशिवेतथा ॥ द्रावणंशोषणंबाणंतापनंमोहनाभिधम् ॥६॥उन्मादनंक्रमात्पंचबाणेशीबीजपूर्वकान् ॥ कास्यहृद्गुह्यपादेषुन्यस्यकुर्य्यात्षडङ्गकम् ॥ ७॥ रामाग्निगुणरामांगनेत्रैर्वर्णैर्मनूत्थितैः॥ ङेनमोंताःकन्यकांताब्राह्म्याद्याअष्टमातरः ॥ ८ ॥ दीर्घस्वराद्यदीर्घक्षाद्यष्टकाद्याविलोमतः॥ विन्यस्यमूर्ध्निवामांसेवामपार्श्वेषुनाभितः ॥ ९ ॥ दक्षपार्श्वेदक्षिणांसेककुद्धृदययोरपि ॥ तारवागादिकाअष्टौसिद्धयःकन्यकांतिमाः ॥ ११० ॥

लोमतोदीर्घक्षादीनामष्टकमाद्ययासांतामातरोमूर्द्धादिषुन्यस्याः ॥ तथाकीदृश्योमातरः ॥ ङेनमोंताःकन्यकांताः चतुर्थीनमोंतंकन्यकापदमंतेयासांताः ॥ यथा-आंक्षांब्राह्मीकन्यकायैनमोमूर्ध्नि ॥ ईंलांमाहेश्वरीकन्यकायैनमोवामांसे ॥ ऊंहांकौमारीक०वामपार्श्वे ॥ ॠंसांवैष्णवीक०नाभौ । ऌंषांवाराहीक०दक्षपार्श्वे । ऐंशांइंद्राणीक०

दक्षांसे ॥ ओंवांचामुंडाकन्यकायै०ककुदि ॥ अःलांमहालक्ष्मीकन्यकायै०हृदि ॥ सिद्धिन्यासमाह । तारेतिॐऐंअ णिमासिद्धिकन्यकायैनमोमूर्ध्नीत्यादि ॥ सिद्धयइति ॥ अनुपदंवक्ष्यमाणाः ॥१०८॥९॥१०॥ अलिकंललाटम् चिल्लि भ्रूः॥ ११ ॥ अष्टासिद्धीराह ॥ अणिमेत्यादि ॥ १२ ॥ अप्सरोन्यासमाह ॥ कामाद्याइति ॥ क्लींउर्वशीकन्यकायैन

चतुर्थीनमसायुक्तान्यस्याःकालिकचिल्लिषु ॥कंठेचहृदयेनाभावाधारेलिंगमूर्द्धनि॥१११॥ अणि मामहिमाचापिलघिमागरिमेशिता ॥ वशिताचाथप्राकाम्यंप्राप्तिरित्यष्टसिद्धयः ॥१२॥ कामाद्याः कन्यकाःप्रीताअष्टावप्सरसोन्यसेत् ॥ केभालेनेत्रयोर्वक्त्रेकर्णयोःकाकुदेपिच ॥१३॥ उर्वशीमेनका रंभाघृताचीपुंजकस्थला॥सुकेशीमंजुघोषाचमहारंगवतीरिताः ॥१४॥ यक्षगंधर्वसिद्धानांकन्यकान रनागयोः ॥विद्याधरःकिंपुरुषःपिशाचानामपीहताः ॥ १५ ॥ अंसयोर्हृदयेन्यस्येत्स्तनयोर्जठरेक्र मात् ॥ गुह्येप्याधारदेशेचनमोंतामदनादिकाः ॥ ११६ ॥

मोमूर्ध्निइत्यादि ॥ नेत्रयोर्द्वे ॥ कर्णयोर्द्वे॥अप्सरसआह ॥ उर्वशीति ॥ कन्यान्यासमाह यक्षेति ॥ नमोंतामद नादिकाः ॥ कामबीजाद्यायक्षादीनांकन्यका अंसादिषुन्यसेत् ॥ अंसयोर्द्वेस्तनयोर्द्वेएकैकान्यत्र ॥ क्लींयक्षकन्यका यैनमोदक्षांसे-क्लींगंधर्वकन्यकायैनमोवामांसे-इत्यादिप्रयोगः॥ १३ ॥ १४ ॥ १५ ॥ ११६ ॥

वर्णन्यासमाह ॥ तारेति ॥ प्रणवाद्यान् ॥ नमोंतान्साबिंदुकान्॥ ॥ मंत्रवर्णान् ॥ करपादसंधिषुसाग्रेषुन्यसेत् ॥
ॐक्लींनमोदक्षेंसे ॥ ॐनमोदक्षकूर्परेइत्यादि ॥ ११७ ॥ सुरार्णवस्यांतरीपंद्वीपंतत्रयद्रत्नमंदिरंतन्मध्यगे सिंहासने

ताराद्यान्नमसायुक्तान्मूलवर्णान्सबिंदुकान् ॥ न्यसेत्संधिषुसाग्रेषुकरयोःपादयोरपि॥११७॥न्यासा
नेवंविधान्कृत्वामातंगीमासनेस्मरेत्॥सुरार्णवांतरीपस्थरत्नमंदिरमध्यगे ॥ ११८ ॥ माणिक्याभरणा
न्वितांस्मितमुखींनीलोत्पलाभांबरांरम्यालक्तकलितपादकमलांनेत्रत्रयोल्लासिनीम् ॥ वीणावादनत
त्परांसुरनतांकीरच्छदश्यामलांमातंगींशशिशेखरामनुभजेत्तांबूलपूर्णाननाम् ॥ ११९ ॥ लक्षंजपेन्मधू
कोत्थैर्जुहुयादयुतंशुभैः ॥ मातंगीप्रोदितेपीठेलघुश्यामांप्रपूजयेत् ॥ १२० ॥ त्रिकोणपंचकोणाष्टद
लषोडशपत्रके ॥ वेदद्वारधरागेहावृत्तेयंत्रेविधानतः ॥ १२१ ॥ देव्याअग्रेपार्श्वयोश्चतिस्रोचैंद्रातिपू
र्विकाः ॥ इच्छाज्ञानक्रियाशक्तीःकोणेष्वग्रादिषुत्रिषु ॥ १२२ ॥ बाणान्पंचसुकोणेषुकेसरेष्वंगदे
वताः ॥ ब्राह्म्याद्याअष्टपत्रेषुपत्राग्रेष्वणिमादिकाः ॥ १२३ ॥

स्थितांध्यायेत् ॥ ११८ ॥ माणिक्येति ॥ कीरच्छदश्यामलांशुकपिच्छनीलाम् ॥ ११९ ॥ १२० ॥ १२१ ॥ रतिपू
र्विकारातिप्रीतिमनोभवाः ॥ १२२ ॥ १२३ ॥

उर्वश्याद्या अष्टौ ॥ कन्या अष्टौ यक्षादीनाम् ॥ न्यासवत्प्रयोगान् ॥ न्यासे यथा प्रयोगास्तथा पूजायामपि ॥ १२४ ॥

यजेत्षोडशपत्रेषूर्वश्याद्याः कन्यका अपि ॥ प्रयोगान्न्यासवत्कुर्य्यादित्यादीनां प्रपूजने ॥ १२४ ॥ भूगृहस्य चतुर्दिक्षु योगिनीः परिपूजयेत् ॥ गजानना सिंहमुखी गृध्रास्या काकतुंडिका ॥ २५ ॥ उष्ट्रग्रीवा हयग्रीवा वाराही शरभानना ॥ उलूकिका शिवारावा मयूरी विकटानना ॥ २६ ॥ अष्टवक्त्रा कोटराक्षी कुब्जा विकटलोचना ॥ समर्चयेद्दिशि प्राच्यामेताः षोडश योगिनीः ॥ २७ ॥ शुष्कोदरी ललज्जिह्वा श्वदंष्ट्रा वानरानना ॥ ऋक्षाक्षी केकराक्षी च बृहत्तुंडा सुराप्रिया ॥ २८ ॥ कपालहस्ता रक्ताक्षी शुकी श्येनी कपोतिका ॥ पाशहस्ता दंडहस्ता प्रचंडेत्यपि षोडश ॥ २९ ॥ पूज्याः कीनाशदिग्भागं प्रतीच्यां चंडविक्रमा ॥ शिशुघ्नी पापहंत्री च काली रुधिरपायिनी ॥ १३० ॥ वसाधया गर्भभक्षा शवहस्तांत्रमालिनी ॥ स्थूलकेशी बृहत्कुक्षिः सर्पास्या प्रेतवाहना ॥ ३१ ॥ दंदशूककरा क्रौंची मृगशीर्षेति षोडश ॥ संपूज्या उत्तरस्यां तु षोडशैव वृषानना ॥ १३२ ॥



योगिनीराह ॥ गजाननेत्यादि ॥ १२५ ॥ प्रतिदिशं षोडश यथार्थनाम्न्यः सर्वाः ॥ १२६ ॥ १२७ ॥ १२८ ॥ १२९ ॥ कीनाशदिग्भागे दक्षिणस्याम् ॥ १३० ॥ १३१ ॥ १३२ ॥

॥ १३३ ॥ १३४ ॥ १३५ ॥ स्वस्वमंत्रेणेति ॥ बटुकादीनांमंत्राउक्ताः ॥ १३६ ॥ १३७ ॥ १३८ ॥ तद्गायत्रीमाह ॥

व्यात्तास्याधूमनिःश्वासाव्योमैकचरणोर्द्धदृक् ॥ तापनीशोषणीदृष्टिःकोटरीस्थूलनासिका ॥ १३३ ॥ विद्युत्प्रभाबलाकास्यामार्जारीकटपूतना ॥ अट्टाट्टहासाकामाक्षेत्रत्यर्चनीयाअभीष्टदाः ॥ ३४ ॥ नश्यंतिभूतशाकिन्यआसांनामश्रुतेरपि ॥ भूमंदिरस्यकोणेषुवह्न्यादिषुयजेत्क्रमात् ॥ ३५ ॥ स्वस्वमंत्रेणबटुकंगणेशंक्षेत्रपालकम् ॥ दुर्गांतद्बहिरिंद्रादीन्वज्रादीनपिपूजयेत् ॥ ३६ ॥ भूगृहस्यचतुर्दिक्षुचतुर्वाद्यानिपूजयेत् ॥ तत्तत्संज्ञंचविततंघनंचसुषिराभिधम् ॥ ३७ ॥ द्वादशावरणैरेवंलघुश्यामांयजेत्तुयः ॥ सर्वासांसंपदांपात्रमचिराज्जायतेसना ॥ ३८ ॥ वाणीशुकप्रियाङेंताविद्महेमीनकेतनः ॥ कामेश्वरींधीमहीतितन्नःश्यामाप्रचोदयात् ॥ ३९ ॥ एषोदितातुमातंगीगायत्रीसर्वसिद्धिदा ॥ अनयायागवस्तूनिप्रोक्षेत्तस्यास्समर्चने ॥ १४० ॥ मातंगीमंत्रसंप्रोक्ताःप्रयोगाअत्रकीर्तिताः ॥ राजानोराजपुत्राश्चसुदृशोमदमंथराः ॥ ४१ ॥

वाणीति ॥ वाणीऐं ॥ शुकप्रियाङेंता शुकप्रियायै ॥ मीनकेतनःक्लीं ॥ स्वरूपंशेषम् ॥ १३९ ॥ १४० ॥ १४१ ॥

१ ऐंशुकप्रियायैविद्महेक्लींकामेश्वरींधीमहि । तन्नःश्यामाप्रचोदयात् ।

॥ १४२ ॥ १४३ ॥ १४४ ॥ इति श्रीमंत्रमहोदधिनौकायांबालाश्यामानिरूपणमष्टमस्तरंगः ॥ ८ ॥ अन्नपूर्णेश्वरीमं त्रंवक्ष्येप्रतिजानीते ॥ फलंकथयन् मंत्रमुद्धरति ॥ वेदादिरिति ॥ वेदादिःप्रणवः ॥ गिरिजाह्रीं ॥ पद्माश्रीं ॥

दासामनोवचःकायैर्भवंत्यस्याउपासितुः ॥ शाकिनीप्रेतभूताश्चधर्षितुंतंनशक्नुयुः ॥१४२॥ भूरिणा किमिहोक्तेनदेवीयमखिलेष्टदा ॥ यन्मनुस्मरणादेवनरोदेवोपमोभवेत् ॥४३॥ देव्याउपासकैःपुंभिः स्त्रियोनिंद्यानजातुचित् ॥ देवीवन्माननीयास्तामनोभीष्टमभीप्सुभिः ॥१४४॥ इतिश्रीमहीधरविर चितेमंत्रमहोदधौबालालघुश्यामानिरूपणमष्टमस्तरंगः॥८॥अन्नपूर्णेश्वरीमंत्रंवक्ष्येभीष्टप्रदायकम् ॥ कुबेरोयामुपास्याशुलब्धवान्निधिनाथताम् ॥ १ ॥ शंभोःसख्यंदिगीशत्वंकैलासाधीशतामपि ॥ वेदादिर्गिरिजापद्मामन्मथोहृदयंभग ॥२॥ वातिमाहेश्वरिप्रांतेऽन्नपूर्णेदहनांगना ॥ प्रोक्ताविंशतिवर्णे यंविद्यास्याद्द्रुहिणोमुनिः ॥ ३ ॥

मन्मथःक्लीं ॥ हृदयंनमः ॥ भगवतिमाहेश्वरिअन्नपूर्णेस्वरूपम् ॥ दहनांगनास्वाहा ॥ द्रुहिणोब्रह्मा ॥ १ ॥ २ ॥ ३ ॥



१ ॐ ह्रीं श्रीं क्लीं नमः भगवतिमाहेश्वरिअन्नपूर्णेस्वाहा २० । अन्नपूर्णामंत्रस्यद्रुहिणऋषिःकृतिश्छंदःअन्नपूर्णेशीदेवतासमस्ताखिलसिद्ध्यर्थेजपेविनियोगः।

॥ ४ ॥ ५ ॥ भूमीत्यादितद्वर्णसंख्या ॥ ६ ॥ ध्यानमाह ॥ दर्वींदक्षे:स्वर्णपात्रंवामे ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

कृतिश्छंदोन्नपूर्णेशीदेवतापरिकीर्तिता ॥ षड्दीर्घाढ्येनहृल्लेखाबीजेनस्यात्षडंगकम् ॥ ४ ॥ मुखनासा
क्षिकर्णांध्रुगुदेषुनवसुन्यसेत् ॥ पदानिनवतद्वर्णसंख्यैद्यानीमुदीर्य्यते ॥ ५ ॥ भूमिचंद्रध्रुवैकाक्षिवेदाब्धियुगबाहुभिः ॥ पदसंख्यामितैर्वर्णैस्ततोध्यायेत्सुरेश्वरीम् ॥ ६ ॥ तप्तस्वर्णनिभाशशांकमुकुटारत्नप्रभाभासु
रानानावस्त्रविराजिताविनयनाभूमीरमाभ्यांयुता ॥ दर्वींहाटकभाजनंचदधतीरम्योच्चपीनस्तनीनृ
त्यंतंशिवमाकलय्यमुदिताध्येयान्नपूर्णेश्वरी ॥ ७ ॥ लक्षंजपोयुतंहोमश्चरुणाघृतसंयुतः ॥ जयादिनवश
क्त्याढ्येपीठेपूजासमीरिता ॥ ८ ॥ त्रिकोणवेदपत्राष्टपत्रषोडशपत्रके ॥ भूपुरेणयुतेयंत्रेमदद्यान्मायया
सनम् ॥ ९ ॥ अग्न्यादिकोणत्रितयेशिववाराहमाधवान् ॥ अर्चयेत्स्वस्वमंत्रैस्तुप्रोच्यंतेमनवस्तुते
॥ १० ॥ प्रणवोमनुचंद्राढ्यंगगनंहृदयंशिवा ॥ मारुतःशिवमंत्रोयंसप्तार्णःशिवपूजने ॥ ११ ॥

शिवमन्त्रमाह ॥ प्रणव इति ॥ गगनंहकारः मनुचन्द्राढ्यम्औबिंदुयुतंहौंहृदयंनमः ॥ शिवास्वरूपम् ॥
मारुतोयः ॥ ११ ॥

---

ॐहौंनमःशिवायेतिसप्तार्णः

वराहमन्त्रमाह ॥ तारइति ॥ तारॐ ॥ नमोभगवतेवराहस्वरूपम् ॥ अर्धीशयुग्वसुः ॥ ऊयुतोरः ॥ रूपायभूर्भुवः स्वंःस्वरूपम् ॥ शूरःपः ॥ कामिका ॥ तयेभूपतित्वंमेदेहिददापयस्वरूपम ॥ शुचिप्रियास्वाहा ॥ १२ ॥ १३ ॥ नारायणमन्त्रमाह ॥ प्रणवइति ॥ हृदयंनमः ॥ नारायणायस्वरूपम् ॥ वसुवर्णोऽष्टार्णः ॥ १४ ॥ धराश्रियोर्मंत्र

तारंनमोभगवतेवराहार्घीशयुग्वसुः॥ पायभूर्भुवरन्तेस्वोथशूरःकामिकाचये॥१२॥भूपतित्वंचमेदेहि ददापयशुचिप्रिया॥त्रयस्त्रिंशद्वर्णमन्त्रःप्रोक्तोवाराहपूजने॥१३॥प्रणवोहृदयंनारायणायवसुवर्णकः॥ नारायणार्चनेमंत्रःषडंगानिततोर्चयेत् ॥ १४ ॥ धरांवामेस्वमनुनादक्षभागेश्रियंतथा ॥ अन्नंमह्यन्न मित्युक्त्वामेदेह्यन्नाधिपार्णका ॥ १५ ॥ तयेममान्नप्राणांतेदापयानलसुंदरी ॥ द्वाविंशत्यक्षरोमन्त्रो भूमीष्टोभूमिसंपुटः ॥ १६ ॥

माह ॥ अन्नमिति ॥ अन्नंमह्यन्नंमेदेह्यन्नाधिपतयेममान्नंप्रदापयस्वरूपम ॥ अनलसुन्दरीस्वाहा ॥ अयंमंत्रोभूमीष्टो भूमिपूजनेभूमिबीजेनसंपुटः॥ १५ ॥ १६ ॥

१ ॐ नमोभगवतेवराहरूपायभूर्भुवःस्वःपतयेभूपतित्वंमेदेहिददापयस्वाहेतित्रयस्त्रिंशद्वर्णः । २ॐ नमोनारायणायेत्यष्टार्णः।३ ग्लौं अन्नंमह्यन्नंमेदेह्यन्नाधिपतयेममान्नंप्रदापयस्वाहाग्लौंमितिद्वाविंशत्यर्णः।

श्रीपूजायांश्रीबीजेनसंपुटितः ॥ भूबीजमाह ॥ स्मृतिरिति ॥ स्मृतिर्गः ॥ लमनुचंद्रयुक् ॥ लऔ ॥ बिंदुयुतः ॥ ग्लौं ॥ एतद्भुवोबीजम् ॥ श्रीबीजमाह ॥ वह्नीति ॥ रेफई ॥ बिंदुयुतोबकः शः ॥ श्रींइतिश्रियोबीजम् ॥ १७ ॥ वेदास्रेचतुरस्रेमंत्राद्यचतुर्बीजाद्याश्चतस्रः शक्तीः पूजयेत् ॥ ताएवाह ॥ परेति ॥ ॐ परायैनमः ॥ ह्रीं भुवनेश्वर्यै ॥

लक्ष्मीपुटस्तत्पूजायांस्मृतिर्लमनुचंद्रयुक्॥भुवोबीजंवह्निशांतिर्बिंदुयुक्तोबकःश्रियः॥१७॥ मंत्रादिस्थचतुर्बीजपूर्विकाःपरिपूजयेत् ॥ शक्तीश्चतस्रोवेदास्रेपराचभुवनेश्वरी ॥ १८॥ कमलासुभगाचेतिब्राह्म्याद्याअष्टपत्रगाः॥षोडशारेऽमृताचैवमानदातुष्टिपुष्टयः॥१९॥ प्रीतीरतिर्ह्रीःश्रीश्चापिस्वधास्वाहादशम्यथ ॥ज्योत्स्नाहैमवतीछायापूर्णिमाःसहनित्यया ॥२०॥ अमावास्येतिसंपूज्यामंत्रशेषार्णपूर्विकाः ॥ भूपुरेलोकपालाःस्युस्तदस्त्राणितदग्रतः ॥ २१ ॥

॥ १८ ॥ श्रींकमलायै ॥ क्लींसुभगायै ॥ मंत्रस्यशेषायेवर्णाःचतुर्बीजव्यतिरिक्ताः ॥ तत्पूर्विकाअमृताद्याःषोडशदलेपूज्याः ॥ अंअमृतायैनमः ॥ मांमानदायैइत्यादि ॥ १९ ॥ २० ॥ २१ ॥

मंत्रांतरमाह ॥ अयमिति ॥ अयंविंशत्यर्णः॥ श्रीकामहीनः॥ षडंगमाह ॥ द्वीति ॥ २२ ॥ २३ ॥ मंत्रांतरमाह ॥ पूर्वोक्तेति ॥ विंशत्यर्णैर्मन्वर्णाच्चतुर्दशाक्षरात् ॥ माहेश्वरीत्यंते ॥ ममाभिमतमन्नंदेहिदेहीतिवर्णानुच्चारयेत् ॥ अन्नपूर्णेस्वाहेत्यंतेऽस्त्येव ॥ ततएकगुणार्णवानेकत्रिंशदर्णः ॥ २४ ॥ षडंगमाह ॥ युगेति ॥ मंत्रांतरमाह ॥ प्रणव

इत्थंजपादिभिःसिद्धेमंत्रेस्मिन्धनसंचयैः॥कुबेरसदृशोमंत्रीजायतेजनवंदितः ॥२२॥ अयंरमांकाम बीजरहितोष्टादशाक्षरः ॥ द्विनेत्रैर्वेदवेदाब्धिनेत्रार्णैरंगमीरितम् ॥ २३ ॥ पूर्वोक्तमंत्रेमन्वर्णान्ममा भिमतमुच्चरेत् ॥ अन्नंदेहियुगंचापिभवेदेकगुणार्णवान् ॥ २४ ॥ युगांगवेदसप्ताब्धिपडर्णैरंगकल्प नम् ॥ प्रणवःकमलाशक्तिर्नमोभगवतीतिच ॥ २५ ॥ प्रसन्नपारिजातेश्वर्यन्नपूर्णेनलांगना ॥ चतु र्विंशतिवर्णात्मामंत्रःसर्वेष्टसाधकः ॥ २६॥ रामाक्षिवेदनिधिभिर्वेदव्यर्णैःषडंगकम् ॥ तारश्रीशक्ति हृदयंभगांभःकामिकासहृक् ॥ २७॥

इति ॥ कमलाश्रीं ॥ शक्तिःह्रीं ॥ अनलांगनास्वाहा ॥२५॥२६ ॥ षडंगमाह ॥ रामेति ॥ निधयोनव ॥ मंत्रा तरमाह ॥ तारेति ॥ तारॐ ॥ श्रीःश्रीं ॥ शक्तिःह्रीं ॥ हृदयंनमः॥ भगस्वरूपम्॥ अंभोवः॥सहृक्कामिकाति॥२७॥

१ ॐ ह्रींनमःभगवतिमाहेश्वरिअन्नपूर्णेस्वाहेत्यष्टादशार्णः । २ ॐ ह्रींश्रींक्लींनमःभगवतिमाहेश्वरिममाभिमतमन्नंदेहिदेहिअन्नपूर्णेस्वाहेत्येकत्रिंशदर्णः । ३ ॐ श्रींह्रींनमोभगवतिप्रसन्नपारिजातेश्वरिअन्नपूर्णेस्वाहेतिचतुर्विंशत्यर्णः ।

अग्निपत्नीस्वाहा ॥ स्वरूपमन्यत् ॥ २८ ॥ षडंगमाह ॥ रामेति ॥ अन्यत्तुध्यानपूजाप्रयोगः पूर्ववत् ॥ २९ ॥ गौरी

माहेश्वरीप्रसन्नेतिवरदेपदमुच्चरेत् ॥ अन्नपूर्णेग्निपत्नीतिपंचविंशतिवर्णवान् ॥२८॥ रांमषड्युगषड्वे

दनेत्रार्णैः स्यात्षडंगकम् ॥ एषांचतुर्णांमंत्राणामन्यत्सर्वंतुपूर्ववत् ॥ २९ ॥ त्रैलोक्यमोहनोगौरीमंत्रः

संकीर्त्यतेधुना ॥ मायानमोंतेब्रह्मश्रीराजितेराजपूजिते ॥ ३० ॥ जयेतिविजयेगौरीगांधारीतिवदेत्प

दम् ॥ त्रिभुतोयंमेषवशंकरिसर्वससद्यलः ३१ ॥ कवशंकरिसर्वस्त्रीपुरुषांतेवशंकरि ॥ सुद्वयंदुद्वयंद्वे

युग्वायुग्मंहरवल्लभा ॥ ३२ ॥ स्वाहांतएकषष्ट्यर्णोमन्त्रराजः समीरितः ॥ अजोमुनिर्निचृच्छंदो

गौरीत्रैलोक्यमोहिनी ॥ ३३ ॥

मन्त्रमाह ॥ मायेति ॥ मायाह्रीं ॥ ३० ॥ तोयंवः ॥ मेषोनः ॥ ससद्यलः ॥ लो ॥ ३१ ॥ सुदुघेवाएषांयुग्मंसु २

दु २ घे २ वा २ हरवल्लभाह्रीं ॥ स्वरूपंशेषम् ॥ ३२ ॥ अजोब्रह्मा ॥ ३३ ॥

---

१ ॐश्रींह्रींनमः भगवतिमाहेश्वरिप्रसन्नवरदेअन्नपूर्णेस्वाहेतिपंचविंशत्यर्णः । २ह्रींनमोब्रह्मश्रीराजितेराजपूजितेजयविजयेगौरिगांधारित्रिभुवनशंकरिसर्वलोकवशंकरिसर्वस्त्रीपुरुषवशंकरिसुसुदुदुघेघेवावाह्रींस्वाहेत्येकषष्ट्यर्णः । ३ ॐअस्यमन्त्रस्यअजऋषिःनिचृद्गायत्रीछन्दः गौरीत्रैलोक्यमोहिनीदेवताह्रींबीजंस्वाहाशक्तिः ममाखिलकामसिद्ध्यर्थेजपेविनियोगः ।

षडंगमाह ॥ चतुर्दशेति ॥ दीर्घषट्कयुक्तैश्चतुर्दशाद्यक्षरैः षडंगम् ॥ ३४ ॥ ३५ ॥ ध्यानमाह ॥ गीर्वाणेति ॥ गीर्वाणादेवास्तत्समूहैः पूजितं पादपद्मं यस्याः ॥ अंकुशंदक्षे ॥ ३६ ॥ गौर्यामंत्रांतरमाह ॥ नभइति ॥ नभोहकारः ॥

देवताबीजशक्तीतुमायास्वाहापदेक्रमात् ॥ चतुर्दशदशाष्टाष्टदशैकादशवर्णकैः ॥ ३४ ॥ दीर्घाढ्यमाययायुक्तैः षडंगानिसमाचरेत् ॥ मूलेनव्यापकंकृत्वाध्यायेत्त्रैलोक्यमोहिनीम् ॥ ३५ ॥ गीर्वाणसंघार्चितपादपंकजारुणप्रभाबालशशांकशेखरा ॥ रक्तांबरालेपनपुष्पयुङ्मुदेसृणिंसपाशंदधती शिवास्तुनः ॥ ३६ ॥ अयुतंप्रजपेन्मन्त्रंसहस्रंघृतसंयुतैः ॥ पायसैर्जुहुयात्पीठेप्रागुक्तेगिरिजांयजेत् ॥ ॥ ३७ ॥ केसरेष्वंगमाराध्यब्राह्म्याद्याः पत्रमध्यगाः ॥ लोकेश्वरास्तदस्त्राणितद्बहिः परिपूजयेत् ॥ ॥ ३८ ॥ इत्थमाराधितादेवीप्रयच्छेत्सुखसंपदः ॥ तंदुलैस्तिलसंमिश्रैर्लवणैर्मधुरान्वितैः ॥ ३९ ॥

कीदृक्नभः हसानलयुतम् ॥ हसःस ॥ अनलोरः ॥ ताभ्यांयुतम् ॥ ऐस्थांबिंदुयुतम् ॥ तेनहस्रैं ॥ तोयंवः ॥ कीदृक् वायुर्यः ॥ अग्नीरः ॥ कर्णऊः ॥ इंदुर्बिंदुः तैर्युतम् ॥ व्य्रूं ॥ स्वरूपमन्यत् ॥ मायाह्रीं ॥ रमाश्रीं ॥ आत्मभूः क्लीं ॥ अन्यत्स्वरूपम् ॥ ३७ ॥ ३८ ॥ ३९ ॥

॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ वह्निप्रियास्वाहा ॥ ४४ ॥ ४५ ॥ ४६ ॥ अंगमंत्राःषट् ॥ दीर्घयुक्मायाबीजंपरंयेषामी

फलैरम्यैरक्तपद्मैर्जुहुयाद्योदिनत्रयम् ॥ तस्यविप्रादयोवर्णावश्याःस्युर्मासमध्यतः ॥४०॥ रविमंड
लमध्यस्थांदेवींध्यात्वाजपेन्मनुम् ॥ अष्टोत्तरशतंतावद्धुत्वाग्नौवशयेज्जगत् ॥४१॥ नभोहंसानलयु
तमैकारस्थंशशांकयुक्॥तोयंवाय्वग्निकर्णेन्दुयुतंराजमुखीतिच ॥ ४२ ॥ राजाधिमुखिवश्यांतेमुखि
मायारमात्मभूः॥देविदेविमहादेविदेवाधिदेविसर्वंच ॥४३॥ जनस्यचमुखंपश्चान्ममवशंकुरुद्वयम्॥
वह्निप्रियांतोमंत्रोष्टचत्वारिंशल्लिपिर्मतः ॥४४॥ ऋषिच्छंदोदेवतास्तुपूर्ववत्परिकीर्तिताः ॥ हृदेका
दशभिःप्रोक्तंशिरःस्यात्सप्तवर्णकैः ॥४५॥ शिखावर्मापिवेदार्णैःपंचभिर्नेत्रमीरितम् ॥अस्त्रंसप्तदशा
र्णैःस्याद्ध्यानजप्यादिपूर्ववत् ॥ ४६ ॥ अङ्गमंत्रास्तुदीर्घाढ्यभुवनेशीपरामताः ॥ एवंसिद्धमनुर्मंत्री
प्रयोगान्कर्तुमर्हति॥४७॥कुर्य्यात्सर्वंजनस्थानेमनोःसाध्याभिधानकम्॥जपेहोमेतर्पणेचवशीकरण
कर्मणि॥४८॥ससंपातंघृतंहुत्वासहस्रंसप्तवासरम् ॥ संपाताज्यंतुसाध्यस्यप्राशितंवश्यकारकम्॥४९॥

दशाः ॥ ४७ ॥ मनोर्मंत्रस्यसर्वंजनस्थानेसर्वंजनस्येतिपदस्थानेसाध्याभिधानकंसाध्यनामोच्चरेत् ॥ देवदत्तस्यमु
खमित्यादि ॥ ४८ ॥ ४९ ॥

---

१ ह्स्रैंह्स्क्लरींराजमुखिराजाधिमुखिवश्यमुखिह्रींश्रींदेविदेविमहादेविदेवाधिदेविसर्वजनस्यमुखंममवश्यंकुरुकुरुस्वाहेत्यष्टचत्वारिंशदर्णः ।

पीठशक्तीराह ॥ लोहिताक्षीति ॥ ६० ॥ ६१ ॥ गायत्रीमाह ॥प्रणवइति ॥ स्पष्टम् ॥ ६२ ॥ ६३ ॥ लोकेशाइन्द्रादयः ॥ हेतयोवज्राद्याः ॥ ६४ ॥ अन्नदमन्त्रमाह ॥ अथेति ॥ योमन्त्रःअन्नपूर्णावरणपूजनेभूमिश्रियोःपूजने

लोहिताक्षीविरूपाचकरालीनीललोहिता ॥ समदावारुणीपुष्टिरमोघाविश्वमोहिनी ॥ ६० ॥ तत्पीठशक्तयःप्रोक्तादिक्षुमध्येचतायजेत् ॥ प्रयच्छेदासनंतस्यैगायत्र्यावक्ष्यमाणया ॥ ६१ ॥ प्रणवोरक्तज्येष्ठायैविद्महेपदंततः ॥ नीलज्येष्ठापदंपश्चाद्धीमहिततः पदम् ॥ ६२ ॥ तन्नोलक्ष्मीः पदंप्रोच्यचोदयादितिचोच्चरेत् ॥ गायत्र्येपासमाख्याताकेसरेष्वंगपूजनम् ॥ ६३ ॥ मातरःपत्रमध्येषुबाह्येलोकेशहेतयः ॥ इत्थंजपादिभिःसिद्धोमनुर्दद्यादभीप्सितम् ॥ ६४ ॥ अथान्नदमनोर्वक्ष्येसाधनंयःपुरोदितः ॥अन्नपूर्णावृतौभूमिश्रीयागेद्वियमाक्षरः ॥ ६५ ॥ तारभूश्रीपुटोजप्योमुनिरस्यचतुर्मुखः ॥ छन्दोनिचृतिराख्यातंदेवतेवसुधाश्रियौ ॥ ६६ ॥

द्वियमाक्षरोद्वाविंशत्यर्णःपुराकथितः सोन्नदोमनुः ॥ अन्नंमह्यन्नंमेदेह्यन्नाधिपतयेममान्नंप्रदापयस्वाहेतिसप्रणवभूबीजश्रीबीजसंपुटोष्टाविंशतिवर्णः ॥ ६५ ॥ ६६ ॥

---

१ ॐरक्तज्येष्ठायैविद्महेनीलज्येष्ठायैधीमहि।तन्नोलक्ष्मीःप्रचोदयात्। २ ॐग्लौंश्रींअन्नंमह्यन्नंमेदेह्यन्नाधिपतयेममान्नंप्रदापयस्वाहाश्रींग्लौंओमित्यष्टाविंशत्यर्णः

३ अस्यज्येष्ठालक्ष्मीमंत्रस्यब्रह्माऋषिःनिचृद्गायत्रीछन्दःवसुधाश्रियौदेवतेग्लौंबीजंश्रींशक्तिःममाभीष्टप्राप्तौजपेविनियोगः ।

षडङ्गमाह ॥ अन्नंमहीति ॥ षडंगमन्त्राः ॥ ध्रुवादिकाःप्रणवाद्याः ॥ दीर्घयुक्तेभूश्रीबीजेअन्तेयेषांते ॥ विनेत्राने

भूबीजंबीजमस्योक्तंश्रीबीजंशक्तिरीरिता ॥ अन्नंमहीतिहृदयमन्नंमेदेहिमस्तकम्॥६७॥शिखात्वन्ना
धिपतयेममान्नंप्रदापय ॥ वर्मोक्तंस्वाहयाचास्त्रमंगमंत्राध्रुवादिकाः ॥६८॥ षड्दीर्घाढ्यभूमिश्री
बीजांताःपरिकीर्तिताः ॥ विनेत्राअपदुग्धाब्धौस्वर्णद्वीपेतुतेस्मरेत् ॥६९॥ कल्पद्रुमाधोमणिवेदि
कायांसमास्थितेवस्त्रविभूषणाढ्ये ॥ भूमिश्रियौवांछितवामदक्षेसंचिंतयेद्देवमुनींद्रवंद्ये ॥७०॥ लक्ष
मेकंजपेन्मंत्रंतद्दशांशंघृतप्लुतैः ॥ अन्नैर्हुत्वायजेत्पीठेवैष्णवेवसुधाश्रियौ ॥७१॥ विमलोत्कर्षिणी
ज्ञानक्रियायोगाभिधातथा ॥ प्रह्वीसत्यातथेशानानुग्रहापीठशक्तयः ॥ ७२ ॥

त्रहीनाःपञ्चैव ॥ पञ्चांगानिमनोर्यत्रतत्रनेत्रमनुंत्यजेदित्युक्तेः ॥ ॐ अन्नंमह्यंग्लांश्रींहृत ॥ ॐ अन्नंदेहिग्लींश्रींशिर
इत्यादि ॥ ६७॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ वैष्णवीपीठशक्तीराह ॥ विमलेति ॥ ७२ ॥

पीठमंत्रमाह ॥ तारमिति ॥ ॐ नमोभगवतेविष्णवेसर्वभूतात्मसंयोगपद्मपीठात्मनेनमः ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥



तारंनमोभगवतेविष्णवेसर्ववर्णकाः ॥ भूतात्मसंयोगपदंयोगपद्मपदंततः ॥ ७३ ॥ पीठात्मनेनमोंतो
यंपीठस्यमनुरीरितः ॥ दद्यादासनमेतेनमूलेनावाहनादिकम् ॥७४॥ अङ्गानीष्ट्वार्चयेद्दिक्षुभूवह्निज
लमारुतान् ॥ निवृत्तिंचप्रतिष्ठांचविद्यांशांतिंविदिक्षुच ॥ ७५ ॥ अष्टशक्तीर्बलाकाचविमलाकमला
तथा ॥ वनमालाबिभीषाचमालिकाशांकरीपुनः ॥ ७६ ॥पूर्वादिदिक्षुप्रयजेदष्टमीवसुमालिका ॥
शक्राद्यानायुधैर्युक्तान्स्वस्वदिक्षुसमर्चयेत् ॥ ७७ ॥ इत्थंसपरिवारेयोधरालक्ष्म्यौजपादिभिः ॥
आराधयेत्सलभतेमहतीमन्नसंपदम् ॥ ७८ ॥ आज्याक्तैश्चतिलैर्बिल्वसमिद्भिर्जुहुयाच्छ्रिये ॥ साज्ये
नपायसेनापिफलैःपत्रैश्चबिल्वजैः ॥ ७९ ॥ जपतामुंमहामंत्रंहोमःकार्योदिनेदिने ॥ दशसंख्यःकुबेर
स्यमनुर्नेधैमेर्वटोद्भवैः ॥ ८० ॥ तारोवैश्रवणायाग्निप्रियांतोष्टाक्षरोमनुः ॥ होमकालेकुबेरंतुचिंतयेद
ग्निमध्यगम् ॥ ८१ ॥



॥ ७७ ॥ ७८ ॥ ७९ ॥ इध्मैस्सामिद्भिः ॥ ८० ॥ कुबेरमन्त्रमाह ॥ तारइति ॥ तार ॐ ॥ अग्निप्रियास्वाहा ॥ ८१ ॥

१ ॐवैश्रवणायस्वाहेत्यष्टार्णः ।

कुबेरध्यानमाह ॥ धनेति ॥ रत्नकरण्डोदक्षे ॥ ८२ ॥ ८३ ॥ ८४ ॥ प्रत्यंगिरामाह ॥ दीर्घेति ॥ मरुतयकारः ॥ दीर्घेन्दुयुक् ॥ आबिंदुयुतः यां ॥ ब्रह्माकः ॥ लोहितःपः ॥ तत्संस्थंमांसलः ॥ ल्प ॥ यंतिनोरयः ॥ कूरांकृत्यांव

धनपूर्णंस्वर्णकुंभंतथारत्नकरंडकम् ॥ ८२ ॥ हस्ताभ्यांविप्लुतंखर्वंकरपादंचतुंदिलम् ॥ वटाधस्ताद्रत्नपीठोपविष्टंसुस्मिताननम् ॥ ८३ ॥ एवंकृतहुतोमंत्रीलक्ष्म्याजपतिवित्तपम् ॥ अथप्रत्यंगिरांवक्ष्येपरकृत्याविमर्दिनीम् ॥ ८४ ॥ दीर्घेन्दुयुग्मरुद्ब्रह्मामांसलोहितसंस्थिताम् ॥ यंतिनोरयउच्चार्यक्रूरांकृत्यांसमुच्चरेत् ॥ ८५ वधूमिवपदंपश्चात्तांब्रह्मांतेसदीर्घणः । अपनिर्णुद्मइत्यंतेप्रत्यक्कर्त्तारमृच्छतु ॥ ८६ ॥ तारमायापुटोमन्त्रःस्यात्सतत्रिंशदक्षरः ॥ ब्रह्मानुष्टुम्मुनिश्छंदोदेवीप्रत्यंगिरेरिता ॥ ८७ ॥

धूमिवतांब्रह्मस्वरूपम् ॥ सदीघाणःणा ॥ अपनिर्णुद्मइतिस्वरूपम् ॥ प्रत्यक्कर्तारमृच्छतुस्वरूपम् ॥ प्रणवमायाबीजसंपुटः ॥ ८५ ॥ ८६ ॥ ८७ ॥

---

ॐह्रींयांकल्पयंतिनोरयःक्रूरांकृत्यांवधूमिवह्यांब्रह्मणाअपनिर्णुद्मःप्रत्यक्कर्त्तारमृच्छतुह्रींओमितिसमात्रिंशदक्षरः । २अस्यप्रत्यंगिरामन्त्रस्य ब्रह्माऋषिः अनुष्टुप्छन्दः देवीप्रत्यंगिरादेवताओंबीजंह्रींशक्तिःममाखिलाबाप्तयेजपेविनियोगः ।

षडङ्गमाह ॥ अष्टभिरिति ॥ तोयनिधिभिश्चतुर्भिः ॥ दीर्घयुक्पार्वतीमायाबीजंपरंयेषाम् ॥ प्रणवआद्योयेषाम् ॥ जातयोहृदयायनमइत्यादयस्तत्संयुतैरष्टादिवर्णैःषडंगम् ॥ ८८ ॥ पदन्यासमाह ॥ शिरइति ॥ प्रणवमायासंपुटा निचतुर्दशपदानिशिरआदिषुन्यसेत् ॥ तेषांवर्णसंख्याक्रमात् ॥ एकचतुरेकत्रिद्विद्विद्विद्व्येकत्रिपञ्चाद्वित्रित्रिवर्णे

बीजशक्तितारमायेकृत्वानाशेनियोजनम् ॥ अष्टभिस्तोयनिधिभिर्युगैर्वेदैश्चपंचभिः ॥ ८८ ॥ वसुभिर्म न्त्रजैर्वर्णैर्दीर्घयुक्पार्वतीपरैः ॥ प्रणवाद्यैःषडंगानिकल्पयेज्जातिसंयुतैः ॥ ८९ ॥ शिरोक्ष्मध्यवक्त्रेषुकंठबाहु द्वयेहृदि ॥ नाभावूर्वोर्जानुनोश्चपदानिपदयोर्न्यसेत् ॥ ९० ॥ चतुर्दशक्रमान्मंत्रीतारमायापुटान्यपि ॥ आशांबरामुक्तकचाघनच्छविर्ध्येयासचर्मासिकराहिभूषणा ॥ दंष्ट्रोग्रवक्त्राग्रसिताहितान्वयाप्रत्यंगि राशंकरतेजसेरितः ॥ ९१ ॥ ध्यायन्नेवंजपेन्मंत्रमयुतंतद्दशांशतः ॥ अपामार्गोध्मराज्यहविर्भिर्जुहुया त्ततः ॥ ९२ ॥ अन्नपूर्णासनेचार्चेदंगलोकेश्वरायुधः ॥ एवंसिद्धमनुर्मंत्रीप्रयोगेषुशतंजपेत् ॥ ९३ ॥

बोध्या ॥ ॐह्रींयांह्रींशिरसीत्यादि ॥ ८९ ॥ ९० ॥ ध्यानमाह ॥ आशेति ॥ आशांबरानग्ना ॥ घनच्छाविर्मेघ श्यामा ॥ ग्रसितोऽहितानांरिपूणामन्वयोवंशोयया ॥ असिर्दक्षिणे ॥ ९१ ॥ ९२ ॥ ९३ ॥

बलिमन्त्रमाह ॥ योमइति ॥ ॐयोमेपूर्वगतःपाप्मापापकेनेहकर्मणाइन्द्रस्तंदेवराजोभञ्जयतुअंजयतुमोहयतुनाश
यतुमारयतुकालिन्तस्मैप्रयच्छतुकृतंममाशिवंममशान्तिःस्वस्त्ययनंचास्तु ॥ इतिबलिमन्त्रः ॥ अनेनप्राच्यांबलिंद
द्यात् ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ अस्मिन्मन्त्रे ॥ पूर्वैत्यस्यस्थानेअग्न्यादिपदम् ॥ इन्द्रइत्यस्यस्थानेअग्निरि

जुहुयाच्चशतंदिक्षुदशमंत्रैर्हरेद्बलिम् ॥ योमेपूर्वगतःपाप्मापापकेनेहर्मणा ॥ ९४ ॥ इंद्रस्तंदेवउच्चार्य
राजांतेभंजयत्विति॥ अंजयत्विति चोच्चार्यमोहयत्विति चोच्चरेत् ॥९५॥नाशयतुपदंश्चान्मारयत्वि
त्यतोबलिम् ॥ तस्मैप्रयच्छतुकृतंममांतेचशिवंमम ॥ ९६ ॥ शांतिःस्वस्त्ययनंचास्तुबलिमंत्रउदा
हृतः ॥ प्रणवाद्योष्टषष्ट्यर्णस्तेनैववितरेद्बलिम् ॥९७॥ अस्मिन्मंत्रेपूर्वपदस्थानेग्न्यादिपदंवदेत् ॥
अग्निरित्यादिचपठेदिन्द्रइत्यादिकेस्थले ॥ ९८ ॥ एवंतुदशमंत्राःस्युस्तैस्तत्तद्दिग्बलिंहरेत् ॥ इत्थं
कृतेशत्रुकृताकृत्याक्षिप्रंविनश्यति ॥ ९९ ॥

त्यादि ॥देवराजइत्यत्रतेजोराजइत्यादिऊहान्कृत्वादशमंत्राविधेयास्तैस्तस्यांतस्यांदिशिबलिंदद्यात्॥यथा॥योमे
ग्निगतःपाप्मापापकेनेहकर्मणाअग्निस्तंतेजोराजोभञ्जयत्वित्यादियोमेदक्षिणगतःयमस्तंप्रेतराजइत्यादि ।९८।९९।

प्रत्यंगिरामालामंत्रमाह ॥ तारइति ॥ तारःप्रणवः ॥ मायाह्रीं ॥ सहृक्जलम् ॥ इत्युतोवः वि ॥१००॥ १०१ ॥
॥ १०२ ॥ १०३ ॥ १०४ ॥ शरसूर्य्याक्षरः ॥ पञ्चविंशत्यधिकशतार्णः ॥ ॐ ह्रींनमःकृष्णवाससेशतसहस्रहिंसिनि
सहस्रवदनेमहाबलेअपराजितेप्रत्यंगिरेपरसैन्यपरकर्मविध्वंसिनिपरमन्त्रोत्सादिनिसर्वभूतदमनिसर्वदेवान्बन्धबन्ध

अथप्रत्यंगिरामालामंत्रसिद्धिःप्रकीर्त्यते ॥ तारोमायानमःकृष्णंवाससेशतवर्णकाः ॥ १०० ॥ सहस्र
हिंसिनिपदंसहस्रवदनेपुनः ॥ महाबलेपदंपश्चादुच्चरेदपराजिते ॥ १ ॥ प्रत्यंगिरेपरंसैन्यपरकर्मसहृग्ज
लम् ॥ ध्वंसिनिपरमंत्रोत्सादिनिसर्वपदंततः ॥ २ ॥ भूतांतेदमनिप्रांतेसर्वदेवान्समुच्चरेत् ॥ बंधयुग्मं
सर्वविद्याश्छिंधियुक्क्षोभयद्वयम् ॥ ३ ॥ परयंत्राणिसंकीर्त्यस्फोटयद्वितयंपठेत् ॥ सर्वांतेशृंखलाउक्त्वा
त्रोटयद्वितयंज्वलत् ॥ ४ ॥ ज्वालाजिह्वेकरालांतेवदनेप्रत्यमुच्चरेत् ॥ गिरेमायानमोंतोयंशरसूर्य्याक्षरोम
नुः ॥ ५ ॥ ऋष्यादिकंपूर्वमुक्तंमाययास्यात्षडंगकम् ॥ ध्यायेत्प्रत्यंगिरांदेवींसर्वशत्रुविनाशिनीम् ॥ ६ ॥
सिंहारूढातिकृष्णांत्रिभुवनभयकृद्रूपमुग्रंवहंतीज्वालावक्त्रावसानानववसनयुगंनीलमण्याभकांतिः ॥
शूलंखड्गंवहंतीनिजकरयुगलेभक्तरक्षैकदक्षासेयंप्रत्यंगिरासंक्षपयतुरिपुभिर्निर्मितंवोभिचारम् ॥ १०७ ॥

सर्वविद्याश्छिंधि २ क्षोभय २ परयन्त्राणिस्फोटय २ सर्वशृंखलास्त्रोटयत्रोटयज्वलज्ज्वालाजिह्वेकरालवदनेप्रत्यंगिरे
ह्रींनमइति ॥ १०५ ॥ १०६ ॥ ध्यानमाह ॥ सिंहेति ॥ खड्गोदक्षिणे ॥ १०७ ॥

॥ १०८ ॥१०९ ॥ शत्रुनाशकमंत्रमाह ॥ प्रणवइति ॥ प्रणवः ॐ ॥ सेन्दुःकेशवः ॥ अं ॥ सेन्दवः पंचवर्गाद्याः कंचंटंतंपं ॥ ११० ॥ चन्द्रान्वितंवियतहं ॥ रान्तंलः ॥ सद्योजातः ॥ शशांकोबिन्दुस्ताभ्यांयुक्तःलों ॥ मायाह्रीं ॥

अयुतंप्रजपेन्मंत्रंसहस्रंतिलराजिकाः ॥ हुत्वासिद्धमनुंमंत्रंप्रयोगेषुशतंजपेत् ॥१०८ ॥ग्रहभूतादिकाविघ्नंसिंचेन्मंत्रंजपञ्जलैः ॥ विनाशयेत्परकृतंयंत्रमंत्रादिकर्मणाम् ॥९॥ मंत्रंविरोधिशमकंप्रवक्ष्येषोडशाक्षरम् ॥ प्रणवःकेशवःसेंदुर्वर्गाद्याःपंचसेंदवः ॥ १० ॥ वियच्चंद्रान्वितंरांतंसद्योजातःशशांकयुक् ॥ मायात्रिकर्णचंद्राढ्योभृगुःसर्गीसवर्मफट्॥११॥स्वाहांतःषोडशार्णोयंमंत्रःशत्रुविनाशनः॥ विधाताष्टिर्ऋषिश्छंदःपर्वताब्ध्यग्निवायवः ॥१२॥ धराकाशौमहापूर्वा देवताःपरिकीर्तिताः॥हुंबीजंपार्वतीशक्तिर्माययातुषडंगकम्॥ ॥ ११३ ॥

कर्णचंद्रःढ्यःउ ॥ बिन्दुयुतोऽत्रिर्दुः ॥ सर्गीभृगुःसः ॥वर्महुं ॥ १११ ॥ फट्स्वाहास्वरूपम् ॥ विधाताब्रह्मा ॥ महापूर्वाः पर्वतादयः ॥ महापर्वतमहासमुद्रमहाग्निमहावायुमहापृथ्वीमहाकाशाः षड्देवताः॥ पार्वतीह्रीं॥ माययादीर्घाढ्ययाषडङ्गम् ॥ ११२ ॥ ११३ ॥

---

१ ॐ अंकंचंटंतंपंहंलोंह्रींहुंसःहुंफट्स्वाहेतिषोडशार्णः । २ अस्यमंत्रस्यब्रह्माऋषिःअष्टिश्छंदःमहापर्वतमहाब्धिमहाग्निमहावायुमहाधरामहाकाशाःषड्देवताः हुंबीजंह्रींशक्तिःममाभीष्टसिद्ध्यर्थेजपेविनियोगः ।

षडङ्गक्रमेण ध्यानान्याह ॥ नानेति ॥ ११४ ॥ अकूपारं समुद्रम् ॥ ११५ ॥ ११६ ॥ प्राणरूपेणविश्वंजीवयतीति

नानारत्नार्चिराक्रांतवृक्षांभःस्रवणैर्युतम् ॥ व्याघ्रादिपशुभिर्व्याप्तंसानुयुक्तंगिरिंस्मरेत् ॥ ११४॥म
त्स्यकूर्मादिबीजाढ्यंनवरत्नसमन्वितम् ॥ घनच्छायंसकल्लोलमकूपारंविचिंतयेत् ॥ १५ ॥ ज्वाला
वतीसमाक्रांतजगत्त्रितयमद्भुतम् ॥ पीतवर्णमहावह्निंसंस्मरेच्छत्रुशांतये ॥ १६ ॥ घनासमुत्थरेणवौघ
मलिनरुद्धभूदिवम् ॥ पवनंसंस्मरेद्विश्वजीवनंप्राणरूपतः ॥१७॥ नदीपर्वतवृक्षादिकलिताग्रामसं
कुला ॥ आधारभूताजगतोध्येयापृथ्वीहमंत्रिणा ॥१८॥ सूर्यादिग्रहनक्षत्रकालचक्रसमन्वितम् ॥नि
र्मलंगगनंध्यायेत्प्राणिनामाश्रयप्रदम् ॥ १९ ॥ एवंषड्देवताध्यात्वासहस्राणितुषोडश॥ जपेन्मंत्रंद
शांशेनषड्द्रव्यैर्होममाचरेत् ॥ १२० ॥

विश्वजीवनम् ॥ ११७॥ ११८ ॥ ११९ ॥ १२० ॥

यथाभागंसततषष्ट्यधिकंशतद्वयंप्रत्येकम् ॥ १२१ ॥ १२२ ॥ प्रयोगमाह ॥ अकारमिति ॥ १२३ ॥ १२४ ॥ तद
ग्निंमचकारंयाम्येदक्षिणस्याम् ॥ रब्धआरब्धोजगद्दाहोयेनलंकृतोतिवापाठः ॥ १२५ ॥ ततीयेतिटम् ॥ १२६ ॥

व्रीहयस्तंदुलाआज्यंसर्षपाश्चयवास्तिलाः॥एतैर्हुत्वायथाभागपीठेपूर्वोदितेयजेत् ॥१२१॥ अङ्गदि
क्पालवज्राद्यैरेवंसिद्धोभवेन्मनुः॥शत्रूपद्रवमापन्नोयुंज्यात्तन्नष्टयेमनुम् ॥ २२ ॥ अकारंपर्वताकारंधा
वंतंशत्रुसम्मुखम् ॥ पतनोन्मुखमत्युग्रंप्राच्यांदिशिविचिंतयेत् ॥२३॥ ककारंक्षुब्धकल्लोलंप्लावितां
खिलभूतलम् ॥ समुद्ररूपिणंभीमंप्रतीच्यांदिशिसंस्मरेत् ॥ २४ ॥ वर्णंतदग्निमंज्वालासंघव्याप्तनभ
स्तलम् ॥ याम्येरब्धजगद्दाहंस्मरेत्प्रलयपावकम् ॥ २५ ॥ तृतीयवर्गप्रथमंप्रकंपितजगत्त्रयम्॥युगां
तपवनाकारमुत्तरस्यांदिशिस्मरेत् ॥२६ ॥ तुरीयपंचमाद्यार्णौपृथ्वीगगनरूपिणौ ॥ शत्रुवर्गबाधमा
नौचिन्तयेन्नियतात्मवान्॥२७॥तदग्निमंत्रवर्णयुगंशत्रोर्निःश्वासपद्धतिम्॥निरुंधानंस्मरेन्मन्त्रीविद
धद्रिपुमाकुलम् ॥ २८ ॥ मायादिवर्णत्रितयंशत्रोर्नेत्रश्रुतीमुखम् ॥ प्रत्येकंतुनिरुंधानंचिन्तयेत्साध
कोत्तमः ॥ १२९ ॥

तुरीयेति ॥ चतुर्थपञ्चमवर्गयोरादिमार्णौतंपं ॥ १२७ ॥ तदग्निमवर्णयुगंद्वयं हंलोमिति ॥ १२८ ॥ मायादिवर्ण
त्रितयंह्रींहुंसइति ॥ १२९ ॥

वर्मणाहुंकारेणक्षोभितमस्त्रंफट्कारंरिपोराधारादग्निमुत्थाप्यरिपुदेहंदहंतंस्मरेत् ॥ १३० ॥ मंडलमेकोनपंचाशद्दि
नानि ॥ १३१ ॥ मारणंकुर्वतःप्रायश्चित्तमाह ॥ एवमिति॥१३२ ॥ इतिमन्त्रमहोदधिनौकायामन्नपूर्णादिनिरूपणं
नामनवमस्तरंगः ॥ ९ ॥ बगलामुखीमाह ॥ गगनंह: ॥ पृथ्वील: ॥ शांतिः ई ॥ बिंदुश्चतैर्युतंह्लीं ॥

वर्मसंक्षोभितंत्वस्त्रंरिपोराधारदेशतः॥उत्थाप्यवह्नितद्देहंप्रदहन्समनुस्मरेत् ॥१३०॥ एवंवर्णान्स्म
रन्मंत्रंजपेन्मंत्रीसहस्रकम्॥ मण्डलत्रितयादर्वाङ्मारयत्येवविद्विषम् ॥३१॥ एवंयःकुरुतेकर्मप्राणा
यामजपादिभिः ॥ सशोधयित्वास्वात्मानंस्वरक्षायैहरिंस्मरेत् ॥ १३२ ॥ इति श्रीमन्त्रमहोदधा
वन्नपूर्णादिमन्त्रप्रकाशनंनामनवमस्तरंगः ॥ ९॥ अथप्रवक्ष्येशत्रूणांस्तंभिनीबगलामुखी।प्रणवोगगनं
पृथ्वीशांतिबिंदुयुतंबग ॥ १ ॥ लामुसाक्षोगदीसर्वदुष्टानांवाहलींदुयुक् ॥ मुखंपदंस्तंभयांतेजिह्वांकी
लयवर्णकाः॥२॥बुद्धिंविनाशयांतेतुबीजंतारोग्निसुन्दरी॥ षट्त्रिंशदक्षरोमंत्रोनारदोमुनिरस्यतु॥३॥

बगलामुखस्वरूपं ॥ गदीखः ॥ साक्षइयुतःखि ॥ सर्वदुष्टानांवास्त्ररूपम् इंदुयुक्हलांचं ॥ मुखंपदमित्या
दिस्वरूपम् ॥ बीजंह्लीं॥ तारॐ॥ अग्निसुन्दरीस्वाहा ॥ १ ॥ २ ॥ ३॥



ॐह्लींबगलामुखिसर्वदुष्टानांवाचंमुखंपदंस्तंभयजिह्वांकीलयबुद्धिंविनाशयह्लींॐस्वाहेतिषट्त्रिंशदर्णः । २ अस्यश्रीबगलामुखीमन्त्रस्यनारदऋषिःबृहतीछंदः
बगलामुखीदेवताममाखिलावाप्तयेजपेविनियोगः ।

षडंगमाह ॥ नेत्रेति ॥ अक्षाणिपंच ॥ ४ ॥ ध्यानमाह ॥ सौवर्णेति ॥ मुद्गरवज्रौदक्षयोः ॥ पाशरिपुजिह्वेवामयोः

छंदोपिबृहतीज्ञेयंदेवताबगलामुखी ॥ नेत्राक्षिसायकैर्नेत्रपंचकोष्ठाभिरंगकम् ॥ ४ ॥ सौवर्णासनसंस्थितांत्रिनयनांपीतांशुकोल्लासिनीं हेमाभांगरुचिंशशांकमुकुटांसच्चंपकस्रग्युताम् ॥ हस्तैर्मुद्गरपाशवज्ररसनाःसंबिभ्रतींभूषणैर्व्याप्तांगींबगलामुखींत्रिजगतांसंस्तंभिनींचिंतयेत् ॥ ५ ॥ एवंध्यात्वाजपेल्लक्षमयुतंचंपकोद्भवैः ॥ कुसुमैर्जुहुयात्पीठेपूर्वोक्तेपूजयेदिमाम् ॥ ६ ॥ चन्दनागुरुचंद्राद्यैःपूजार्थंयंत्रमालिखेत् ॥ त्रिकोणषड्दलाष्टास्रषोडशारधरापुरम् ॥ ७ मध्येसंपूजयेद्देवींकोणेसत्त्वादिकान्गुणान् ॥ षट्कोणेषुषडंगानिमातॄर्भैरवसंयुताः ॥ ८ ॥ संपूज्याष्टदलेपद्मेषोडशारेयजेदिमाः ॥ मंगलास्तंभिनीचैवजृंभिणीमोहिनीतथा ॥ ९ ॥ वश्याचलाबलाकाचभूधराकल्मषाभिधा ॥ धात्रीचकलनाकालकर्षिणीभ्रामिकापिच ॥ १० ॥ मंदगमनाचभोगस्थाभाविकाषोडशीस्मृता ॥ भूगृहस्यचतुर्दिक्षुपूर्वादिषुयजेत्क्रमात् ॥ ११ ॥ गणेशंबटुकंचापियोगिनींक्षेत्रपालकम् ॥ इंद्रादींश्चततोबाह्येनिजायुधसमन्वितान् ॥ १२ ॥

॥ ५ ॥ ६ ॥ ७ ८ ॥ भैरवसयुतामातॄरष्टदलेसंपूज्यषोडशदलेइमामङ्गलाद्यायजेत् ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

इत्थंसिद्धमनुर्मंत्रीस्तंभयेद्देवतादिकान् ॥ पीतवस्त्रस्तदासीनःपीतमाल्यानुलेपनः॥ १३॥ पीतपुष्पै
र्यजेद्देवींहारिद्रोत्थस्रजाजपन्॥पीतांध्यायन्भगवतींप्रयोगेष्वयुतंजपेत् ॥१४॥त्रिमध्वक्ततिलैर्होमो
नृणांवश्यकरोमतः ॥ मधुरत्रितयाक्तैःस्यादाकर्षोलवणैर्ध्रुवम् ॥ १५ ॥ तैलाभ्यक्तैर्निंबपत्रैर्होमो
विद्वेषकारकः॥तालुलोणहारिद्राभिर्द्विषांसंस्तंभनंभवेत्॥१६॥अंगारधूमंराजीश्चमाहिषंगुग्गुलंनिशि।
श्मशानपावकेहुत्वानाशयेदचिरादरीन् ॥ १७॥ गरुतोगृध्रकाकानांकटुतैलंबिभीतकम्॥गृहधूमंचि
तावह्नौहुत्वाप्रोच्चाटयेद्रिपून्॥१८॥ दूर्वागुडूचीलाजान्योमधुरत्रितयान्वितान्॥जुहोतिसोखिलान्रो
गाञ्छमयेद्दर्शनादपि ॥ १९ ॥ पर्वताग्रेमहारण्येनदीसंगेशिवालये॥ ब्रह्मचर्यव्रतोलक्षंजपेदखिलसि
द्धये॥२०॥ एकवर्णगवीदुग्धंशर्करामधुसंयुतम् ॥ त्रिशतंमंत्रितंपीतंहन्याद्विषपराभवम् ॥२१॥
श्वेतपालाशकाष्ठेनरचितेरम्यपादुके ॥ अलक्तरंजितेलक्षंमंत्रयेन्मनुनामुना ॥ २२ ॥ तदारूढः पुमा
न्गच्छेत्क्षणेनशतयोजनम् ॥ पारदंचशिलांतालंपिष्टंमधुसमन्वितम् ॥ २३॥ मनुनामंत्रयेल्लक्षंलिपे
त्तेनाखिलांतनुम् ॥ अदृश्यःस्यान्नृणामेषआश्चर्यंदृश्यतामिदम् ॥ २४ ॥

॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ गरुतःपक्षान् ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

यंत्रमाह ॥ षट्कोण इति ॥ धत्तूररसाक्तहरिद्राचूर्णैनषट्कोणेऽमुकंस्तंभयेतिवर्णयुतंह्लीमितिबीजांविलिख्यमंत्रशेषा
र्णैःसंवेष्टयोपरिचतुरस्रेणवेष्टितंपीतसूत्रवीतंकृत्वा भ्रमत्कुंभकारचक्रस्थमृदारचितवृषोदरेप्रक्षिप्यहरितालेनसंलिप्य

षट्कोणेविलिखेद्बीजंसाध्यनामान्वितंमनोः ॥ हरितालनिशाचूर्णैरुन्मत्तरससंयुतैः ॥२५॥शेषाक्षरैः
समावीतंधरागेहविराजितम् ॥ तद्यंत्रंस्थापितप्राणंपीतसूत्रेणवेष्टयेत् ॥ २६ ॥ भ्राम्यत्कुलालचक्र
स्थांगृहीत्वामृत्तिकांतया ॥ रचयेद्वृषभंरम्यंयंत्रंतन्मध्यतःक्षिपेत् ॥२७॥ हरितालेनसंलिप्यवृषंप्र
त्यहमर्चयेत् ॥ स्तंभयेद्विद्विषांवाचंगतिंकार्य्यपरंपराम् ॥२८॥ आदायवामहस्तेनप्रेतभूमिस्थखर्प
रम् ॥ अंगारेणचितास्थेनतत्रयंत्रंसमालिखेत् ॥ २९ ॥ मंत्रितंनिहितंभूमौरिपूणांस्तंभयेद्गतिम् ॥
प्रेतवस्त्रेलिखेद्यंत्रमंगारेणैवतत्पुनः ॥ ३० ॥ मंडूकवदनेन्यस्येत्पीतवस्त्रेणवेष्टितम्॥पूजितंपीतपुष्पै
स्तद्वाचंसंस्तंभयेद्द्विषाम् ॥ ३१ ॥

वृषंप्रत्यहंपूजयेत् स्तम्भनफलम् ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥

वृषाआटरूषकः ॥ ३२ ॥ ३३ ॥ ३४ ॥ स्वप्नवाराहीमाह ॥ वेदादीति॥ वेदादिबीजम् ॐ ॥ मायाह्रीं ॥ हृतनमः ॥ जलंवः ॥ पावकोरः ॥ तोदीर्घौवारा ॥ सद्दक्खंहःहि ॥ मेधाघः ॥ सद्ययुक्ओयुताघो ॥ रेस्वप्नंस्वरूपम् ॥ स

यद्भूमौभवितादिव्यंतत्रयंत्रंसमालिखेत् ॥ मार्जितंतद्वृषापत्रैर्दिव्यस्तंभनकृद्भवेत्॥ ३२॥ इंद्रवारुणिकामूलंसप्तशोमनुमंत्रितम् ॥ क्षिप्तंजलेदिव्यकृतांजलस्तंभनकारकम् ॥ ३३॥ किंभूरिणासाधकेन मंत्रःसम्यगुपासितः ॥ शत्रूणांगतिबुद्ध्यादेःस्तंभनोनात्रसंशयः ॥ ३४ ॥ उच्यतेस्वप्नवाराहीजनतावशकारिणी ॥ वेदादिबीजंमायाचहृद्दीर्घौजलपावकौ ॥ ३५ ॥ खंसद्दक्सद्ययुग्मेधारेस्वप्नंसर्गिणौचठौ ॥ कृशानुवल्लभांतोयंमंत्रःपंचदशाक्षरः ॥ ३६॥ ईश्वरोजगतीस्वप्नवाराहीमुनिपूर्वकाः ॥ तारोबीजंचहल्लेखाशक्तिष्ठौकीलकंमतम् ॥ ३७॥ द्विपंचनेत्रहस्तांक्षियुग्मार्णैरंगकंमनोः ॥ पादलिंगकटीकंठगंडाक्षिश्रुतिनासिके ॥ विन्यस्यमंत्रजान्वर्णांश्चिन्तयेत्परदेवताम् ॥ ३८ ॥

र्गिणौठौ ॥ ठःठः ॥ कृशानुवल्लभास्वाहा ॥ ३५ ॥ ३६ ॥ ३७ ॥ वर्णन्यासमाह ॥ पादेति ॥ लिंगेकंठेमूर्ध्निए कैकः ॥ अन्यत्र द्वौद्वौ ॥ ३८ ॥



१ ॐह्रींनमोवाराहिघोरेस्वप्नंठःठःस्वाहेतिपंचदशार्णः। २अस्यस्वप्नवाराहीमंत्रस्यईश्वरऋषिः जगतीछंदःस्वप्नवाराहीदेवता ॐबीजंह्रींशक्तिः ठःठःकीलकंममाभीष्टसिद्ध्यर्थंजपेविनियोगः।

ध्यानमाह ॥ मेघेति ॥ कोलास्यांवराहवदनाम् ॥ दंष्ट्रातलेवर्तमानयाऽचलयावसुधयाशोभिताम् ॥ असिलतां

मेघश्यामरुचिंमनोहरकुचांनेत्रत्रयोद्भासितांकोलास्यांशशिशेखरामचलयादंष्ट्रातलेशोभिनीम् ॥ विभ्राणांस्वकरांबुजैरसिलतांचर्मापिपाशंसृणिंवाराहीमनुचिंतयेद्धयवरारूढांशुभालंकृतिम् ॥ ३९ ॥
लक्षंजपेद्दशांशेननीलपद्मैस्तिलैःशुभैः ॥ जुहुयात्पूर्वसंप्रोक्तेपीठेसंपूजयेदिमाम् ॥ ४० ॥ त्रिकोणेतांसमाराध्यषट्कोणेष्वङ्गदेवताः॥ षोडशारेयजेच्छक्तीर्वक्ष्यमाणास्तुषोडश ॥४१॥उच्चाटनीतदीशीचशोषणीशोषणीश्वरी ॥ मारणीमारणीशीचभीषणीभीषणीश्वरी॥४२॥त्रासनीत्रासनीशीचकंपनीकंपनीश्वरी॥ आज्ञाविवर्तिनीपश्चादाज्ञाविवर्तिनीश्वरी॥४३॥वस्तुजातेश्वरीचाथसर्वसंपादनीश्वरी ॥ एताःपूज्याश्चतुर्थ्यंताःप्रणवाद्यानमोन्विताः ॥ ४४ ॥ यजेदष्टदलेपद्मेमातृभैरवसंयुताः ॥ लोकपालान्दशदलेद्वितीयेहेतिसंयुतान् ॥ ४५॥ एवंसिद्धंमनुंमंत्रीकाम्यकर्मणियोजयेत्॥ तर्पयेन्नारिकेलोत्थैर्जलैस्तीर्थोद्भवैरपि ॥ ४६ ॥

कुशौदक्षयोः ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥

कृष्णपक्षेइत्यारभ्यवश्याग्ध्रुवमित्यंतएकोवश्यार्थप्रयोगः ॥ ४७ ॥ ४८ ॥ नृकाकाजानांनरवायसमेषाणामसृजा

मानयेत्तरुणीवर्गान्सर्वकामार्थसिद्धये ॥ कृष्णपक्षेष्टमीघस्रेभूताहेवाकृतव्रतः ॥ ४७ ॥ चतुष्पथान्न
दीकूलद्वयात्कौलालवेश्मनः ॥ मृदमानीयधत्तूररससंयुक्तयातया ॥ ४८ ॥ रचयेत्पुत्तलींरम्यांसा
ध्यासुस्थापनान्विताम् ॥ ततःप्रेतांबरेयंत्रंनृकाकाजासृजालिखेत् ॥ ४९ ॥चित्रांगारयुजायोनिंषट्
कोणंभूपुरान्वितम् ॥ तदंतर्मंत्रमालिख्यवेष्टयेन्मनुनामुना॥ ५० ॥साध्यमुच्चाटययुगंशोषयद्वितयं
ततः ॥ मारयद्वितयंचाथभीषयद्वितयंततः ॥ ५१ ॥ नाशयद्वितयंपश्चाच्छिरःकंपययुग्मकम् ॥
ममाज्ञावर्तिनंपश्चात्कुरुसर्वाभिमार्णकाः ॥ ५२ ॥ तवस्तुजातंशब्दांतेसंपादययुगंततः॥ सर्वंकुरु
युगंस्वाहामुनिसप्ताक्षरोमनुः ॥ ५३ ॥

रुधिरेण ॥ ४९ ॥ ५० ॥ वेष्टनमन्त्रमाह ॥ साध्यमिति ॥ ५१ ॥ शिरःस्वाहा॥ स्पष्टमन्यत ॥ ५२ ॥ मुनिसप्ताक्षरः
सप्तसप्तत्यर्णः ॥ ५३ ॥

---

१ साध्यमुच्चाटयोच्चाटयशोषयशोषयमारयमारयभीषयभीषयनाशयनाशयस्वाहाकंपयकंपयममाज्ञावर्तिनंकुरुमर्वाभिमनवस्तुजातंसंपादयसम्पादयसर्वं
कुरुकुरुस्वाहा ७७

उक्तमार्गतःपूर्वोक्तविधिना ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ यन्त्रमाह ॥ कृत्वेति ॥ ५८ ॥ कामःक्लीं ॥ वाग्भवंमूं ऐं ॥
॥ ५९ ॥ पाशमूआं ॥ मायांह्रीं ॥ सृणिंक्रां ॥ श्रियंश्रीं ॥ दीर्घंकवचंहूं ॥ ६० ॥ पूर्वोक्ताउच्चाटनाद्याः ॥ ६१ ॥

अनेनवेष्टितंयंत्रंकृतंदेवीप्रतिष्ठितम् ॥ पुत्तल्याहृदिविन्यस्ययजेत्तामुक्तमार्गतः ॥५४॥ तदग्रेप्रजपे
न्मन्त्रंरात्रावेकांतमाश्रितः ॥ सहस्रंसाष्टकंभूयःपूजयेत्तांसमाहितः ॥५५॥ एवंकृतेनरानार्योराजानो
राजवल्लभाः ॥ सिंहागजामृगाःक्रूराभवेयुर्वशगाध्रुवम् ॥५६॥ चित्तेध्यात्वानिजंकार्य्यंशयीतविजने
व्रती ॥ यथाभावितथादेवीस्वप्नेवदतिमंत्रिणे ॥ ५७ ॥ अथैतस्यामहायंत्रंप्रवक्ष्येसिद्धिदंनृणाम् ॥
कृत्वात्रिकोणंषट्कोणंषोडशारंवसुच्छदम् ॥५८॥ दशारद्वितयंपंचदशास्रंभूपुरद्वयम् ॥ त्रिकोणेकाम
बीजस्थंवाग्भवंविलिखेत्पुनः ॥५९॥ षट्सुकोणेषुवाग्बीजंपाशंमायांसृणिंश्रियम् ॥ दीर्घंचकवचंपश्चा
द्विलिखेत्षोडशच्छदे ॥६०॥ शक्तीःषोडशपूर्वोक्ताब्राह्म्याद्याअष्टपत्रके ॥ भैरवैःसंयुताज्यस्येद्दशारेदिक्प
तीन्क्रमात् ॥६१॥ स्वस्वबीजादिकान्बीजसमूहःकथ्यतेऽधुना ॥ मांसंरक्तंविषंमेरुंजलंवायुंभृगुंवियत्
एतानिशशियुक्तानिपाशोमायांतिमामता ॥६२॥ वज्राद्यान्विलिखेत्सम्यक्पंक्तिपत्रेद्वितीयके ॥६३॥

दिक्पालबीजान्याह ॥ मांसमिति ॥ मांसंलः ॥ रक्तंरः ॥ विषंमः ॥ मेरुःक्षः ॥ जलंवः ॥ वायुर्यः ॥ भृगुःसः ॥
वियत्हः ॥ ६२ ॥ एतानिशशियुक्तानिबिंदुयुतानि ॥ पाशःआं ॥ अंतिमाचरमामायाह्रीं ॥ ६३ ॥

तिथिपत्रेपंचदशदले ॥ गायत्र्यर्णैर्वैदिकगायत्रीवर्णैः ॥ भूमिमिति ॥ चतुरस्रद्वयकोणेषुवाय्वग्नी यरेफौलिखेत् ॥
॥ ६४ ॥ ६५ ॥ वार्तालीमाह ॥ वागिति ॥ भूमिःग्लौं ॥ सावाग्बीजेनपुटिता तन्मध्यस्थऐंग्लौंऐमिति ॥ ६६ ॥



तिथिपत्रेमूलवर्णान्गायत्र्यर्णैःप्रवेष्टयेत्॥वाय्वग्नीविलिखेद्भूमिंमंदिरद्वितयात्रिषु ॥ ६४ ॥ भूर्जादौ
यन्त्रमालिख्यजपंसंपातसाधितम् ॥ बाह्वादौविधृतंदद्यान्नृणांकीर्तिंधनंसुखम् ॥ ६५॥ बहुनाकि
मिहोक्तेनवाराहीष्टंप्रयच्छति ॥ वाग्बीजपुटिताभूमिर्नमोतेभगवत्यथ॥६६॥वार्तालिवारागगनंस
हग्वाराहिवापदम्।शहसुखिततोबीजत्रयंपूर्वोदितंवदेत्।६७॥अन्धेअन्धिनिहृदयंरुंधेरुंधिनिहृत्तथा
॥जंभेजंभिनिहृत्पश्चान्मोहेमोहिनिहृत्पुनः॥६८॥स्तंभेस्तंभिनिहार्दांते‿नबीजत्रयंवदेत्॥सर्वदुष्ट
प्रदुष्टानांसर्वेषांसर्ववाक्पदम् ॥ ६९ ॥

सहकृगगनांह । पूर्वोदितंबीजत्रयम् ॥ ऐंग्लौंऐमिति ॥ ६७ ॥ हृदयंनमः ॥ हृन्नमः ६८ ॥ हार्दंनमः ॥ बीजत्रयं
ऐंग्लौंऐमिति ॥ ६९ ॥

त्रिबीजी ऐंग्लौंऐमिति ॥ सर्गाढ्यं ठचतुष्टयं ठःठःठःठः ॥ ७० ॥ वेदरुद्राक्षरः चतुर्दशोत्तरशतार्णः ॥ ७१ ॥

चित्तचक्षुर्मुखगतिंजिह्वास्तंभंकुरुद्वयम् ॥ शीघ्रंवश्यंकुरुद्वंद्वंत्रिबीजीठचतुष्टयम् ॥७० ॥सर्गाढ्यंच व र्मफट्स्वाहावेदरुद्राक्षरोमनुः ॥ प्रणवादिर्मुनिश्छंदःशिवोतिजगतीतथा॥७१॥वार्तालीदेवताप्रोक्ता वार्तालीहृदयंस्मृतम् ॥ वाराहीतिशिरःप्रोक्तंशिखावाराहमुख्यपि॥७२ ॥अंधेअंधिनिवर्मोक्तंरुंधेरुंधिनिनेत्रकम्॥ जंभेजंभिनिचास्त्रंस्यात्ततोध्यायेत्तुदेवताम् ॥ ७३ ॥ रक्तांभोरुहकर्णिकोपरिगतेशावासनेसंस्थितांमुंडस्रक्परिराजमानहृदयांनीलाश्मसद्रोचिषम्॥ हस्ताब्जैर्मुसलंहलाभयवरान्संबिभ्रतींसत्कुचांवार्तालीमरुणांबरांत्रिनयनांवंदेवराहाननाम् ॥७४॥ तत्सप्तदशसाहस्रंप्रजपेत्तद्दशांशतः ॥ तिलैर्बंधूककुसुमैर्जुहुयान्मधुरान्वितैः ॥७५॥ पूजायंत्रमथोवक्ष्येजपादिनवशक्तिकम् ॥ स्वर्णेरूप्येतथाताम्रेभूर्जपत्रेथदारुणि ॥७६ ॥

॥ ७२ ॥ ७३ ॥ ध्यानमाह ॥ रक्तेति ॥ मुसलवरौदक्षयोः ॥ ७४ ॥ ७५ ॥ ७६ ॥

---

१ ॐ ऐंग्लौंऐंनमोभगवतिवार्तालिवाराहिवाराहिवाराहमुखिऐंग्लाऐंअंधेअंधिनिनमोरुंधेरुंधिनिनमोजंभेजंभिनिनमोमोहेमोहिनिनमःस्तंभेस्तंभिनिनमोऐंग्लौंऐंसर्वदुष्टप्रदुष्टानांसर्वेषांसर्ववाक्चित्तचक्षुर्मुखगतिजिह्वास्तंभंकुरुकुरुशीघ्रंवश्यंकुरुकुरुऐंग्लौंऐंठःठःठःठःहुँफट्स्वाहा ११४ ॥ २ अस्यश्रीवार्तालीमंत्रस्यशिवऋषिरातिजगतीछंदःवार्तालीदेवताममाखिलावाप्तयेजपेविनियोगः ।

रात्रिर्हरिद्रा ॥ पूजायंत्रमाह ॥ योनीति ॥ योनिस्त्रिकोणम् ॥ ७७ ॥ भूबिंबं चतुरस्रम् ॥ ७८ ॥ तदग्न्यादिषु तस्यारेव्याअग्न्यादिषु अग्निनिर्ऋतिवाय्वीशानाग्निदिशासु ॥ अंगकं षडंगानि ॥ यजेदितिपूर्वेणान्वयः ॥ ७९ ॥

लिखेद्गोरोचनारात्रिचंदनागुरुकुंकुमैः ॥ योनिपंचास्रषट्कोणाष्टपत्रशतपत्रकम् ॥ ७७ ॥ सहस्रदल भूबिंबसंवीतद्वारसंयुतम् ॥ कैलासाचलमध्यस्थंपीठमेतद्विचिंतयेत् ॥७८॥ तत्रावाह्य यजेद्देवींसुप चारैर्मनोहरैः ॥ त्रिकोणमध्येदेवेशींतदग्न्यादिषुचांगकम् ॥७९॥ वार्तालीचापिवाराहीपूज्यावाराह मुख्यपि॥त्रिकोणेष्वथपंचास्रेष्वंधिनीरुंधिनीतथा ॥८०॥ जंभिनीमोहिनीचापिस्तंभिनीज्यातु पंचमी ॥ षट्कोणेषुपुनःपूज्याडाकिनीराकिनीतथा ॥ ८१ ॥ लाकिनीकाकिनीचापिशाकिनीहा किनीपुनः ॥ षट्कोणपार्श्वयोःपूज्यंस्तंभिनीक्रोधिनीद्वयम् ॥ ८२ ॥ मुसलेष्टवरौत्वाद्याकपालह लभृत्परा॥षट्कोणाग्रेयजेच्चंडोच्चंडंतस्याःसुतोत्तमम् ॥ ८३ ॥

॥ ८० ॥ ८१ ॥ ८२ ॥ स्तंभिनीध्यानेइष्टोवरोदक्षेमुसलंवामे ॥ पराक्रोधिनी ॥ कपालहलभृत कपालंदक्षे ॥ देवीसुतायचंडोच्चंडायनमइतिसुतपूजा ॥ ८३ ॥

सुतध्यानमाह शूलमिति ॥ डमरुकपाले दक्षयोः ॥ शूलनागौ वामयोः ॥ ८४ ॥ वार्तालीमुखं वार्ताल्यादि ॥ देव्यष्टकमनंतरोक्तं वार्तालीवाराहीवाराहमुख्यांधिनीरुंधिनीजंभिनीमोहिनीस्तंभिनीसंज्ञकम् ॥ रुद्राः एकादश वीरभद्रादयः ॥ अर्काःद्वादश धात्रादयः ॥ वसवोष्टौधराद्यः ॥ अश्विनौनासत्यदस्रौ ॥ ८५ ॥ एकैकःपत्रात्रिके

शूलंनागंचडमरुकपालंदधतंकरैः ॥ इन्द्रनीलनिभंनग्नंजटाभारविराजितम्॥ ८४॥ अष्टपत्रेषुवार्ता
लीमुखदेव्यष्टकयजेत् ॥ शतपत्रेषुसपूज्यारुद्रार्कावसवोश्विनौ ॥ ८५ ॥ त्रिरेकैकोत्यपत्रेतुजंभिनी
स्तंभिनीयुता ॥ शतकोणाग्रतःपूज्यःसिंहोमहिषसयुतः ॥ ८६ ॥ सहस्रपत्रेवाराहींपूजयेत्तुसह
स्रशः ॥ अकुशोङेंतवाराहीनमोंतस्तन्मनुःस्मृतः ॥८७॥भूपुरद्वारदेशेतुबटुकंक्षेत्रपालकम् ॥ योगि
नींगणनाथंचतत्तन्मंत्रैः प्रपूजयेत् ॥८८॥ फांतःसबिंदुर्बटुकोङेंतोहृत्समवर्णकः ॥ मेरुःशशियुतः
क्षेत्रपालायनमसान्वितः ॥८९॥

पूज्यः ॥ एवंनवनवतिः ॥ चरमपत्रेतुजंभिनीस्तंभिनीध्यानमहइति ॥ ८६ ॥ वाराहीमंत्रमाह ॥ अंकुश इति ॥ क्रोंवाराह्यैनमःइतिमंत्रेणसहस्रवारंवाराहीमेवपूजयेत् ॥ ८७ ॥ ८८ ॥ बटुकमंत्रमाह ॥ फांतइति ॥फांतोवः ॥ बंबटुकायनमइति ॥ क्षेत्रपालमंत्रमाह ॥ मेरुरिति ॥ मरुःक्षः ॥ क्षंक्षेत्रपालायनमःइति ॥ ८९ ॥

योगिनीमंत्रमाह ॥ अष्टार्णइति ॥ वायुर्यः शेषयुक्तआयुतःसचंद्रोबिंदुयुतश्च यांयोगिनीभ्योनमइति ॥ गणेशमंत्रमाह ॥खांतइति ॥ खांतोगः ॥ गंगणपतयेनमइति ॥ १० ॥ ११ ॥ १२ ॥ बटुकस्यबलिमंत्रमाह ॥ एहीति ॥ १३ ॥ सदृक्जलमियुतोवः ॥ वि ॥ १४ ॥ वह्निपत्नीस्वाहा ॥ स्वरूपमपरं ॥ शरपंचाक्षरः पंचपंचाशदर्णः ॥

अष्टार्णःशेषयुग्वायुःसचन्द्रोयोगिनीपदम् ॥ भ्योनमोंतःसप्तवर्णःखांतश्चंद्रान्वितोगण ॥ १० ॥प
तयेहृच्चाष्टवर्णाःप्रोक्तास्तेमनवःक्रमात् ॥ दिक्पालानायुधैर्युक्तान्दिक्षुसंपूजयेत्ततः ॥११॥ पूजांते
बटुकादिभ्योबलिमंत्रैर्बलिंहरेत् ॥ बलिदानोचितामंत्राःकीर्त्यंतेखिलसिद्धिदाः ॥१२ ॥ एह्येहीतिप
दंप्रोच्यदेवीपुत्रेतिकीर्तयेत् ॥ बटुकांतेनाथकपिलजटाभारभासुर ॥ १३ ॥ त्रिनेत्रज्वालाशब्दांतेमु
खसर्वजलसदृक् ॥ घ्नान्नाशययुगंसर्वोपचारसहितंबलिम् ॥ १४ ॥गृह्णयुग्मंवह्निपत्नीशरपंचाक्षरो
मनुः ॥ बटुकस्यबलिंदद्यादनेनश्रद्धयान्वितः ॥ १५ ॥ मेरुःषड्दीर्घयुग्वर्मस्थानक्षेत्रपदंवदेत् ॥पा
लेशसर्वकामंचपूरयाननवल्लभा ॥ १६ ॥ त्रयोविंशतिवर्णाढ्यःक्षेत्रपालमनुर्मतः ॥ योगिनीनामथो
मंत्रःपद्यरूपःप्रपठ्यते ॥१७॥

यथा-एह्येहिदेवीपुत्रबटुकनाथकपिलजटाभारभासुरत्रिनेत्रज्वालामुखसर्वविघ्नान्नाशय २ सर्वोपचारसहितंबलिं गृह्ण २ स्वाहेति ॥ १५ ॥ क्षेत्रपालबलिमंत्रमाह ॥ मेरुरिति ॥ मेरुःक्षः ॥ षड्दीर्घयुक् क्षांक्षींक्षूंक्षैंक्षौंक्षःहुंस्थान क्षेत्रपालशसर्वकामंपूरयस्वाहेति ॥ १६ ॥ १७ ॥

योगिनीबलिमन्त्रमाह ॥ ऊर्ध्वमित्यादि ॥ ९८ ॥ स्वाहांतःस्वरूपमेव ॥ भूमिनन्दाक्षरः एकनवतिवर्णः पद्येनसह ॥ ९९ ॥ गणेशबलिमंत्रमाह ॥ दीर्घोति ॥ शार्ङ्गिणः दीर्घत्रयेंदुयुक् गांगींगूं ॥ सेंदुर्ग मारुतो यः भगवानएयुतः ॥ये तोयंवः ॥ १०० ॥ लोहितःपः ॥ दीर्घोहलीचा ॥ शिरःस्वाहा ॥ १०१ ॥ गगनश्रुति

ऊर्ध्वब्रह्मांडतोवादिविगगनतलेभूतलेनिष्कलेवापातालेवातलेवासलिलपवनयोर्यत्रकुत्रस्थितावा ॥
क्षेत्रेपीठोपपीठादिषुचकृतपदाधूपदिपादिकेनप्रीतादेव्यःसदानःशुभबलिविधिनापांतुवीरेंद्रवंद्याः ॥
॥९८॥ यांयोगिनीभ्यःस्वाहांतोभूमिनंदाक्षरोमनुः॥ योगिनीनांबलिंदद्यादनेनविधिपूर्वकम्॥९९॥
दीर्घत्रयेंदुयुक्सेंदुःशार्ङ्गीगणपतार्णकाः ॥ मारुतोभगवांस्तोयंस्वरांतेदसर्वंच॥ १००॥जनंमेवशमा
नांतेयःसर्वोलोहितोहली॥दीर्घोरसहितंप्रांतेबलिंगृह्णयुगंशिरः ॥ १ ॥ गणेशबलिमंत्रोयंगगनश्रुति
वर्णवान् ॥ एवंतेभ्योबलिंदत्त्वास्वस्वमुद्रांप्रदर्शयेत् ॥ २ ॥ अंगुष्ठंतर्जनीयुक्तंदर्शयेद्बटुकेबलौ ॥
अंगुष्ठानामिकेवामेक्षेत्रपालबलौमता ॥ १०३ ॥

पर्णवान् चत्वारिंशदर्णः ॥ यथा–ॐ गांगींगूंगंगणपतयेवरवरदसर्वजनंमेवशमानयसर्वोपचारसहितंबलिं गृह्ण गृह्ण स्वाहेति ॥ १०२ ॥ १०३ ॥

॥ १०४ ॥ १०५ ॥ १०६ ॥ १०७ ॥ १०८ ॥ तापिच्छंनामतमालपुष्पम्॥ लाजानांचूर्णयुतैस्तिलैःखरमेषरुधिरयुतैः
॥ १०९ ॥ सपत्नसदनंशत्रुगृहम् ॥ एतस्मैपिंडाय ॥ ११० ॥ १११ ॥ ११२ ॥ यंत्रमाह ॥ विलि

किंचिद्वक्रीकृतामध्यागणनाथबलौस्मृता।अनामामध्यमांगुष्ठायोगिनीनांबलौपुनः॥१०४॥एवंसंपू
ज्यसंस्तुत्यनत्वात्मन्युपसंहरेत् ॥ सिद्धमंत्रःप्रकुर्वीतप्रयोगाञ्छिवभाषितान्॥१०५॥हरिद्रयाचन्द
नेनलाक्षयागुरुणापिच ॥ पुरेणविविधैर्मांसैर्जुहुयादिष्टसिद्धये ॥१०६ ॥ हारिद्रामालयाकुर्य्याज्जपं
स्तंभनकर्मणि ॥ स्फाटिकैःपद्मबीजैश्चरुद्राक्षैःशुभकर्मणि ॥१०७॥ स्वर्णादिपात्रैःसुरयाबंधूककुसु
मैस्तिलैः ॥ वाराहींतर्प्पयेत्सम्यक्कामसंपूर्तयेनरः ॥१०८॥ चतुःशतंतुतापिच्छैर्जुहुयात्स्तंभनेच्छ
या ॥ लाजचूर्णतिलैःकुर्य्यात्खरमेषासृजान्वितैः ॥१०९॥पिंडंमनोहरंतंतुपूजयेत्तर्पयेदपि॥सपत्नस
दनंसांगमेतस्मैविनिवेदयेत्॥११० ॥ कुंडेपिंडंनिधायामुंजुहुयात्तत्रचायुतम्॥एकविंशतिरात्रीषुला
जैरक्तसमन्वितैः॥१११॥एवंकृतेवैरिवृंदंभक्ष्यतेयोगिनीगणैः॥अथयंत्रंमहादेव्याःप्रोच्यतेशकटाभि
धम्॥११२॥विलिख्यतारंसाध्याख्यंभूबीजेनप्रवेष्टयेत्॥उकारेणचसंवेष्ट्यभूपुरंपारितोलिखेत् ११३

ख्येति ॥ तारंप्रणवं ॥ साध्याख्यंसाध्यनाम ॥ भूबीजेन ग्लौंमितिबीजेन ॥ ११३॥

कर्मसमान्वितम् अमुकमुच्चाटयेतिक्रियायुतम् ॥ ११४ ॥ धराबीजंतद्देव ॥ अंकुशःक्रों ॥ झिंटीशः एकारः ॥ ११५ ॥ नूतनेनवीने ॥ ११६ ॥ ११७ ॥ रात्र्याहरिद्रया ।। पाषाणेलिखित्वाग्नौनिःक्षिप्तंतापकारि ॥ ११८ ॥ ॥ ११९ ॥ साध्यर्क्षतरवः साध्यस्ययज्जन्मनक्षत्रंतस्यवृक्षमध्येक्षिप्तंतेषांदुःखदम् ॥ तेचपूर्वमुक्ताः ॥ साधितं

अष्टवज्रान्वितंवज्रप्रांतेप्रणवमालिखेत् ॥वज्रमध्येसाध्यनामलिखेत्कर्मसमन्वितम् ॥११४॥ धराबीजेनसंवेष्ट्यभूपुरंमूलविद्यया ॥ बहिरंकुशसंवीतंझिंटीशेनप्रवेष्टयेत् ॥ ११५॥एतद्यंत्रंसमालिख्यनूतनेकौलालखर्परे ॥ कृष्णपुष्पैःसमभ्यर्च्यनिःक्षिपेत्त्वारिवेश्मनि ॥११६॥ रिपुमुच्चाटयेच्छीघ्रंस्थितंवर्षशतान्यपि ॥ वादित्रेयंत्रमालिख्यवादयेत्समरांतरे ॥ ११७॥श्रुत्वातद्ध्वसंत्रस्ताःपलायंतेविरोधिनः ॥पाषाणेलिखितंरात्र्यापीतपुष्पैस्तुनिःक्षिपेत् ॥ ११८ ॥ संपूजितमधोवक्त्रंवाचंसंस्तंभयेद्द्विषाम् ॥ तापकार्यग्निनिःक्षिप्तंजलेदोषप्रदंभवेत् ॥११९॥साध्यर्क्षतरुगर्भस्थंशत्रूणांदुःखदायकम् ॥ किंबहूक्तेनसर्वेष्टंसाधयेत्साधितंनृणाम् ॥१२०॥ इतिश्रीमहीधरविरचितमंत्रमहोदधौबगलादिमंत्रकथनंनामदशमस्तरंगः ॥१०॥ ॥छ॥ ॥छ॥ ॥छ॥

संपातादिनाप्रतिष्ठितमेतद्यंत्रंसर्वेष्टंसाधयेत् ॥ १२० ॥ इति श्रीमंत्रमहोदधिव्याख्यायांनौकायांबगलादिनिरूपणंनामदशमस्तरंगः ॥ १० ॥

श्रीविद्यांवक्तुंमंगलमाचरति ॥ त्रिनेत्रमिति ॥ मंत्रनायिकां त्रिलोकीवर्तिनांसर्वमंत्राणांस्वामिनीम् ॥ उत्पादिकामित्यर्थः ॥ १ ॥ अपरीक्षितायशिष्यायतांविद्यांनदद्यात् ॥ आत्मादयःशिरोदेयंनदेयाषोडशाक्षरीति वचनात् ॥ २ ॥ मंत्रमुद्धरति ॥ तारमिति ॥ तार ॐ ॥ मायाह्रीं ॥ कमलाश्रीं ॥ एतद्बीजत्रयंकूटत्रयादौ पठेत्॥ आद्यकूटमाह ॥ ब्रह्मेति ॥ ब्रह्माकः ॥ झिंटीश ए ॥ गोविंद ई ॥ धरा लः ॥ मायेति-प्रथमंकूटं

ॐ त्रिनेत्रंकमलाकातंनृसिंहंचंद्रशेखरम् ॥ नत्वासंक्षेपतोवक्ष्येश्रीविद्यांमंत्रनायिकाम् ॥ १ ॥ अपरीक्षितशिष्यायतांनदद्यात्कदाचन ॥ यदुच्चारणमात्रेणपापसंघःप्रलीयते ॥ २ ॥ तारंमायांचकमलामादौबीजत्रयंपठेत् ॥ ब्रह्मझिंटीशगोविंदधरामायेतिचादिमम् ॥ ३ ॥ आकाशभृगुचक्रयभ्रमांसमायाद्वितीयकम् ॥ हंसधातृक्षमामायातृतीयंबीजमीरितम् ॥ ४ ॥

कएइलह्रीमिति ॥ ३ ॥ द्वितीयमाह ॥ आकाशेति ॥ आकाशोहः ॥ भृगुःसः ॥ चक्रीकः ॥ अभ्रंहः ॥ मांसंलः ॥ मायेति-द्वितीयंकूटं हसकहलह्रीमिति ॥ तृतीयमाह ॥ हंसेति ॥ हंसः सः ॥ धाताकः ॥ क्षमालः ॥ मायाचेति-तृतीयंकूटं सकलह्रीमिति ॥ ४ ॥

॥ ८६ ॥

कूटत्रयस्यसंज्ञाआह ॥ वागिति ॥ प्रथमंवाग्बीजं ॥ द्वितीयंकामबीजं ॥ तृतीयंशक्तिबीजं॥श्रीःश्रीबीजं ॥ माया ह्रीं॥ कामःक्लीं ॥ वाक्ऐं ॥ शक्तिःसौः ॥ एतैः पञ्चबीजैःक्रमोत्क्रमाभ्यांसंपुटापूर्वोक्तषडर्णा ॥ ५ ॥ षोडशाक्षरी श्रीविद्याभिधामहाविद्या ॥ ६ ॥ भृगुःसः ॥ औःस्वरूपं ॥ तेनसौःशक्तिः ॥ कामबीजंक्लीं॥७॥ न्यासानाह ॥

वाक्कामशक्तिसंज्ञंतुक्रमाद्बीजत्रयंभवेत् ॥ इयंषडर्णाश्रीमायाकामवाक्छक्तिसंपुटा ॥ ५ ॥ अनेकपुण्यसंप्राप्याश्रीविद्याषोडशाक्षरी ॥ मुनिःस्याद्दक्षिणामूर्तिःपंक्तिश्छंदःसमीरितम् ॥ ६ ॥ देवताजगतामाद्दिःश्रीमत्त्रिपुरसुन्दरी ॥ बीजमैंभृगुरौःशक्तिःकामबीजंतुकीलकम् ॥ ७ ॥ मूर्द्धास्यहृद्गुह्यपादेनाभौमुन्यादिकान्न्यसेत् ॥ न्यासान्सर्वान्प्रकुर्वीतमायाश्रीबीजपूर्वकान् ॥ ८ ॥

मूर्धेति ॥ दक्षिणामूर्तयेनमोमूर्ध्नि ॥ पंक्त्यैनमोमुखे ॥ त्रिपुरसुन्दर्यैनमोहृदि॥ऐंबीजायनमोगुह्ये॥ सौःशक्तयेनमः पादयोः ॥ क्लींकीलकायनमोनाभौ ॥ इतिमुन्यादिन्यासः ॥ ८॥

---

१ श्रींह्रींक्लींऐंसौःॐह्रींश्रींकएईलह्रींहसकहलह्रींसकलह्रींसौःऐंक्लींह्रींश्रींमितिषोडशाक्षरी । २ अस्यात्रिपुरसुंदरीमंत्रस्यदक्षिणामूर्तिर्ऋषिःपंक्तिश्छंदःश्रीमत्त्रिपरसुंदरीदेवताऐंबीजंसौःशक्तिःक्लींकीलकंममाभीष्टसिद्ध्यर्थेजपेविनियोगः ।

अन्यान्न्यासानाह ॥मध्येति ॥ इमानश्रीकण्ठादिनमोंतान्द्विर्वारद्वयंमध्यानामिकाकनिष्ठांगुष्ठतर्जनीतलपृष्ठेषुन्यसेत् ॥ ९ ॥ इमान्कानित्यतआह ॥ श्रीति ॥ श्रीकंठोऽकारः ॥ अनंतआकारः ॥ सौस्वरूपम् ॥ क्रमाद्विंद्वादियुतान् अंआंएंतौसबिंदू ॥ सौःसर्गी ॥ तथा–मायाश्रीबीजपूर्वकानिति सर्वन्यासेषुसंबद्ध्यते ॥ ह्रींश्रींअंमध्यमाभ्यांनमः ॥ ह्रींश्रींआंअनमिकाभ्यांनमः॥ ह्रीं श्रींसौंःकनिष्ठिकाभ्यांनमः ॥ ह्रींश्रींअंअंगुष्ठाभ्यांनमः ॥

मध्यानामाकनिष्ठासुज्येष्ठयोस्तर्जनीद्वयोः॥तलपृष्ठेचकरयोर्विन्यसेद्विष्क्रमादिमान् ॥ ९ ॥ श्रीकण्ठानंतसौवर्णान्बिंदुसर्गसमन्वितान् ॥नमोंतान्करशुद्ध्याख्योन्यासोयंपरिकीर्तितः ॥ १० ॥ देव्यासनंचप्रथमंतथाचक्रासनंक्रमात् ॥ सर्वमन्त्रासनंसाध्यसिद्धासनमितिन्यसेत् ॥ ११ ॥ ङेनमोंतंचबीजाढ्यंपज्जंघाजानुलिंगके ॥ मायांकामंशक्तिबीजंप्रथमासनपूर्वकम् ॥ १२ ॥ वियदारूढवाक्कामशक्तिबीजानिपूर्वतः ॥ द्वितीयेसंप्रयोज्यानिसहपूर्वाणितत्परे ॥ १३ ॥

ह्रींश्रींआंतर्जनीभ्यांनमः ॥ ह्रींश्रींसौंःकरतलकरपृष्ठाभ्यांनमः ॥ अयंकरशुद्धिन्यासः ॥ १० ॥ आसनन्यासमाह देव्येति ॥ देव्यासनाद्यासनचतुष्कं ङेनमोंतं चतुर्थींनमोंतंबीजाद्यं मायामित्यादिवक्ष्यमाणप्रातिस्विकबीजपूर्वं पज्जंघाजानुलिंगेषुन्यसेत् ॥प्रथमासनबीजान्याह ॥ मायामिति ॥ शक्तिःसौंः॥चक्रासनबीजान्याह ॥ वियदिति ॥ वियतहः ॥ तद्युतानिवागादीनि ॥ तत्परे तृतीयासने ॥ सहपूर्वाणि वागादीनि ॥ ११॥१२॥१३ ॥

चतुर्थासनबीजान्याह ॥ मायामिति ॥ फांतमांसेबलौं. ॥ भगेंद्राढ्येएबिंदुयुतेतेनक्लें ॥ यथा-ह्रींश्रींह्लींक्लींसौः देव्यासनायनमःपादयोः ॥ ह्रींश्रींहैंक्लींसौःचक्रासनायनमःजंघयोः ॥ ह्रींश्रींहैंक्लींसौःसर्वमंत्रासनायनमःजान्वोः॥ ह्रींश्रींह्लींक्लींब्लेंसाध्यसिद्धासनायनमोलिंगेइत्यासनन्यासः ॥१४ ॥ षडंगमाह ॥ ततइति ॥ श्रींह्लींक्लीं ऐंसौःहृदयं ॥ ॐ ह्रींश्रींशिरः ॥ आद्यकूटेनशिखा ॥ मध्यकूटेनकवचं ॥ तृतीयकूटेननेत्रं ॥ सौःऐंक्लींह्लींश्रींअस्त्रम्

मायांकामंफांतमांसेभगेंद्राढ्येप्रयोजयेत् ॥ तुरीयासनपूर्वाणीत्यासनन्यासईरितः ॥ १४ ॥ ततः षडंगंकुर्वीतपंचभिस्त्रिभिरेकतः॥एकैकेनैकेनपंचार्णैर्मंत्रस्यक्रमतःसुधीः॥१५ ॥ मूलविद्यांसमुच्चार्य प्रणवादिनमोंतिकाम्॥मध्यमानामिकाभ्यांतुब्रह्मरंध्रेप्रविन्यसेत् ॥ १६ ॥ सुधांस्रवंतींवर्णेभ्यःप्लाव यंतींनिजांतनुम् ॥ प्रदीपकलिकाकारांमहासौभाग्यदांस्मरेत् ॥ १७ ॥ मुद्रांकृत्वावामकर्णेपरसौभा ग्यदंडिनीम् ॥ वाममूर्द्धादिपादांतंतथामूलंप्रविन्यसेत् ॥ १८ ॥

इतिषडंगन्यासः ॥ १५ ॥ मंत्रवर्णेभ्योऽमृतंक्षरंतींतेननिजंशरीरमाप्लावयंतींप्रदीपकलिकाकारांब्रह्मरंध्रस्थांसौभा ग्यदांदेवींध्यायन्सतारादिनमोंतंमूलंमध्यमानामिकाभ्यांशिरसिन्यसेत् ॥ १६ ॥ १७ ॥ पुनर्वामकर्णेपरसौभाग्यदं डिनींमुद्रांकृत्वावामपार्श्वेमूर्धादिपादांतंतारादिनमोन्तं मूलंन्यसेत् ॥ १८॥

रिपुजिह्वाग्रहांमुद्रांदर्शयन्सर्वशत्रून्निगृह्णामीतिसंचिंत्यपादमूलेताराादिनमोंतंमूलंन्यसेत् ॥सकललोककर्ताहमिति बीजंविचिंत्यत्रिखंडयामुद्रयाललाटेताराादिनमोंतंमूलंन्यसेत्॥ १९ ॥ २० ॥ मुखेसंवेष्टयंस्ताराादिनमोंतंमूलंन्यसेत् । दक्षकर्णतोवामांतंन्यस्यकंठान्मुखांतमेवमेवन्यसेत् ॥२१॥ पुनःप्रणवपुटांविद्यांसर्वांगेन्यसेत्॥मुखेयोनिमुद्रां

त्रिखंडयामुद्रयातुभालेमूलंन्यसेत्तथा ॥ त्रैलोक्यस्याखिलस्याहंकर्त्तेतिस्वंविचिंतयेत् ॥ १९ ॥
रिपुजिह्वाग्रहांमुद्रांदर्शयन्सर्वविद्विषः ॥ निगृह्णामीतिसंचिंत्यपादमूलेतथान्यसेत् ॥ २० ॥ मुखे
संवेष्टयन्न्यस्येत्पुनर्दक्षिणकर्णतः ॥ विन्यस्यवामकर्णांतंकंठाद्धृत्कंततोन्यसेत् ॥ २१ ॥ तारसं
पुटितांविद्यांसर्वांगेविन्यसेत्पुनः ॥ योनिमुद्रांमुखेबद्ध्वानमेत्त्रिपुरसुंदरीम् ॥ २२ ॥ ब्रह्मरंध्रेहस्तमूले
भालेविद्यांप्रविन्यसेत् ॥ अंगुष्ठानामिकाभ्यांतुन्यासःसम्मोहनाभिधः ॥ २३ ॥

बद्ध्वातथैवदेवींनमेत् ॥ २२ ॥ अयं जगद्वशीकरणन्यासः देवीकांत्याविश्वंरक्तंध्यायन्नंगुष्ठानामिकाभ्यांब्रह्मरंध्रे मणिबंधेललाटेविद्यांन्यसेत् ॥ इतिसंमोहनोन्यासः ॥ २३ ॥

परसौभाग्यदंडिनीमुद्रोक्ता ॥ तल्लक्षणंयथा–वामेमुष्टिंदृढंबद्ध्वातर्जनींप्रविसारयेत् ॥ भ्रामयेद्वामकर्णांतंमुद्रासौ भाग्यदंडिनीति ॥ रिपुजिह्वाग्रहणमुद्रालक्षणंतु–अंगुष्ठगर्भितां मुष्टिंबध्वयाद्दक्षपाणिना ॥ रिपुजिह्वाग्रहाख्येयंमु द्रोक्ताशत्रुनाशिनीति ॥ मुद्रावाम ( पाद ) तलेकृतेति त्रिखंडालक्षणंतारातंत्रेउक्तम् ॥ २४ ॥ अक्षरन्याससंहा राख्यमाह ॥ पादयोरिति ॥ पादादिष्वेकैकमक्षरंन्यसेत् ॥ कर्णवेष्टः कर्णशष्कुली ॥ श्रींनमःपादयोः ॥ ह्रींनमो

जगद्वश्यकराख्योयंन्यासःसंकीर्तितोमया ॥ संस्मरन्नरुणामूलं सुंदरीप्रभयाजगत् ॥२४॥ पादयो र्जंघयोर्न्यस्येज्जान्वोश्चकटिभागयोः ॥लिंगपृष्ठेनाभिदेशेपार्श्वयोःस्तनयोरपि॥२५॥अंसयोःकर्ण योर्ब्रह्मरंध्रेवक्त्रेचनेत्रयोः ॥ कर्णयोःकर्णवेष्टेपिमूलस्यैकैकमक्षरम्॥ २६ ॥संहारन्यासउक्तोयंततोवा ग्देवतांन्यसेत् ॥ तासांबीजानिनामानिन्यासस्थानानिचब्रुवे ॥२७॥ अग्निभूधरमांसाढ्योघींशो बीजंशशांकयुक् ॥ षोडशस्वरबीजाढ्यांवशिनींशिरसिन्यसेत् ॥ २८ ॥

जंघयोरित्यादिप्रयोगः ॥२५॥॥२६॥ अयंसंहारन्यासः ॥२७॥ वाग्देवताःन्यासमाह ॥ अग्नीति ॥ अग्नीरेफः॥भूधरो वः ॥ मांसंलः ॥ एतैर्युतोघींशऊकारःशशांकयुक् बिंदुयुतः ॥ तेनब्लूं ॥ षोडशस्वरपूर्वकं तद्बीजपूर्वांवशिनींशिर सिन्यसेत् ॥ यथा–अंआंइंईंउंऊंऋंॠंऌंॡंएंऐंओंऔंअंअःब्लूंवशिनीवाग्देवतायैनमःशिरसि ॥ २८ ॥

क्रोधीशेति ॥ क्रोधीशः कः ॥ मांसलः ॥ एताभ्यांयुतामायाकलह्रीं ॥ कवर्गःपूर्वोयस्येदृशमेतद्बीजमाद्यंयस्या स्तांकामेश्वरींभालेन्यसेत् ॥ यथा—कंखंगंघंङंकलह्रींकामेश्वरीवाग्देवतायैनमोललाटे ॥ २९ ॥ दीर्घेति ॥ दीर्घोन कारः ॥ खड्गीशोबः ॥ रांतोलः ॥ एतैर्युताशांतिरींकारः ॥ बिंदुयुतातेनब्लीं ॥ चवर्गेणतद्बीजेनचयुतांमोहिनीं भ्रूमध्येन्यसेत् ॥ यथा—चंछंजंझंञंब्लींमोहिनीवाग्देवतायैनमोभ्रूमध्ये ॥३०॥ अर्घीशेति ॥ अर्घीशऊ ॥ कीदृशः ॥

क्रोधीशमांसयुङ्मायाद्वितीयंबीजमीरितम् ॥ कवर्गपूर्वबीजाद्यांभालेकामेश्वरींन्यसेत् ॥२९॥ दीर्घ
खड्गीशरांताढ्यशांतिबिंदुसमन्विताम् ॥ चवर्गतद्बीजयुतांभ्रूमध्येमोहिनींन्यसेत् ॥ ३० ॥ अर्घी
शोवायुमांसस्थोबिंद्वाढ्यस्तत्तुरीयकम् ॥ टवर्गबीजपूर्वांतुविमलांविन्यसेद्गले ॥ ३१ ॥ शूलिवैकुंठरे
फस्थंवामनेत्रसबिंदुतत् ॥ तवर्गबीजसंयुक्तांविन्यसेदरुणांहृदि ॥ ३२ ॥

वायुमांसस्थः ॥ यलौस्थितौयस्मिन् ॥ बिंदुयुतस्तत्तुरीयंचतुर्थंवाग्देवताबीजं ॥ तेनय्लूं ॥ टवर्गस्तद्बीजंचपूर्वंयस्या स्तांविमलांकंठेन्यसेत् ॥ यथा—टंठंडंढंणंय्लूं विमलावाग्देवतायैनमःकंठे ॥ ३१ ॥ शूलीति ॥ वामनेत्रमीं ॥ कीदृ शं ॥ शूलीजः—वैकुंठोमः—रेफस्तेस्थितायत्रतत् सबिंदुच ॥ ईदृशंतद्बीजं ॥ तेनज्म्रीं ॥ तवर्गबीजाभ्यांयुतामरुणां हृदिन्यसेत् ॥ यथा—तंथंदंधंनंज्म्रींअरुणावाग्देवतायैनमोहृदि ॥ ३२ ॥

वामेति ॥ वियत्हः ॥ हंसःसः ॥ मांसलः ॥ वालोवः ॥ अनिलोयः ॥ इंदुर्बिंदुः ॥ एतैर्युक्तोवामकर्णऊकारः ॥ तेनह्रूस्ल्व्यूं ॥ पवर्गएतद्बीजंचपूर्वंयस्यास्तांजयिनीनाभौन्यसेत् ॥ यथा-पंफंबंभंमंह्रूस्ल्व्यूंजयिनीवाग्देवतायैनमो नाभौ ॥ ३३ ॥ पाशीति ॥ दीपिकाऊकारः कीदृशी ॥ पाशीझः ॥ तंद्रीमः ॥ रेफः ॥ वायुर्यः ॥ तैःसंयुताइंदुयुक् ॥ तेन झ्म्र्यूं ॥ यवर्गोबीजंचाद्यंयस्यास्तांसर्वेश्वरींमूलाधारेन्यसेत् ॥ यथा-यंरंलंवंझ्म्र्यूं सर्वेश्वरीवाग्देवतायैनमो

वामकर्णोवियद्धंसमांसवालानिलेंदुयुक् ॥ पवर्गतद्बीजपूर्वांजयिनींनाभितोन्यसेत् ॥ ३३ ॥ पाशीतंद्री
रेफवायुसंयुतादीपिकेंदुयुक् ॥ यवर्गबीजाद्यांमूलाधारेसर्वेश्वरींन्यसेत् ॥ ३४ ॥ संवर्तकमहाकालरे
फस्थाशांतिरिंदुयुक् ॥ कौलिनीशादिबीजाद्यांन्यसेत्पादांतमूर्द्धतः ॥ ३५ ॥ वाग्देवतायैहादांतनामां
तेप्रोच्चरेत्पदम् ॥ उक्तोवाग्देवतान्यासःसृष्टिन्यासमथाचरेत् ॥ ३६ ॥

मूलाधारे ॥ ३४ ॥ संवर्तकेति ॥ संवर्तकःक्षः ॥ महाकालोमः ॥ रेफः ॥ एतैर्युताबिंदुयुताचशांतिःई ॥ तेनक्ष्म्रीं शादयोबीजंचाद्यंयस्यास्तांकौलिनीमूर्वादिपादांतंन्यसेत् ॥ शंषंसंहंळंक्षंक्ष्म्रीं कौलिनीवाग्देवतायैनमऊर्वादिपादांतम् ॥ ३५ ॥ वागिति ॥ हादंनमः ॥ वाग्देवतायैनमइतिपदं नामांते वशिन्यादिनामांते प्रोच्चरेत् इति तत्र योगेषुलिखितम् ॥ ३६ ॥

सृष्टिन्यासमाह ॥ ब्रह्मरंध्रइति ॥ ब्रह्मरंध्रादिष्वेकैकवर्णंन्यसेत् ॥ आद्यंब्रह्मरंध्रे ॥ द्वितीयंललाटे ॥ तृतीयंदृशोः ॥ चतुर्थंकर्णयोः ॥ पंचमंनसोः ॥ षष्ठंगंडयोः ॥ सप्तमंदंतेषु ॥ अष्टममोष्ठयोः ॥ नवमंजिह्वायाम् ॥ दशमंमुखमध्ये ॥ एकादशंपृष्ठे ॥ द्वादशंसर्वांगे ॥ त्रयोदशंहृदि ॥ चतुर्दशंस्तनयोः ॥ पंचदशं कुक्षौ ॥ षोडशंलिंगे ॥ ३७ ॥

ब्रह्मरंध्रेललाटेचनेत्रयोःकर्णयोर्नसोः ॥ गंडदंतोष्ठजिह्वासुमुखकूपेचपृष्ठतः॥३७॥ सर्वाङ्गेहृदयेन्यस्येत्स्तनकुक्षिध्वजेषुच ॥ एकैकार्णमथोमूर्ध्निसर्वेणव्यापकंचरेत् ॥३८॥ सृष्टिन्यासंविधायैवंस्थितिन्यासमथाचरेत् ॥ करांगुष्ठाद्यंगुलीषुब्रह्मरंध्रेमुखेहृदि ॥ ३९ ॥ नाभ्यादिपादपर्य्यंतंनाभ्यंतंकंठदेशतः॥ ब्रह्मरंध्राच्चकंठांतंपादांगुलिषुपंचवा ॥ ४० ॥ अथपंचविधंन्यासंवक्ष्येसर्वेष्टसिद्धिदम्॥मंत्रंपंचावृत्तिरूपंयेनतद्रूपतांव्रजेत् ॥ ४१॥ मूर्ध्निवक्त्रेदृशोःश्रुत्योर्नसोर्गंडोष्ठयोरपि॥वक्त्रमध्येदंतपंक्त्योर्वदनेविन्यसेत्क्रमात् ॥ ४२ ॥

॥ ३८ ॥ स्थितिन्यासमाह ॥ करेति ॥ पंचकरांगुलीषु ॥ षष्ठंब्रह्मरंध्रे ॥ सप्तमंमुखे ॥ अष्टमंहृदि ॥ ३९ ॥ नवमंनाभ्यादि पादांतम् ॥ दशमंकंठादिनाभ्यंतम् ॥ एकादशंब्रह्मरंध्रात्कंठांतं ॥ पंचपादांगुलीषु ॥ ४० ॥ पंचावृत्तिन्यासमाह ॥ मूर्ध्नीति ॥ दृशोर्द्वे ॥ श्रुत्योर्द्वे ॥ नसोर्द्वे ॥ गंडयोर्द्वे ॥ ओष्ठयोर्द्वे ॥ दंतयोर्द्वे शेषेष्वेकैकम् ॥ ४१ ॥ ४२ ॥

द्वितीयमाह ॥ शिखेति ॥ शिखाशिरोभालभ्रूनासामुखेषुषट् ॥ ४३ ॥ दक्षकरसंध्यग्रेषुपंच ॥ एवंवामेपंच ॥ तृतीयमाह ॥ शिरोभालनेत्रास्याजिह्वासुषट् ॥ ४४ ॥ दक्षपादसंध्यग्रेषुपंच ॥ वामपादेपंच॥चतुर्थमाह ॥ स्वरेति॥

एकैकवर्णंविद्यायाइत्येकोन्यासईरितः ॥ शिखाशिरोललाटभ्रूघ्राणवक्त्रेषडर्णकान् ॥ ४३ ॥ करसंधिषुसाग्रेषुदशेतिस्याद्द्वितीयकः ॥ शिरोललाटनेत्रास्याजिह्वायांषण्न्यसेत्पुनः ॥ ४४ ॥ पादसंधिषुसाग्रेषुदशेतिस्यात्तृतीयकः ॥ स्वरस्थानेचतुर्थस्तुललाटेचगलेहृदि ॥४५॥ नाभौचमूलाधारेपिब्रह्मरंध्रेमुखेगुदे ॥ आधारेहृद्ब्रह्मरंध्रेकरयोःपादयोर्हृदि॥ ४६ ॥ एवंपंचविधंकृत्वाविद्याप्रणवसंपुटाम् ॥ सर्वस्मिन्व्यापयेदंगेनमोंतांतांहृदिन्यसेत् ॥ ४७ ॥

मातृकान्यासेस्वरस्थानान्युक्तानि ॥ तेषुषोडशबीजानिन्यसेत ॥ पंचममाह ॥ ललाटइति ॥ ४५ ॥ करयोर्द्वे ॥ पादयोर्द्वे ॥ अन्यत्रैकैकम् ॥ ४६ ॥ प्रणवपुटितांविद्यांसर्वांगेन्यसेत ॥ नमोंतांहृदिच ॥ ४७ ॥

१ स्वरस्थानेमंत्रवर्णान्न्यसेदित्यर्थः ।

षोढान्यासादयोविस्तरभयान्नोक्तास्तेउच्यंते ॥ गणेशग्रहनक्षत्रयोगिनीराशिपीठलक्षणाः षोढान्यासाः॥गणेशमा
तृकामंत्रस्यदक्षिणामूर्तिर्ऋषिःगायत्रीछंदःश्रीमातृकासुंदरीदेवताममोपास्यश्रीविद्यांगत्वेनषोढान्यासेविनियोगः ॥
अंकं ५ आंऐंहृत्॥ इंचं५ ईंक्लींशिरः ॥उंटं ५ ऊंसौःशिखा ॥ एंतं ५ ऐंसौःकवचम् ॥ ओं पं ५ औंक्लींनेत्रम् ॥
अंयं १० अःऐंअस्त्रम् ॥ ध्यानम्–उद्यत्सूर्यसहस्राभांपीनोन्नतपयोधराम् ॥ रक्तमाल्यांबरालेपरक्तभूषणभूषिताम् ॥
पाशांकुशधनुर्बाणभास्वत्पाणिचतुष्टयाम् ॥ रक्तनेत्रत्रयांस्वर्णमुकुटोद्भासिचंद्रिकाम् ॥ एवंध्यात्वान्यसेद्बीजपूर्वंगंअं
विघ्नेशह्रीभ्यांनमः ॥ गंआंविघ्नराजश्रीभ्यांनमःइत्यादिमातृकास्थलेन्यसेत्॥गणेशाःशक्तियुक्ताएकावंशतरंगेमूले
ग्रंथकारेणैवोक्ताः ॥ इतिगणेशमातृकान्यासः ॥(१)॥ अथग्रहमातृकामंत्रस्यदक्षिणामूर्तिर्ऋषिरित्यादिपूर्ववत् षडं

षोढान्यासादयोन्यासाःकार्य्याःसौभाग्यवांछया ॥नोच्यंतेविस्तरभयान्नैवचावश्यकाश्चते॥४८॥

गंच ॥ ग्रहरूपिणीसुंदरीदेवता ।ध्यानम् ॥ रक्तंश्वेतंतथारक्तंश्यामंपीतंचपांडुरम् ॥ धूम्रकृष्णंचधूम्रंचधूमधूम्रंविचिन्त
येत ॥ रविमुख्यान्कामरूपान्सर्वाभरणभूषितान्॥ वामोरुन्यस्तहस्तांश्चदक्षिणेनवरप्रदान् ॥एवंध्यात्वामातृकापूर्वा
न्ग्रहान्न्यसेत् ॥ अं १६ सूर्यायरेणुकांबायैनमःहृदि ॥ १ ॥ यं ४ चंद्रायामृतांबायैनमःभ्रूमध्ये ॥२॥ कं ५मंगलाय
धामांबायैनमोनेत्रयोः ॥ ३ ॥ चं ५ बुधायज्ञानरूपांबायैनमोहृदि ॥४ ॥ टं ५ बृहस्पतयेयशस्विन्यंबायैनमोहृदयो
परिभागे ॥ ५ ॥ तं ५ शुक्रायशांकर्यंबायैनमःकंठे ॥ ६ ॥ पं ५ शनैश्चरायशक्त्यंबायैनमोनाभौ ॥ ७ ॥ शं ४ राह
वेकृष्णांबायैनमोमुखे ॥ ८ ॥ ळंक्षंकेतवेधूम्रांबायैनमोगुदे ॥ ९ ॥ इतिग्रहमातृकान्यासः ॥

( २ ) नक्षत्रमातृकामन्त्रस्यदक्षिणामूर्तिर्ऋषिर्गायत्रीछंदः। नक्षत्ररूपिणीसुंदरीदेवता। श्रीविद्यांगत्वेनन्यासेविनि
योगः॥ ध्यानम्॥ ज्वलत्कालाग्निसंकाशाःसर्वाभरणभूषिताः॥ नतिपाण्योऽश्विनीमुख्यावरदाभयपाणयः॥ एवं
ध्यात्वामातृकापूर्वंनक्षत्राणिन्यसेत्॥ यथा-अंआंअश्विन्यैनमोललाटे ॥ १॥ इंभरण्यैनमोदक्षनेत्रे॥ २॥ ईंउं
ऊंकृत्तिकायैनमोवामनेत्रे ॥ ३॥ ऋंॠंलृंलॄंरोहिण्यैनमोदक्षनेत्रे ॥ ४॥ एंमृगशिरसेनमोवामकर्णे॥ ५॥ ऐंआ
र्द्रायैनमोदक्षनासि ॥ ६॥ ॐ औंपुनर्वसवेनमोवामनासि॥ ७॥ कंपुष्यायनमः कण्ठे॥ ८॥ खंगंआश्लेषायैनमो
दक्षस्कन्धे॥ ९॥ घंङंमघायैनमोवामस्कन्धे॥ १०॥ चंपूर्वाफाल्गुन्यैनमोदक्षकूर्परे ॥ ११॥ छंजंउत्तराफाल्गुन्यै
नमोवामकूर्परे॥ १२॥ झंञंहस्तायनमोदक्षमणिबंधे॥ १३॥ टंठंचित्रायैनमोवाममणिबन्धे ॥ १४॥ डंस्वात्यैन
मोदक्षहस्ते॥ १५॥ ढंणंविशाखायैनमोहस्ते॥ १६॥ तंथंदंअनुराधायैनमोनाभौ॥ १७॥ धंज्येष्ठायैनमो
दक्षकटौ॥ १८॥ नंपंफंमूलायनमोवामकटौ॥ १९॥ बंपूर्वाषाढायैनमोदक्षोरौ॥ २०॥ भंउत्तराषाढायैनमोवा
मोरौ॥ २१॥ मंश्रवणायनमोदक्षजानुनि॥ २२॥ यंरंधनिष्ठायैनमोवामजानुनि॥ २३॥ लंशतभिषायैनमोदक्ष
जंघायाम्॥ २४॥ वंशंपूर्वाभाद्रपदायैनमोवामजंघायाम्॥ २५॥ षंसंहंउत्तराभाद्रपदायैनमोदक्षपादे ॥ २६॥
ळंक्षंअंअःरेवत्यैनमोवामपादे ॥ २७॥ इतिनक्षत्रमातृका०॥ ( ३ )॥ सर्वेषुन्यासेषुप्रादौमायाश्रीबीजयोगे॥
न्यासान्सर्वान्प्रकुर्वीतमायाश्रीबीजपूर्वकानित्युक्तत्वात्॥ योगिनीन्यासस्यमुनिच्छंदसीपूर्वोक्ते॥ योगिनीरूपासुं
दरीदेवताश्रीविद्यांगत्वेनन्यासेविनियोगः॥ ध्यानम्॥ सिताासिताारुणाबभ्रूचित्रापीनाश्चचिंतयेत्॥ चतुर्भुजाःसमे

वेक्षः सर्वाभरणभूषिताः ॥ एवंध्यात्वान्यसेत् ॥ ह्रींश्रींडांडींडंमलवरयूंपूंडाकिन्यैनमः ॥ अं १६ ॥ ममत्वचंरक्ष २ वामात्मनेनमः कंठदेशेविशुद्धे ॥ १ ॥ ह्रींश्रींरांरींरंमलवरयूंपूंराकिन्यैनमः कं १२ ॥ ममरक्तंरक्ष २ असृगात्मनेनमः हृद्यनाहते ॥ २ ॥ लांलींलंमलवरयूंपूंलाकिन्यैनमः डं १० ममर्मासंरक्ष २ मांसात्मनेनमः नाभौमणिपूरे ॥ ३ ॥ कां कींकंमलवरयूंपूंकाकिन्यैनमः वं ६ ॥ ममर्मेदोरक्ष २ मेदआत्मनेनमः लिंगमूलेस्वाधिष्ठाने ॥ ४ ॥ शांशींशंमलवरयूंपूंशाकिन्यैनमः वं ४ ममास्थिरक्ष २ अस्थ्यात्मनेनमः गुदेमूलाधारे ॥ ५ ॥ हांहींहंमलवरयूंपूंहाकिन्यैनमः हंक्षंमम मज्जांरक्ष २ मज्जात्मनेनमोभ्रूमध्यआज्ञाचक्रे ॥ ६ ॥ यांयींमलवरयूंपूंयाकिन्यैनमअंममशुक्रंरक्ष २ शुक्रात्मने नमः ब्रह्मरंध्रे ॥ ७ ॥ इतियोगिनीमातृकाः (४) ॥ राशिमातृकामंत्रस्यमुनिच्छंदसीपूर्वोक्ते ॥ राशिरूपा सुंदरीदेवता । श्रीविद्यांगत्वेनन्यासेविनियोगः ॥ ध्यानम् ॥ रक्तश्वेतहरिद्वर्णपांडुचित्रासितान्स्मरेत् ॥ पिशंग पिंगलौबभ्रुकर्बुराशितधूम्रभान् ॥ एवंध्यात्वान्यसेत् ॥ अंआंइंईंमेषायनमः दक्षपादगुल्फे ॥ १ ॥ उंऊंऋंवृषायनमः दक्षजानुनि ॥ २ ॥ ॠंऌंॡंमिथुनायनमः दक्षवृषणे ॥ ३ ॥ एंऐंकर्कायनमः दक्षकुक्षौ ॥ ४ ॥ ओंऔंसिंहाय० दक्षस्कंधे ॥ ५ ॥ अंअः शंषंसंहंळंकन्यायैनमः दक्षशिरोभागे ॥ ६ ॥ कंखंगंघंङं तुलायैनमोवामशिरोभागे ॥ ७ ॥ चंछंजंझंञंवृश्चिकायनमः वामस्कंधे ॥ ८ ॥ टंठंडंढंणंधनुषेनमः वामकुक्षौ ॥ ९ ॥ तंथंदंधंनंमकरायनमः वामवृषणे ॥ १० ॥ पंफंबंभंमंकुंभायनमः वामजानुनि ॥ ११ ॥ यंरंलंवंक्षं मीनायनमोवामगुल्फे ॥ १२ ॥ इतिराशिमातृकाः ॥ (५) ॥ पीठमातृकामंत्रस्यमुनिच्छंदांसिपूर्ववत् ॥ पीठरूपिणीसुंदरी देवता । श्रीविद्यांगत्वेनन्यासेविनियोगः ॥ ध्यानम् ॥ सितासितारुणश्यामहरित्पीतान्यनुक्रमात् ॥ पुनरे

तत्क्रमाद्देवीपंचाशत्स्थानसंचये ॥ पीठानीहस्मरेद्विद्वान्सर्वकामार्थसिद्धये ॥ एवंध्यात्वामातृकास्थानषुंमातृकावर्णपूर्वाणिपीठानिन्यसेत् ॥ तानियथा-ह्रींश्रींअंकामरूपपीठायनमः ॥ १ ॥ आंवाराणसीपीठायनमः ॥२ ॥ इंनेपालपीठायनमः ॥ ३ ॥ईंपौंड्रवर्धनपी० ॥ ४ ॥ उंकाश्मीरपी० ॥ ५ ॥ ऊंकान्यकुब्जपी० ॥ ६ ॥ ऋंपूर्णगिरिपी० ॥ ७ ॥ ॠंअर्बुदाचलपी० ॥ ८ ॥ ऌंआम्रातकेश्वरपी० ॥ ९ ॥ ॡंएकाम्रपीठा० ॥ १० ॥ एंत्रिस्रोतःपीठा० ॥ ११ ॥ ऐंकामकोटिपीठा० ॥ १२ ॥ ओंकैलासपी० ॥ १३ ॥ औंभृगुपी० ॥ १४ ॥ अंकेदारपी० ॥ १५॥ अः चंद्रपुरपीठा० ॥ १६ ॥ कंश्रीपी० ॥ १७ ॥ खंओंकारपी० ॥ १८ ॥ गंजालंधरपी० ॥ १९ ॥ घंमालवपी० ॥ २० ॥ ङंकुलांतपी० ॥ २१ ॥ चंदेवीकोट्टकपी० ॥ २२ ॥ छंगोकर्णपी० ॥ २३ ॥ जंमारुतेश्वरपी० ॥ २४ ॥ झंअट्टहासपी० ॥ २५ ॥ ञंविरजपी० ॥ २६ ॥ टंराजगृहपी० ॥ २७ ॥ ठंमहापथपी० ॥ २८ ॥ डंकोल्लागिरिपी० ॥ २९ ॥ ढंएलापुरपी० ॥ ३० ॥ णंकालेश्वरपी० ॥ ३१ ॥ तंजयंतीपी० ॥ ३२ ॥ थंउज्जयिनीपी० ॥ ३३ ॥ दंचरित्रपी० ॥ ३४ ॥ धंक्षीरिकापी० ॥ ३५ ॥ नंहस्तिनापुरपीठा० ॥ ३६ ॥ पंउड्डीशपी० ॥ ३७ ॥ फंप्रयागपी० ॥ ३८ ॥ बंषष्ठीशपी० ॥ ३९ ॥ भंमायापुरीपी० ॥ ४० ॥ मंमलयपी० ॥ ४१ ॥ यंश्रीशैलपी० ॥ ४२ ॥ रंमेरुपी० ॥ ४३ ॥ लंगिरिपी० ॥ ४४ ॥ वंमाहेंद्रपी० ॥ ४५ ॥ शंवामनपी० ॥ ४६ ॥ षंहिरण्यपुरपी० ॥ ४७ ॥ संमहालक्ष्मीपी० ॥ ४८ ॥ हंउड्डियाणपीठाय० ॥ ४९ ॥ ळंछायापी० ॥ ५० ॥ क्षंक्षत्रपुरपी० ॥ ५१ ॥ इति पीठमातृकापीठन्यासः ( ६ ) ॥ इतिषोढान्यासः ( ६ ) ॥ आदिशब्दात्काममातृकादयोज्ञेयाः ॥ ४८ ॥

एवंन्यासान्कृत्वामुद्राःप्रदर्शयेदित्याह ॥ मुद्राइति ॥ नवानांमुद्राणांमध्येसंक्षोभद्रावणाकर्षखेचरीबीजाख्यानांपं चानांलक्षणमुक्तम् ॥ चतसृणामुच्यते ॥ तत्रवश्यमुद्रालक्षणं यथा—पुटाकारौकरौकृत्वातर्जन्यावंकुशाकृती ॥ परि वर्त्यक्रमेणैवमध्यमेतदधोगते ॥ क्रमेणदेवितेनैवकनिष्ठानामिकादयः ॥ संयोज्यानिबिडाःसर्वाअंगुष्ठावग्रदेशतः॥ मुद्रेयंपरमेशानिसर्ववश्यकरीमतेति ॥ उन्मादमुद्रालक्षणंयथा—संमुखौतुकरौकृत्वामध्यमामध्यमेतुजे ॥ अनामि

मुद्राःप्रदर्शयेत्कृत्वाषडङ्गंप्राणसंयमम् ॥ संक्षोभद्रावणाकर्षवश्योन्मादमहांकुशाः ॥ ४९ ॥
खेचरीबीजयोन्याख्यामुद्रादेवीप्रियानव ॥ ततोध्यायेद्भगवतींश्रीमत्त्रिपुरसुंदरीम् ॥ ५० ॥

केतुसरलेतदधस्तर्जनीद्वयम् ॥ दंडाकारौततोंगुष्ठौमध्यमानखदेशगौ ॥ मुद्रैषोन्मादिनीनामक्लेदिनीसर्वयोषिता मिति ॥ महांकुशमुद्रालक्षणंयथा—अस्यास्त्वनामिकायुग्ममधःकृत्वांकुशाकृति ॥ तर्जन्यावपितेनैवक्रमेणाविनि योजयेत् ॥ इत्थंमहांकुशामुद्रासर्वकामार्थसाधिनीति ॥ योनिशब्देनात्रमहायोनिमुद्रा ॥ तल्लक्षणंयथा—मध्यमे कुटिलेकृत्वातर्जन्युपरिसांस्थिते ॥ अनामिकामध्यगतेतथैवाहिकानिष्ठिके ॥ सर्वाएकत्रसंयोज्याअंगुष्ठपरिपी डिताः ॥ एषातुप्रथमामुद्रामहायोन्यभिधामतेति ॥ मुद्राएवंप्रदर्श्यध्यायेत् ॥ ४९ ॥ ५० ॥

कनिष्ठानामिकादयइतिकनिष्ठानामिकापदंदक्षहस्तकनिष्ठानामिकापरम् । आदिपदेनवामहस्तकनिष्ठानामिकापरिग्रहः । २ अंगुष्ठावग्रदेशतइति । अंकुशा कारयोस्तयोस्तर्जन्योरग्रदेशेंगुष्ठौयोजयेदितिशेषः । ३ अनुजेकनिष्ठे। दक्षिणहस्तकनिष्ठांवामहस्तमध्यमयाबद्ध्वावामहस्तकनिष्ठांदक्षिणहस्तमध्यमयाबद्ध्वातयोर्न खदेशयोरंगुष्ठौनिःक्षिपेदित्यर्थः ।

ध्यानमाह ॥ बालेति ॥ नानालंकृतयोविविधाभरणानितैराजमानंशोभमानंवपुर्यस्याःताम् ॥ बालउडुराट्चंद्रः शेखरेयस्यास्ताम् ॥ सृणिमंकुशं ॥ सुमशरंपुष्पबाणं ॥ बाणांकुशौदक्षयोः ॥ इक्षुधनुःपाशौवामयोः ॥ श्रीचक्रं वक्ष्यमाणं ॥ तत्रस्थितांसुंदरींत्रिपुरसुंदरींध्यायेत् ॥ ५१ ॥ हयमारःकरवीरः ॥ ५२ ॥ श्रीचक्रमाह ॥ श्रीचक्र

बालार्कायुततेजसंत्रिनयनांरक्तांबरोल्लासिनींनानालंकृतिराजमानवपुषंबालोडुराट्शेखराम् ॥ हस्तै
रिक्षुधनुःसृणिंसुमशरंपाशंमुदाबिभ्रतींश्रीचक्रस्थितसुंदरींत्रिजगतामाधारभूतांस्मरेत् ॥ ५१ ॥ लक्ष
मेकंजपेन्मंत्रंदशांशंहयमारजैः ॥ पुष्पैस्त्रिमधुरोपेतैर्जुहुयात्पूजितेनले ॥ ५२ ॥ श्रीचक्रस्योद्धृतिंव
क्ष्येतत्रपूजनसिद्धये॥बिंदुगर्भंत्रिकोणंतुकृत्वाचाष्टारमुद्धरेत् ॥ ५३ ॥ दशारद्वयमन्वस्रापारषोडश
कोणकम् ॥ त्रिरेखात्मकभूगेहवेष्टितंयंत्रमालिखेत् ॥५४॥तत्रपूजांप्रवक्ष्यामिपात्रस्थापनपूर्वकम्॥
वहन्नाडीस्थहस्तेनस्वाग्रतोयंत्रमालिखेत् ॥५५॥ त्रिकोणमध्यषट्कोणवृत्तभूमंडलात्मकम् ॥ बाल
यापूजयेन्मध्यंतद्बीजैःकोणकत्रयम् ॥५६॥ अनुलोमविलोमैस्तैःषट्कोणान्पूजयेत्ततः ॥ अस्त्रप्रक्षा
लितंमध्येपात्राधारंनिधापयेत् ॥५७॥

स्येति ॥ ५३ ॥ मन्वस्रंचतुर्दशारम् ॥ ५४ ॥ पात्रस्थापनमाह ॥ वहदिति ॥ वहंतीयानाडीदक्षावामावातद्धस्तेन स्वाग्रेत्रिकोणादियंत्रमालिख्य तत्रास्त्रक्षालितंपात्राधारंस्थापयेत् ॥ ५५ ॥ ५६ ॥ ५७ ॥

एकत्रिंशदक्षरमंत्रेणाधारंपूजयेत् ॥ तमाह ॥ वह्निरिति ॥ वह्नीरेफः दीर्घत्रयेन्दुयुक्तः रांरींरूं ॥ रस्वरूपम् ॥ भांतोमः ॥ लवरस्वरूपम् ॥ अनिलोयः ॥ ५८ ॥ एतेवामकर्णेंदुसंयुताःऊबिंदुयुताः वायुर्यः कलात्माडेसमान्वितश्च तुर्थ्यंतः ॥ वाग्बीजंऐं ॥ पवनोयः ॥ स्वरूपमन्यत् ॥ यथा—ॐरांरींरूंम्ल्व्र्यूंरंअग्निमंडलायधर्मप्रददशकलात्मनेऐं कलशाधारायनमः ॥ ५९ ॥ ६० ॥ प्रादक्षिण्यादिति ॥ तदुपरिपात्राधारोपरिआग्नेयीर्दशकलाअर्चयेत् ॥ ताए

एकत्रिंशार्णमनुनातमाधारंसमर्चयेत् ॥ वह्निर्दीर्घत्रयेंद्वाढ्योरभांतलवरानिलाः ॥ ५८ ॥ वामकर्णें
दुसंयुक्तारःसेंदुश्चाग्निमंडला ॥ वायुर्धर्मप्रददशकलात्माडेसमन्वितः ॥५९॥ वाग्बीजंकलशाधारा
पवनोनमसान्वितः॥ तारादिरीरितोमंत्रोभाजनाधारपूजने ॥६० ॥ प्रादक्षिण्याद्दशाग्नेयीस्तदुपर्य्य
र्चयेत्कलाः ॥ धूम्रार्चिरूष्माज्वलिनीज्वालिनीविस्फुलिंगिनी॥६१॥ सुश्रीःसुरूपाकपिलाहव्य
कव्यादिकावहा ॥ सबिंदुयादिवर्णाद्यादशाग्नेरीरिताःकलाः ॥ ६२ ॥ कलाश्रीपादुकांपूजयामीति
पदमुच्चरेत् ॥ नाम्नामंतेततस्तासांप्राणस्थापनमाचरेत् ॥ ६३ ॥

वाह ॥ धूम्रार्चिरिति ॥ ६१ ॥ हव्यकव्यादिकावहा हव्यवहाकव्यवहाच ॥ कीदृश्यस्ताः ॥ सबिंदवोयादिदश वर्णाआद्यायासाम् ॥ ६२ ॥ कलेति ॥ नाम्नांधूम्रार्चिरित्यादिनाम्नामंतेकलेत्यादिपदमुच्चरेत् ॥ यंधूम्रार्चिःकलाश्री पादुकांपूजयामि-रंऊष्माकलाश्रीपादुकांपूजयामीत्यादिप्रयोगः ॥ ६३ ॥

स्वर्णादिनिर्मितंकलशम् अस्त्रायफडितिप्रक्षाल्यतत्राधारेन्यसेत् ॥ तंत्रिंशद्वर्णमंत्रेणार्चयेत् ॥ तमुद्धरति ॥ विय दिति ॥ वियतहकारंदीर्घत्रयाढंच हांहींहूं ॥ हमस्वरूपम् ॥ मांसलः ॥ वरस्वरूपम् ॥ अनिलोयः ॥ ६४ ॥ अर्घीशोबिन्दुयुक्तःयूं ॥ सेंदुखंसबिंदुहम् ॥ वायुर्यः ॥ ६५ ॥ मन्मथःक्लीं ॥ स्पष्टमन्यत् ॥ यथा—ॐ हांहींहूंहमलवर

स्वर्णादिपात्रमस्त्रेणक्षालितंतत्रविन्यसेत् ॥वियद्दीर्घत्रयैर्द्धाढ्यंहममांसंवरानिलः ॥ ६४ ॥ अर्घी
शबिंदुसंयुक्तःसेंदुखंसूर्य्यमंडला ॥ वायुर्वसुप्रदांतेस्याद्द्वादशांतेकलात्मने ॥ ६५ ॥ मन्मथः
कलशायेतिनमोंतःप्रणवादिकः ॥ त्रिंशद्वर्णात्मकोमंत्रःकलशस्यार्चनेमतः ॥ ६६ ॥ कलाद्दा
दशसूर्य्यस्यकलशोपरिपूजयेत् ॥ तपिनीतापिनीधूम्रामरीचिज्वालिनीरुचिः ॥६७॥ सुषुम्नाभोग
दाविश्वाबोधिनीधारिणीक्षमा ॥ अनुलोमविलोमाभ्यांकादिभावर्णयुग्युता ॥६८ ॥

यूंहंसूर्यमंडलायवसुप्रदद्वादशकलात्मनेक्लींकलशायनमइति ॥ ६६ ॥ सूर्यकलाआह ॥ तपिनीति ॥ ६७ ॥ कीदृ श्यस्ताः ॥ अनुलोमेति ॥ क्रमोत्क्रमाभ्यां येकादयोभादयश्चवर्णाः तेषांयुजोयुग्मानितैर्युताः ॥ कंभंतपिन्यैनमः खंबंतापिन्यैनमः—गंफंधूम्रायैनमः इत्यादि ॥ ६८ ॥

पूर्ववत् ॥ तपिनीकलाश्रीपादुकांपूजयामीतिप्रयोगः ॥ ६९ ॥ दंताक्षरेणद्वात्रिंशदक्षरेण ॥ तमेवोद्धरति ॥ भृगु
रिति ॥ भृगुःसः दीर्घत्रययुतः सांसींसूं ॥ अंबुवः ॥ अग्निरः ॥ वायुर्यः ॥ एते ॥ ७० ॥ अर्घीशेंदुयुताःऊवं
दुयुताः ॥ ङेयुतश्चतुर्थ्यंतः ॥ ७१ ॥ भृगुःसःमनुरौ ॥ ङेयुतंकलशामृतं कलशामृताय ॥ तारादिहृदयांतःप्रण

पूर्ववत्ताःसमापूज्याःकलशेपूरयेज्जलम् ॥ उच्चरन्मातृकावर्णान्मूलविद्यांचमंत्रवित् ॥६९॥दंताक्षरे
णमनुनाकलशोदकमर्चयेत् ॥ भृदीर्घगुत्रयैर्द्धाब्यःसमलांब्वग्निवायवः ॥ ७० ॥ अर्घीशेंदुयुताःसे
दुहंसांतेसोममंडला ॥ यकामप्रदषोडांतेशकलात्मातुङेयुतः ॥७१॥ भृगुर्मनुर्विसर्गाढ्योङेयुतंक
लशामृतम् ॥ तारादिहृदयांतोयंमनुःपानीयपूजने ॥ ७२ ॥ चांद्रीःकलाःस्वराद्यास्तुयजेत्षोडशत
ज्जले ॥ अमृतामानदापूषातुष्टिपुष्टिरतिर्धृतिः॥७३॥ शशिनीचंद्रिकाकांतिर्ज्योत्स्नाश्रीःप्रीतिरंगदा॥
पूर्णापूर्णामृताचेतिपूजनंपूर्ववन्मतम् ॥७४ ॥

वादिनमोंतः ॥ ॐसांसींसूंमूलंयूंसंसोममंडलायकामप्रदषोडशकलात्मनेसौः कलशामृतायनमः ( ३२ ) मंत्रो
यंजलार्चने ॥ ७२ ॥ षोडशस्वराद्याश्चांद्रीः कलास्तज्जलेर्चयेत् ॥ ताआह ॥ अमृतेति ॥ ७३ ॥ ७४ ॥

भैरवमंत्रमाह ॥ हसेति ॥ हसक्षमलेतिस्वरूपम् ॥ पानीयंवः ॥ वह्नीरः ॥ ईरोयःअर्घीशऊबिन्दुश्च एतैर्युतम् ७५ बीजम् ॥ स्वरूपमन्यत् ॥ यथा—ह्स्क्ष्म्ल्व्र्यूँआनंदभैरवायवौषट्—दशार्णः॥ सुधादेवीमंत्रमाह ॥ हसयोरिति पूर्वोक्तबीजेहसयोर्वैपरीत्यं सह्क्ष्म्ल्व्र्यूँसुधादेव्यैवौषट्—मुन्यक्षरःसप्तार्णः ॥ मत्स्येति ॥ मत्स्यमुद्रालक्षणं यथा—वामोपरिष्टात्संस्थाप्यदक्षहस्तंप्रसारयेत् ॥ अंगुष्ठौयुतयोः पार्श्वैमत्स्यमुद्रेयमीरितेति ॥ अस्त्रकवचमुद्रेवक्ष्यते

भैरवंचसुधादेवींस्वमंत्राभ्यांयजेज्जले ॥ सहक्षमलपानीयवह्नीरार्घीशबिंदुमत् ॥ ७५ ॥ बीजमानं दभैरवांतेवायुवौषण्मनुर्मतः ॥ हसयोर्वैपरीत्येनबीजंपूर्वोदितंसुधा ॥ ७६ ॥ देव्यैवौषडनयोर्मंत्रौ दशमुन्यक्षरौक्रमात् ॥ ततोमत्स्यास्त्रकवचधेनुमुद्राःप्रदर्शयेत् ॥ ७७ ॥ संरोधिन्यासंनिरुध्यमुस लंचक्रसंज्ञकम् ॥ महामुद्रांयोनिमुद्रांकुर्यात्कुंभामृतेपुनः ॥ ७८ ॥

धेनुमुद्रोक्ता ॥ ७६ ॥ ७७ ॥ संरोधिनीवक्ष्यते ॥ मुसलमुद्रा यथा—मुष्टीकृत्वातुहस्ताभ्यांवामस्योपरिदक्षिणं तु कुर्यान्मुसलमुद्रेयंसर्वविघ्ननिवारिणीति ॥ चक्रमुद्रायथा—हस्तौतुसंमुखौकृत्वासलग्नौसुप्रसारितौ ॥ कनिष्ठांगुष्ठ कौलग्नौमुद्रैषाचक्रसंज्ञितेति ॥ महामुद्रावक्ष्यते ॥योनिमुद्रोक्ता ॥ ७८ ॥

॥ ७९ ॥ अर्घ्यमिति ॥ कादयःषोडशस्वराः ॥ कादयःषोडशतांताः ॥ थादयःषोडशसांताः ॥ तैरर्घ्यैस्त्रिकोणं संचिंत्य ॥ कीदृशम् ॥ हक्षाभ्यां मध्यं शोभितम् ॥ तत्र ऐं क्लीं सौरिति बालां संपूजयेत् ॥ ८० ॥ अष्टवर्णमाह ॥ तारइति

एवंकलशमास्थाप्यतस्यदक्षिणदेशतः ॥ शंखंचापिविशेषार्घ्यंस्थापयेत्पूर्ववत्क्रमात् ॥ ७९ ॥ अर्घ्यं त्रिकोणंसंचिंत्याऽकथाद्यैःषोडशाक्षरैः ॥ हक्षाभ्यांशोभितमध्येतत्रबालांप्रपूजयेत् ॥ ८० ॥ अष्टवर्णेनमंत्रेणदेवींज्योतिर्मयींयजेत् ॥ तारोमायेंदुयुग्व्योमभृगुसर्गीससद्यसः ॥ ८१ ॥ वराहोबिंदुयुक्स्वाहावसुवर्णःस्मृतोमनुः ॥ मूलंत्रिरभिजप्याथकुर्यान्मुद्राःसमीरिताः ॥ ८२ ॥ शंखार्घ्यस्थापनेकार्य्यऊहःकलशनामनि ॥ एवंपात्राणिसंस्थाप्यगृहीत्वार्घ्योदकंततः ॥ ८३ ॥ पूजावस्तूनिचात्मानंप्रोक्षेन्मूलमनुंस्मरन् ॥ विधायमानसींपूजांपीठपूजामथाचरेत् ॥ ८४ ॥

तारॐ ॥ मायाह्रीं ॥ इंदुयुग्व्योमहं ॥ सर्गीभृगुःसः ससद्यः औयुतःसः सौः ॥ ८१ ॥ बिंदुयुग्वराहोहः हं ॥ स्वाहास्वरूपम् ॥ समीरितामुद्रामत्स्याद्यानवमुद्राःकुर्यात् ॥ ८२ ॥ शंखस्थापनेऽर्घ्यपात्रस्थापनेचकलशनाम्निऊहःशंखपदमर्घ्यपदंचप्रयोज्यम् ॥ ८३ ॥ ८४ ॥

पीठपूजामाह ॥ मंडूकामिति ॥ कालवह्नीशंकालाग्निरुद्रम् ॥ ८५ ॥ स्वर्णाद्रिर्मेरुः ॥ ८६ ॥ घर्मवारणंछत्रम् ॥
धर्मादिकान्धर्मज्ञानवैराग्यैश्वर्याणि ॥ ८७ ॥ नञ्पूर्वानधर्मादीन् ॥ ८८ ॥ तारमात्रात्रयाद्यम् अंउंमंपूर्वंसूर्यसोमा
ग्निमंडलम् ॥ गुणान्सत्त्वरजस्तमांसि ॥ स्ववर्णाद्यान्संसत्त्वायनमइत्यादिरूपान् ॥ आत्मानमित्यादीन् मात्रात्रया

मंडूकंकालवह्नीशंतन्मूलप्रकृतिंयजेत् ॥ आधारशक्तिकूर्मंचशेषवाराहमेदिनीः ॥ ८५ ॥ सुधाब्धि
रत्नदीपंचस्वर्णाद्रिंनंदनंवनम् ॥ इष्वाकल्पतरून्मध्येविचित्रानंदभूमिकाम् ॥ ८६॥ श्रीरत्नमंदिरंरत्न
वेदिकांघर्मवारणम्॥ रत्नसिंहासनंतस्यपादान्धर्मादिकान्यजेत् ॥८७ ॥ गात्राणितांश्चनञ्पूर्वान्प
द्मंचानंदकंदकम् ॥ज्ञाननालंकर्णिकांचसूर्य्यसोमाग्निमंडलम् ॥ ८८ ॥ तारमात्रात्रयाद्यंतत्स्ववर्णा
द्यान्गुणान्यजेत् ॥ मात्रात्रयाद्यमात्मानमंतरात्मानमेवच ॥ ८९॥तृतीयंपरमात्मानंज्ञानात्मानंपरा
दिकम्॥मायातत्त्वंकलातत्त्वंविद्यातत्त्वंचपूजयेत् ॥ ९० ॥

दीन् अंआत्मने-उंअंतरात्मने ॥ ८९ ॥ मंपरमात्मने ॥ परादिकंमायाबीजाद्यम् ज्ञानात्मानम् ह्रीं ज्ञानात्मनेइति
मायातत्त्वादीनिस्ववर्णाद्यानि मांमायातत्त्वायनमइत्यादिरूपाणि ॥ ९० ॥

ब्रह्मविष्णुरुद्रेश्वरसदाशिवान्प्रेतशब्दांतान्बंब्रह्मप्रेतायनमइत्यादिरूपान् ॥ ११ ॥ १२ ॥ काष्ठासुदिक्षु ॥ पीठशक्ती
राह ॥ इच्छेति ॥ १३ ॥ १४ ॥ पीठमंत्रमुद्धरति ॥ वागिति ॥ वाक्ऐं ॥ केशवः अः ॥ १५ ॥ वालीयः दामो

परतत्त्वंस्ववर्णाद्यंब्रह्मविष्णुशिवांस्ततः ॥ प्रेतांतानीश्वरंतुर्यंपंचमंचसदाशिवम्॥ ११ ॥ सुधार्णवा
सनंपश्चाद्यजेत्प्रेतांबुजासनम् ॥ दिव्यासनंचक्रासनंसर्वमंत्रासनंततः ॥ १२ ॥ साध्यसिद्धासनंप्रा
र्च्यंचक्रराजंप्रपूजयेत् ॥ पीठशक्तिस्ततःकाष्ठास्विच्छाज्ञानंक्रियातथा ॥१३ ॥ कामिनीकामदाथि
न्यौरतिरेवंरतिप्रिया ॥ नंदामनोन्मनीचेतिवराभयकरास्तुता ॥ १४ ॥ ततआसनमंत्रेणपूजयेच्चक्र
नायकम् ॥ वाक्परायैकेशवोऽथपरायैचपरापरा ॥ १५ ॥ वालीदामोदरारूढस्तार्तीयंचसदाशिव॥
महाप्रेतंपठेत्पद्मासनायहृदयांतिकः ॥ १६ ॥ एकोनत्रिंशदर्णाढ्योमनुरासनसंज्ञकः ॥ एवंपीठंसम
भ्यर्च्यदद्यात्पुष्पांजलिंततः ॥ १७ ॥

दरारूढःऐंयुतःयै ॥ तार्तीयंहसौः ॥ हृदयांतिकःनमोंतः ॥स्वरूपमन्यत् ॥यथा-ऐंपरायैअपरायै परापरायै हसौः
सदाशिवमहाप्रेतपद्मासनायनमइति ॥ १६ ॥ १७ ॥

पुष्पांजलिमंत्रमाह ॥ प्रकटेति ॥ नेत्रयुक्मेषः नि ॥ ९८ ॥ ९९ ॥ मायारमादिकः ह्रींश्रीमादिकः ॥ यथा ह्रींश्रीं प्रकटगुप्तगुप्ततरसंप्रदायकुलनिगर्भरहस्यातिरहस्यपरापररहस्यसंज्ञकश्रीचक्रगतयोगिनीपादुकाभ्योनमइति धरा

प्रकटांतंगुप्तगुप्ततरांतेसंप्रदायच ॥ कुलांतेनेत्रयुङ्मेषोगर्भरेतिततःपठेत्॥ ९८ ॥रहस्यांतेतिरहस्याणां
परापररहस्यच ॥ संज्ञकःश्रीचक्रगतोयोगिनीपादुकापदम् ॥ ९९॥ भ्योनमोंतोधराबाणवर्णोमाया
रमादिकः ॥ मंत्रपुष्पांजलेर्दानेसर्वसिद्धिप्रदायकः ॥ १०० ॥ मुद्रांत्रिखण्डांकृत्वाथपुष्पाण्यादाय
चांजलौ ॥ ध्यात्वापूर्वोदितांदेवींमूलविद्यांसमुच्चरेत्॥१॥ चैतन्यंहृत्कमलतोनासिकारंध्रनिर्गतम्॥
ब्रह्मरंध्रस्यमार्गेणयोजितंकुसुमांजलौ ॥ २॥ महापद्मवनांतस्थेकारणानंदविग्रहे ॥ सर्वभूतहिते
मातरेह्येहिपरमेश्वरि ॥ ३ ॥ महःपूजाभचैतन्यसंयुक्तकुसुमांजलिम् ॥ श्रीचक्रराजेसंयोज्यततः
श्लोकद्वयंपठेत् ॥४॥ देवेशिभक्तिसुलभेसर्वावरणसंयुते ॥ यावत्त्वांपूजयिष्यामितावत्त्वंसुस्थिरा
भव ॥ ५ ॥ इदमावाहनंप्रोक्तंततःस्थापनमाचरेत् ॥भैरवीमंत्रमुच्चार्यश्रीमत्त्रिपुरसुंदरि ॥ १०६ ॥

बाणवर्णः एकपंचाशदक्षरः ॥ १०० ॥ त्रिखंडामुद्रोक्ता ॥ १०१ ॥ आवाहनमंत्रमाह ॥ चैतन्यमिति ॥ १०२ ॥
॥१०३ ॥ १०४ ॥ १०५ ॥ १०६ ॥

स्थापन्याद्यामुद्रावक्ष्यंते ॥ १०७ ॥ १०८ ॥ १०९ ॥ ११० ॥ १११ ॥ इतिमंत्रमहोदधिव्याख्यायांनौकायामेकाद
शस्तरंगः ॥ ११ ॥ श्रीविद्यायाआवरणार्चनंवक्तुंप्रतिजानीते ॥ श्रीविद्यायाइति॥ येनमनोरथाधिकमा

चक्रेस्मिन्कुरुसान्निध्यंनमोंतःस्थापनेमनुः॥ दर्शयेत्स्थापनींमुद्रांसन्निधिंसन्निरोधनम्॥ १०७॥संमु
खीकरणंतत्तन्मुद्राभिर्मंत्रविच्चरेत् ॥न्यसेत्षडंगंदेव्यंगेसकलीकरणंत्विदम्॥८॥अवगुंठामृतीकारपर
मीकरणानिच ॥तत्तन्मुद्राभिराराध्यमूलेनत्रिःप्रपूजयेत् ॥९॥ततःपाद्यादिकान्सम्यगुपचारान्प्रकल्प
येत् ॥ मूलमंत्रेणपुष्पांतान्पुनःसंतर्पयेत्त्रिधा ॥१०॥ पुष्पांजलिंविधायाथध्यात्वादेवींयथाविधि॥
अनुज्ञांप्रार्थयेन्मंत्रीपरिवारसमर्चने ॥१११॥ इति श्रीमन्महीधरविरचितेश्रीमंत्रमहोदधौश्रीविद्याक
थनंनामैकादशस्तरंगः॥११॥श्रीविद्यायाअथोवक्ष्येपरिवारप्रपूजनम्॥कृतेनयेनमंत्रज्ञोलभतेवांछिता
धिकम्॥१॥शुक्लपक्षेयजेन्नित्याःकामेश्वर्यादिषोडश॥कृष्णपक्षेविचित्राद्याःकामेश्वर्यवसानकाः॥२॥
षोडशींचयजेन्मध्येवक्ष्येतद्यजनक्रमम्॥एकैकंस्वरमुच्चार्यनित्यामंत्रंसमुच्चरेत् ॥ ३ ॥ कामेश्वर्या

प्नोति१शुक्लपक्षेकामेश्वर्यादिविचित्रांतांताबिंदुंपरितःकल्पितेत्रिकोणेप्रतिपार्श्वंवामावर्तेनपंचपंचसंपूज्यबिंदौषोडशीं
मूलेनपूजयेत्कृष्णपक्षेतुविचित्राद्याःकामेश्वर्यंताःस्वस्वमंत्रेणतथैवसंपूज्यमध्येषोडशींयजेत्२तत्रविधिमाहएकैकमिति

॥ एकैकंस्वरमुक्त्वावक्ष्यमाणमेकैकंनित्यामंत्रंचप्रोच्य नित्यानामांते अमुकनित्याश्रीपादुकांपूजयामी तिदक्षहस्तेन पुष्पचंदनाक्षतानितर्पयामीतिवामहस्तेनजलंचार्पयेत् ॥ ३ ॥ ४ ॥ अंभःजलंगोक्षी रंवा ॥ ५ ॥ जलेक्षीरेवाआर्द्रकंप्रास्यमितिकेचित् ॥ ६ ॥ नित्यामंत्रेषुकामेश्वरीमंत्रमाह ॥ बालेति ॥ बालऐं

दिनामांतेनित्याश्रीपादुकांपठेत्॥ पूजयामितर्पयामिहृदयंप्रोच्यपूजयेत् ॥४॥ बिंदुपरितआकल्प्य त्रिकोणेबिंदुतोंतिमम् ॥ दक्षहस्तेनपुष्पादिवामेनांभोविनिःक्षिपेत्॥५॥केचिदाहुरिहाचार्य्याआर्द्र केणजलंक्षिपेत् ॥ वामावर्तेनसंपूज्याःकोणपार्श्वेषुपंचशः॥६॥नित्यामंत्राःप्रवक्ष्यंतेस्मृताःसर्वेष्टसि द्धिदाः ॥ बालातारोनमःकामेश्वरिहग्दीर्घजादिमः॥७॥कामफलप्रदेसर्वसत्त्ववांतेतुशंकरि ॥सर्वांते तुजगद्वर्णात्क्षोभणांतेकरीतिच ॥८॥वर्मत्रयंपंचबाणाःप्रतिलोमाकुमारिका ॥ कामेश्वरीमनुःप्रोक्तः षट्चत्वारिंशदर्णवान् ॥ ९ ॥

क्लींसौः ॥ तारःप्रणवः ॥ हकइ ॥ दीर्घश्वासौजादिमश्चछ ॥ ७ ॥ ८ ॥ वर्महुं ३॥ पंचबाणाः द्रांद्रींक्लींब्लूंसःइति ॥ कुमारिकाबालाप्रतिलोमा ॥ अंसौः क्लींऐंकामेश्वरीनित्याश्रीपादुकांपूजयामितर्पयामिनमइति ॥ ९ ॥

---

१ ॐऐंक्लींसौः ॐनमःकामेश्वरिइच्छाकामफलप्रदेसर्वसत्त्ववशंकरिसर्वजगत्क्षोभणकरिहुंहुंहुंद्रांद्रींक्लींब्लूंसःसौःक्लींऐं (४६)कामेश्वरीनित्याश्रीपादुकांपूजयामितर्पयामिनमःइत्येवप्रयोगः ।

भगमालिनीमाह ॥ वागिति ॥ वाग्बीजंऐं ॥ ॥ कर्णाढ्यानिद्राउयुनोभःभुः ॥ १० ॥ ११ ॥ सदीपकःअग्निः ऽयु तोरःरूः ॥ दीर्घास्मृतिःगा ॥ अग्नीरेफः ॥ १२ ॥ सझिंटीशःपावकः एयुतोरःरे ॥ केशवःअः ॥ १३ ॥ वाकूऐं ॥ १४ ॥ मारुतोयः ॥ १५ ॥ मायाह्रीं ॥ स्वरूपमन्यत् ॥ अंगत्रिभूवर्णाषट्त्रिंशदुत्तरशतार्णाभगमालिनी ॥ यथा—आँऐंभगभुगेभगिनिभगोदरिभगमालेभगावहेभगगुह्येभगयोनेभगनिपातिनिसर्वभगवशंकारिभगरूपेनित्यक्लि

वाग्बीजंभगकणाढ्यानिद्रागेभगिनीतिच॥भगोदरीतिवर्णांतेभगमालेभगावहे ॥१०॥ भगगुह्येभगां तेस्याद्योनेभगनिपातिनि॥ सर्वांतेभगशब्दांतेवशंकारिभगेतिच॥११॥रूपेनित्यपदंक्लिन्नेभगस्वाग्निः सदीपकः॥पेसर्वभस्मृतिर्दीर्घानिमेह्यानयवाग्नयः॥ १२ ॥ देरेतेसुसझिंटीशःपावकस्तेभगार्णकाः॥ क्लिन्नेक्लिन्नद्रवेक्लेदयद्रावयचकेशवः॥१३॥ मोघेभगांतेविच्चेचक्षुभक्षोभयसर्वंच ॥ सत्त्वान्भगेश्वरिप्रां तेवाग्ब्लूंजंब्लूंचमेंपुनः।१४।ब्लूंमोंब्लूंहेंपुनब्लूंहेंक्लिन्नेसर्वाणिभाक्षरम्॥गानिमेवशमानांतेमारुतःस्त्रीं हरेतिच॥१५॥ब्लेंमायांगत्रिभूवर्णाप्रोदिताभगमालिनी॥नित्यक्लिन्नमदद्रांतेपद्मनाभयुतंजलम्॥१६।

न्नेभगस्वरूपेसर्वभगानिमेह्यानयवरदेरेतेसुरेतेभगक्लिन्नेक्लिन्नद्रवेक्लेदयद्रावयअमोघेभगविच्चेक्षुभक्षोभयसर्वसत्त्वान्भ गेश्वरिऐंब्लूंजंब्लूंमेंब्लूंमोंब्लूंहेंब्लूंहेंक्लिन्नेसर्वाणिभगानिमेवशमानयस्त्रींहरब्लेंह्रीं ( १३६ ) भगमालिनीनित्याश्री पादुकांपूजयामिनमः ॥ नित्याक्लिन्नामंत्रमाह ॥ नित्येति ॥ पद्मनाभयुतंजलम् ॥ एयुतोवःवे ॥ १६ ॥

मायाह्रीं तदाद्या ॥ अग्निप्रियास्वाहांतदंता ॥ शिवाक्षरएकादशार्णः ॥ यथा--ह्रींनित्यक्लिन्नेमदद्रवेस्वाहा (११)
नित्यांक्लिन्नानित्याश्रीपादुकांपूजयामि ॥ भेरुंडामंत्रमाह ॥ बांतइति ॥ बांतोभः रेफयुतः तारसंयुतः ओंकारसं
युतः भ्रों ॥ स कीदृशः ॥ अंकुशसंपुटः क्रोमितिबीजेनाद्यावंतेयुतः ॥ १७ ॥ चवर्गस्यचत्वारोवर्णाःवह्निमन्बिंदु
संयुतारऔबिंदुयुताः च्रौंछ्रौंज्रौंझ्रौं ॥ स्वाहांतःप्रणवाद्योदशवर्णः ॥ यथा--ईॐक्रोंभ्रोंक्रोंच्रौंछ्रौंज्रौंझ्रौंस्वाहा (१०)

मायाद्याग्निप्रियांतेयंनित्यक्लिन्नाशिवाक्षरः ॥ बांतोरेफासनस्तारसंयुतोंकुशसंपुटः १७॥ चवर्ग
वर्णाश्चत्वारोवह्निमन्बिंदुसंयुताः ॥ वह्निप्रियांतस्ताराद्योभेरुंडायादशाक्षरः ॥१८॥ मायांतेवह्निवा
सिन्यैप्रणवाद्योनमोंतिकः॥ मंत्रोयंवह्निवासिन्यानववर्णःसमीरितः ॥ १९ ॥तारोमायाशिखीवह्नि
पद्मनाभेंदुसंयुतः ॥ सविसर्गोभृगुर्नित्यक्लिन्नेपश्चान्मदद्रवे ॥ २० ॥

भेरुंडानित्याश्रीपादुकांपूजयामि ॥ १८ ॥ वह्निवासिनीमंत्रमाह ॥ मायेति ॥ स्पष्टं ॥ यथा--ॐह्रींवह्निवासिन्यै
नमः (९)वह्निवासिनीनित्याश्रीपादुकांपू० ॥ १९ ॥ महाविद्येश्वरीमंत्रमाह ॥ तारइति ॥ तारॐ ॥ माया
ह्रीं ॥ शिखीफः वह्निपद्मनाभेंदुसंयुतः रएबिंदुयुतःफ्रें ॥ सविसर्गोभृगुःसः ॥ २० ॥

मनुवर्णश्चतुर्दशार्णः ॥ यथा--ॐ अँह्रींक्लिंसःनित्यक्लिन्नेमदद्रवेस्वाहा ( १४ ) महाविद्येश्वरीनित्याश्रीपादुकांपू० ॥ २१ ॥ शिवदूतीमंत्रमाह ॥ शिवेति ॥ यथा--ॐह्रींशिवदूत्यैनमः ( ७ ) शिवदूतीनित्याश्रीपादुकांपू० ॥ त्वरितामंत्रमाह ॥ तारइति ॥ तारॐ ॥ पराह्रीं ॥ वर्महुं ॥ खेचछेक्षःस्त्रीस्वरूपम् ॥ वामकर्णयुक् ॥ २२ ॥ शशियुतं चगगनं ( १२ ) अंबिंदुयुतोहः हूं ॥ मेरुःक्षः भगंए तद्युतः क्षे ॥ अद्रिजाह्रीं ॥ यथा--ॐअँह्रींहुंखेचछेक्षःस्त्रीहूं

स्वाहांतोमनुवर्णोयंमहाविद्येश्वरीमनुः ॥ शिवदूतीचतुर्थ्यंतामायाद्याहृदयांतिका ॥२१॥ शिवदूतीमनुःप्रोक्तःसप्तवर्णोखिलेष्टदः ॥ तारःपरावर्मखेचछेक्षःस्त्रीवामकर्णयुक् ॥२२ ॥ गगनंशशिसंयुक्तंमेरुभगयुतोद्रिजा ॥ फडंतोद्वादशार्णोयंत्वरितायामनुर्मतः ॥२३ ॥ दामोदरोबिंदुयुतःकलौशांतींदुसंयुतौ ॥ भृगुर्मनुविसर्गादयस्त्र्यक्षराकुलसुन्दरी ॥ २४ ॥

क्षेह्रींफट् ( १२ ) त्वरितानित्याश्रीपादुकांप० ॥ २३ ॥ कुलसुंदरीमंत्रमाह दामोदरइति ॥ दामोदरः ऐ बिंदुयुतः ऐं ॥ कलौशांतींदुसंयुतौ ईबिंदुसंयुतौ क्लीं ॥ मनुविसर्गाढ्योभृगुःसः औ सर्गयुतःसौः ॥ यथा--ऐंक्लींसौः ( ३ ) कुलसुंदरीनित्याश्रीपादुकांपू० ॥ २४ ॥ ॥ १०० ॥

नित्यामंत्रमाह ॥ भैरवीति ॥ प्राक्क्रमात्पश्चिमादुत्क्रमाद्बालयायुतात्रिपुरभैरवी ॥ ततःपंचबाणबीजानि ॥ एषा मन्वक्षराचतुर्दशार्णानित्येरिता ॥ यथा-ऌंऐंक्लींसौःह्सौंस्क्लींहस्रौंसौःक्लींऐंद्रांद्रींक्लींब्लूंसः (१४) नित्याश्रीपादुकांपू० ॥ २५ ॥ नीलपताकिनीमंत्रमाह ॥ तारइति ॥ तारॐ ॥ मायाह्रीं ॥ फांतरे फौफरौतौझिंटीशशाशिसंयुतौ एबिंदुयुतौ फ्रें ॥ हंसःस्रअग्न यघींशबिंद्राढ्यःराबिंदुयुतःस्त्र ॥ ह्ल्लखाह्ला ॥ अकुशःक्रों ॥ नित्यमदद्रवेस्वरूपम्॥

भैरवीबालयायुक्ताप्राक्पश्चाच्चक्रमोत्क्रमात् ॥ तदंतेपंचबाणाःस्युर्नित्यामन्वक्षरेरिता ॥२५॥ तारो मायाफांतरेफौझिंटीशशशिसंयुतौ॥ हंसोग्न्यघींशबिंद्राढ्योहल्लेखांकुशनित्यम ॥ २६ ॥ दद्रवेवर्म सृण्यंताप्रोक्तानीलपताकिनी ॥ चतुर्दशाक्षरासर्वत्रैलोक्याकर्षणक्षमा ॥ २७ ॥ वराहहंसचंडीशज नार्दनकृशानवः॥ पद्मनाभेंदुसंयुक्ताविजयायैनमोंतिकः ॥ २८ ॥

वर्महुं ॥ सृणिःक्रों ॥ यथा-ए ॐ ह्रींफ्रेंस्त्रंह्लींक्रोंनित्यमदद्रवेहुंक्रों (१४) नीलपताकिनीनित्याश्रीपादुकांपू० ॥ २६ ॥ २७ ॥ विजयामंत्रमाह ॥ वराहेति ॥ वराहोहः॥ ॥हंसः सः॥चंडीशः खः॥जनार्दनःफः॥ कृशानूरः ॥ एते पद्मनाभेंदुसंयुक्ताः एबिंदुनायुताः ॥ एतत्कूटंहस्ख्फ्रें ॥ स्वरूपमन्यत् ॥ यथा-ऐंह्स्ख्फ्रेंविजयायैनमः (७) वि जायनित्याश्रीपादु० ॥ २८ ॥

सर्वमंगलामंत्रमाह ॥ ताराढ्याविति ॥ भृगुखड्गीशौस्वौ ताराढ्यौ ओंयुतौ स्वों ॥ ङेन्ताचतुर्थ्यैकवचनांता ॥ २९ ॥ यथा-ओंॐस्वोंसर्वमंगलायैनमः (९) सर्वमंगलानित्याश्रीपा० ॥ ज्वालामालिनीमंत्रमाह ॥ तारइति ॥ तारॐ ॥ स्वरूपमग्रे ॥ कवचंहुं ॥ पावकद्वयंरंरं ॥ वर्मास्त्रांताहुंफडंता॥अष्टयुगाक्षराअष्टचत्वारिंशद्वर्णा-

विजयायामनुःप्रोक्तःसप्तवर्णोखिलार्थदः ॥ ताराढ्यौभृगुखड्गीशौङेंतास्यात्सर्वमंगला ॥ २९ ॥
नमोंतोमनुराख्यातोनंवार्णःसर्वमंगलः ॥ तारोनमोभगवतिज्वालामालिनितत्परम् ॥ ३० ॥ देव्यं
तसर्वभूतांतेसंहारांतेतुकारिके ॥ जातवेदसिवर्गांतेज्वलतिप्रज्वलंतिच ॥ ३१ ॥ ज्वलद्वयंप्रज्वल
तेकवचंपावकद्वयम् ॥ वर्मास्त्रांतोदिताज्वालामालिन्यष्टयुगाक्षरा॥ ३२ ॥ कूर्मःक्रोधीशमान्बिंदुसंयुतो
ह्येकवर्णकः ॥ विचित्रायामनुश्चैतानित्याःपंचदशोदिताः ॥ ३३ ॥

ज्वालामालिनीउदिता यथा-ओंॐनमोभगवतिज्वालामालिनिदेविसर्वभूतसंहारकारिकेजातवेदसिज्वलंतिप्रज्वलंतिज्वलज्वलप्रज्वलहुंरंरंहुंफट् (४८) ज्वालामालिनीनित्याश्रीपा० ॥ ३० ॥ ३१ ॥ ३२ ॥ विचित्रामंत्रमाह ॥ कूर्मेति ॥ कूर्मश्चकारः क्रोधीशमान्बिंदुयुतः कऔबिंदुयुतः च्कौं ॥ अत्रप्रथमश्चकारः ॥ यथा-ओंच्कौं (१) विचित्रानित्याश्रीपा० ॥ एताःपंचदशनित्याः ॥ ३३ ॥

एतास्त्रिकोणेपंचदशसंपूज्यबिंदौमूलेनषोडशींयजेत् ॥ यथा–अंमूलंमहात्रिपुरसुंदरीनित्याश्रीपादुकांपूजयामितर्पयामिनमः ॥ बिंदुत्रिकोणयोर्मध्येत्रिभंगीभिःपंक्तित्रयेणगुरूनयजेत् ॥ ३४ ॥ तेत्रिविधाइत्याह ॥ दिव्यौघाइति ॥

मूलेनषोडशींमध्येयजेत्रिपुरसुंदरीम् ॥ बिंदुत्रिकोणयोर्मध्येत्रिभंगीभिर्गुरूनयजेत् ॥३४॥ दिव्यौघाश्चापिसिद्धौघामानवौघास्त्रिधाहिते ॥ परप्रकाशःप्रथमस्ततःपरशिवाभिधः ॥३५॥ परशक्तिश्चकौलेशःशुक्लादेवीकुलेश्वरः ॥ कामेश्वरीतिसप्तैवदिव्यौघागुरवःपराः ॥ ३६ ॥ भोगःक्रीडश्चसमयःसहजश्चपरावरः ॥ सिद्धौघगुरवश्चैतेचत्वारःपरिकीर्तिताः ॥३७॥ गगनोविश्वविमलौमदनोभुवनस्तथा ॥ लीलास्वात्माप्रियेत्यष्टौमानवाअपरामताः ॥ ३८ ॥ आनंदनाथशब्दांताःपुरुषागुरवःस्मृताः ॥ अंबांतास्तुस्त्रियःकार्य्याःसर्वसिद्धिप्रदायिकाः ॥ ३९ ॥

दिव्यौघानाह ॥ परप्रकाशइति ॥ ३५ ॥ ३६ ॥ सिद्धौघानाह ॥ भोगइति ॥ ३७ ॥ मानवौघानाह ॥ गगनइति ॥ ३८ ॥ पुमांसोगुरवःआनंदनाथशब्दांताःकार्याः ॥ स्त्रियोगुरवस्तुअंबाशब्दांताः ॥ ३९ ॥

कतिस्त्रियःकतिनराइत्यत्राह ॥ परशक्तिरिति ॥ दिव्यगुरुषुपरशक्तिशुक्लादेवीकामेश्वर्यस्तिस्रःस्त्रियश्चत्वारोन्येपुमांसः ॥ मानवगुरुषुप्रियालीलेद्वेस्त्रियौ, षडन्येनराः ॥ सिद्धगुरुषुचत्वारोपिपुमांसएव ॥ तथाचप्रयोगः--परप्रकाशानंदनाथश्रीपादुकांपूजयामिनमः ॥ परशक्त्यंबाश्रीपादुकांपूजयामीत्यादि० ॥ ४० ॥ बिंदोः

परशक्तिस्तथाशुक्लादेवीकामेश्वरीतिच ॥ तिस्रःस्त्रियस्तुदिव्येषुप्रियालीलेतिमानवे ॥ ४०॥श्रीपादुकांपूजयामीत्यंतेसर्वत्रयोजयेत्॥ततोबिंदोश्चतुर्दिक्षुयजेदाम्नायदेवताः ॥४१॥ पूर्वंदक्षिणमाम्नायंपश्चिमंचोत्तरंतथा ॥ ततःप्रपूजयेद्दिक्षुमध्येतःपंचपंचिकाः॥४२॥ आद्यांमध्येचतस्रोन्याःपूर्वाद्याशासुपूजयेत् ॥ पंचस्वपिगणेष्वत्रश्रीविद्याद्याप्रकीर्तिता ॥४३ ॥ श्रीविद्याचतथालक्ष्मीर्महालक्ष्मीस्तृतीयका ॥ त्रिशक्तिःसर्वसाम्राज्यापंचलक्ष्म्यः प्रकीर्तिताः ॥ ४४ ॥

प्रागादिदिक्षुपूर्वाम्नायदेवताश्रीपादुकांपू० ॥ दक्षिणाम्नायदेवतेत्यादिचतस्रःआम्नायदेवताःपूजयेत् ॥ ततःपंचपंचिकाःपूजयेत् ॥ ४१ ॥ ४२ ॥ आद्यांमूलेन, मध्येद्वितीयाद्यास्वस्वदिक्षुस्वस्वमंत्रैरितिवक्ष्यते ॥ एवमन्याःपंचिकाः ॥ ४३ ॥ तासुप्रथमपांचिकामाह ॥ श्रीविद्येति ॥ आद्यपंचकंलक्ष्मीसंज्ञम् ॥ ४४ ॥

द्वितीयंपंचकंकोशसंज्ञम् ॥ ४५ ॥ तृतीयंपंचकंकल्पलतासंज्ञम् ॥ ४६ ॥ चतुर्थंपंचकंकामधेनुसंज्ञम् ॥ ४७ ॥ पंचमं पंचकंरत्नसंज्ञकम् ॥ ४८ ॥ तासांक्रमान्मंत्रान्वदति ॥ श्रीविद्यामिति ॥ तत्राद्यपंचके मूलेनश्रीविद्यामध्ये

श्रीविद्याचपरंज्योतिःपरनिष्कलशांभवी ॥ अजपामातृकाचेतिपंचकोशाइमेस्मृताः ॥ ४५ ॥ श्री विद्यात्वरिताचैवपारिजातेश्वरीपुनः ॥ त्रिपुटापंचबाणेशीपंचकल्पलताइमाः ॥४६॥ श्रीविद्यामृत पीठेशीसुधाश्रीरमृतेश्वरी ॥ अन्नपूर्णेतिविख्याताःपंचैताःकामधेनवः॥४७॥ श्रीविद्यासिद्धलक्ष्मी श्चमातंगीभुवनेश्वरी ॥ वाराहीचस्मृतंचैतन्मुनिभीरत्नपंचकम् ॥ ४८ ॥ श्रीविद्यांमूलमंत्रेणमध्येसं योज्यपूजयेत् ॥ क्रमतोन्याश्चतुर्दिक्षुतासांमंत्रान्क्रमाद्ब्रु ॥ ४९ ॥ वंबकेशोवह्निमारूढोवामनेत्रेंदुसं युतः ॥ लक्ष्मीमंत्रोयमेकार्णस्तेनलक्ष्मींप्रपूजयेत् ॥ ५० ॥

पूज्या दिक्षुलक्ष्म्याद्याः ॥ ४९ ॥ तत्रलक्ष्मीमंत्रमाह ॥ बकेशइति ॥ बकेशःशः ॥ वह्नीरेफस्तद्युतंवामनेत्रमीइन्दु बिंदुस्तद्युतश्चश्रीं ॥ तेन-श्रीं ( १ ) लक्ष्मीश्रीपादुकां पू० इतिपूर्वं ॥ ५० ॥

महालक्ष्मीमंत्रमाह ॥ तारेति ॥ तारॐ ॥ पद्माश्रीं ॥ शक्तिःह्रीं ॥ पद्माश्रीं ॥ लक्ष्मीःश्रीं ॥ मायाह्रीं॥पद्माश्रीं॥ ध्रुवःॐ ॥ स्वरूपंशेषम् ॥ यथा–ॐश्रींह्रींश्रींकमलेकमलालयेप्रसीद २ श्रींह्रींश्रींॐमहालक्ष्म्यैनमः (२८) महालक्ष्मीश्रीपा०इतिदक्षिणे ॥ ५१ ॥ ५२ ॥ त्रिशक्तिमंत्रमाह ॥ लक्ष्मीःश्रीं ॥ मायाह्रीं ॥ मनोजन्माक्लीं ॥ यथा–श्रींह्रींक्लीं ॥ ३ ॥ त्रिशक्तिश्रीपा०पश्चिमे ॥ ५३ ॥ सर्वसाम्राज्यामंत्रमाह ॥ भृग्विति॥ भृगुःसः ॥ आकाशोहः ॥

तारपद्माशक्तिपद्माकमलेकमलालये ॥ प्रसीदयुगलंलक्ष्मीर्मायापद्माध्रुवोमहा ॥५१॥ लक्ष्म्यैनमोंतोमंत्रोयमष्टाविंशतिवर्णवान् ॥ पूज्यानेनमहालक्ष्मीःश्रीविद्यादक्षिणेस्थिता ॥ ५२॥ लक्ष्मीर्मायामनोजन्मात्रिशक्तिर्मनुरीरितः ॥ त्रिवर्णोनेनसपूज्यात्रिशक्तिःपश्चिमेस्थिता ॥५३॥ भृग्वाकाशकलामायारूढापद्मालयापुटाः ॥ त्रिवर्णाःसर्वसाम्राज्यातांयजेदुत्तरस्थिताम् ॥५४॥ तारोमायाततोहंसःसोहंवह्निप्रियांतिमः ॥ अष्टवर्णःपरंज्योतिर्मनुस्तांपूर्वतोयजेत् ॥ ५५ ॥

कलाएतेमायास्थिताः ॥ पद्मालयाश्रीं ॥ तेनपुटिताः॥ यथा–श्रींसहकलह्रींश्रीं (७) सर्वसाम्राज्याश्रीपा० उत्तरे ॥ ५४ ॥ द्वितीयपंचकेपरज्योतिर्मंत्रमाह ॥ तारइति ॥ तारॐ ॥ मायाह्रीं ॥ यथा–ॐह्रींहंसः सोहं स्वाहा ॥ ८ ॥ परंज्योतिःश्रीपा०पूर्वे ॥ ५५ ॥

परनिष्कलशांभवीमंत्रमाह ॥ तारइति ॥ प्रणवस्तन्मंत्रः ॥ यथा-ॐपरनिष्ककलशांभवी ( ८ ) श्रीपा०दक्षिणे ॥ अजपामाह ॥ नभइति ॥ नभोहः ॥ भृगुःसः यथा-हंसः ( २ ) अजपाश्रीपा०पश्चिमे ॥ ५६ ॥ आदिक्षांतवर्णास्तुमातृका ॥ अंआंइंईं०क्षं ( ५१ ) मातृकाश्रीपा० उत्तरे ॥ कल्पलतापंचकेत्वरिता मंत्रमाह ॥ प्रणवइति ॥ भुवनेशीह्रीं ॥ ५७ ॥ मेरुःक्षःसझिंटीशःएयुतःक्षे ॥ यथा-ॐह्रींहुंखेचछेक्षःस्त्रींहुंक्षेह्रींफट् ( १२ ) त्वरिताश्री

तारःपरोनिष्कलश्चशाम्भवीज्यातुदक्षिणे ॥ नभःसबिंदुसर्गाढ्योभृगुद्वयर्णाजपाऽपरे ॥ ५६ ॥
अकारादिक्षकारांतावर्णाःप्रोक्तातुमातृका ॥ प्रणवोभुवनेशीहुंखेचछेक्षःपदंपुनः ॥ ५७ ॥ स्त्रींहुंमेरुः
सझिंटीशोमायास्त्र्यंद्वादशाक्षरः ॥ त्वरितायामनुःप्रोक्तस्तेनतांपुरतोर्चयेत् ॥५८॥ आकाशहंसक्रो
धीशपिनाकीशहराधराः ॥ सैंदवस्तारमायाभ्यांसंपुटाश्चसरस्वती ॥ ५९ ॥ ङेंतोहृदंतोमंत्रोयंप्रोक्त
एकादशाक्षरः ॥ अनेनपारिजातेशींदक्षिणस्यांप्रपूजयेत् ॥ ६० ॥

पा०पूर्वे ॥५८ ॥ पारिजातेश्वरीमंत्रमाह ॥ आकाशेति ॥ आकाशोहः ॥ हंसःसः ॥ क्रोधीशःकः ॥ पिनाकीशोलः॥ हर स्वरूपम् ॥ अधरएं ॥ एतेसबिंदवः कूटं तारमायासंपुटम् ॥यथा-ॐह्रींहंसंकंलंऐंह्रीं ॐसरस्वत्यैनमः ( ११-१५ ) पारिजातेश्वरीश्रीपा०दक्षिणे ॥ ५९ ॥ ६० ॥

त्रिपुटामंत्रमाह ॥ रमेति ॥ मनोभूमिःक्लीं ॥ यथा-श्रींह्रींक्लीं ( ३ ) त्रिपुटाश्रीपा०पश्चिमे ॥ द्रांद्रींक्लींब्लूंसः (५) पंचबाणेशीश्रीपा०उत्तरे ॥ कामधेनुपंचके अमृतपीठेशीमंत्रमाह ॥ वागिति॥ यथा-ऐंक्लींसौः ( ३ ) अमृत पीठेशीश्रीपादुकांपूर्वे० ॥ सुधाश्रीमंत्रमाह॥ नभइति ॥ नभोहः ॥ भृगुःसः ॥ अग्नीरः ॥एतेवामनेत्रमीकारस्त युताःसबिंदवश्चहस्रीं ॥ ६१ ॥ ६२ ॥ ६३॥ सार्णाद्याभुवनेशानीसह्रीं ॥ श्रींकलाद्या ॥ भुवनेश्वरीक्लीं ॥ वेदार्ण

रमामायामनोभूमिस्त्रिवर्णात्रिपुटोदिता ॥ तांयजेत्पश्चिमभागेबाणेशीमुत्तरेपुनः ॥ ६१ ॥द्रांद्रींक्लीं ब्लूंभृगुःसर्गीसोदितापंचवर्णका॥ वाक्कामौभृगुरासर्गयुक्तोमंत्रस्त्रिवर्णकः ॥ ६२॥प्रोदितोऽमृतपीठे शीतेनतांपूर्वतोयजेत् ॥ नभोभृग्वग्नयोवामनेत्राढ्याश्चन्द्रभूषिताः ॥ ६३ ॥ सार्णाद्याभुवनेशीश्रीं कलाद्याभुवनेश्वरी ॥ सुधाश्रीमंत्रउदितोवेदार्णस्तांयजेदवाक्॥६४॥सकारोनुग्रहीसर्गीकामोवागभ्र पूर्विका ॥ त्रिवर्णमनुनापश्चात्पूजयेदमृतेश्वरीम् ॥ ६५ ॥

श्चतुर्वर्णोयंसुधाश्रीमंत्रः ॥ तेनतामवाक्दक्षिणेयजेत्॥ यथा ह्स्रौंस्ह्रींश्रींक्लीं ( ४ ) सुधाश्रीपा० ॥ ६४ ॥ अमृते श्वरीमंत्रमाह ॥ सकारइति ॥ अनुग्रहीऔयुतः ॥ अभ्रपूर्विकावाक् हयुतंवाग्बीजंहें ॥ यथा-सौःक्लींहें ( ३ ) अमृतेश्वरीश्रीपा० पश्चिमे ॥ ६५ ॥

अन्नपूर्णानवमेतरंगेउक्ता ॥ तेनोत्तरेतांयजेत् ॥ यथा-ॐह्रींश्रींक्लींनमोभगवतिमाहेश्वरिअन्नपूर्णेस्वाहा (२०) अन्नपूर्णाश्रीपादुकांपू० उत्तरे ॥ ६६ ॥ रत्नपंचकेसिद्धलक्ष्मीमंत्रमाह ॥ वाणीति ॥ वाणीबीजंऐं ॥ कामबीजंक्लीं ॥ वराहहंसाग्निवर्णाहसराःऔसर्गयुताहस्रौंः ॥ स्वरूपमन्यत् ॥ यथा-ऐंक्लिन्नेक्लींमदद्रवेकुले हस्रौंः (११) सिद्धिलक्ष्मीश्रीपा०पूर्वे ॥ ६७ ॥ दक्षिणेमातंगी ॥ ६८ ॥ तन्मन्त्रमाह ॥ वागिति ॥ वाक्ऐं ॥ कामःक्लीं ॥ वाणीऐं ॥

विंशत्यर्णान्नपूर्णोक्तातरंगेनवमेमया ॥ तन्मंत्रेणोत्तरस्यांतुपूजयेदन्नदायिनीम् ॥६६॥ वाणीबीजंततःक्लिन्नेकामबीजंमदद्रवे ॥ कुलेवराहहंसाग्निवर्णाऔसर्गसंयुताः ॥६७॥ एकादशाक्षरोमंत्रःसिद्धिलक्ष्म्याःसमीरितः ॥ तेनतांपूजयेत्पूर्वेमातंगींदक्षिणेपुनः ॥६८॥ वाक्कामःसौःपुनर्वाणीमायालक्ष्मीध्रुवोनमः॥भगवतीतिमातंगीश्वरिसर्वजनार्णकाः ॥६९॥ मनोहरिपदंप्रोच्यसर्वराजवशंकरि॥सर्वांतेमुखरंज्यंतेमेषोनेत्रसमन्वितः ॥ ७० ॥ सर्वस्त्रीपुरुषान्तेतुवशंकरिपदंवदेत्॥सर्वदुष्टमृगप्रांतेवशंकरिपुनःपदम्॥सर्वलोकवशंपश्चात्करिमायांरमांगजः॥वाक्त्रिसप्ततिवर्णोयंमातंग्याउदितोमनुः ॥७१॥

मायाह्रीं ॥ लक्ष्मीःश्रीं ॥ ध्रुवॐ ॥ ६९ ॥ नेत्रसमन्वितोमेषोनःनि ॥ रमाश्रीं ॥ अंगजःक्लीं ॥ स्वरूपमन्यत् ॥ यथा-ऐंक्लींसौःऐंह्रींश्रींॐ नमोभगवतिमातंगीश्वरिसर्वजनमनोहरिसर्वराजवशंकरिसर्वमुखरंजिनिसर्वस्त्रीपुरुषवशंकरिसर्वदुष्टमृगवशंकरिसर्वलोकवशंकरिह्रींश्रींक्लींऐं (७३) मातंगीश्रीपा० ॥ ७० ॥ ७१ ॥

भुवनेश्वरीमाह ॥ गगनमिति ॥ गगनंहः वह्निनारेफेणवामनेत्रेंदुभ्यांईबिंदुभ्यांयुतः॥ यथा-ह्रीं ( १ ) भुवनेश्वरीश्रीपादुकांपू०पश्चिमे ॥ ७२ ॥ दशमेतरंगेवेदरुद्राक्षरश्चतुर्दशोत्तरशताणोंवाराहीमनुरुक्तः ॥ तेनतामुत्तरेयजेत् ॥ ॐऐंग्लौंऐंनमोभगवतिवार्तालिवाराहिवाराहवाराहमुखिऐंग्लौंऐंअंधेअंधिनिनमःरुंधेरुंधिनिनमः जंभेजंभिनिनमः मोहेमोहिनिनमःस्तंभेस्तंभिनिनमःऐंग्लौंऐंसर्वदुष्टप्रदुष्टानांसर्वेषांसर्ववाक्चित्तचक्षुर्मुखगतिजिह्वास्तं

गगनंवह्निनावामनेत्रेंदुभ्यांसमन्वितम् ॥भुवनेशीमनुःप्रोक्तस्तेनतांपश्चिमेयजेत्॥ ७२॥तरंगेदशमेप्रोक्तोवेदरुद्राक्षरोमनुः ॥ वाराह्यास्तेनतांदेव्यावामभागे समर्चयेत् ॥ ७३॥पंचिकाएवमाराध्यदर्शनानियजेच्चषट् ॥ आद्यंमध्येचतुर्दिक्षुचत्वारिपुरतोंतिमम् ॥ ७४ ॥ शैवंशाक्तंतथाब्राह्मंवैष्णवंसौरसौगतम् ॥ दर्शनान्येवमाराध्यमूलेनत्रिःप्रतर्पयेत् ॥ ७५॥अंगुष्ठानामिकाभ्यांतांयच्छेत्पुष्पंतुमुद्रया ॥ ज्ञानाख्ययासाचांगुष्ठतर्जनीयोगतोमता ॥ ७६ ॥ एवंसंपूज्यबिंदुस्थांश्रीमत्त्रिपुरसुंदरीम् ॥ ततोंगाद्यावृतीनांतुपूजनंसम्यगाचरेत् ॥ ७७ ॥

भंकुरु२ शीघ्रंवशंकुरु २ ऐंग्लौंऐंठःठःठःठःहुंफट्स्वाहावाराहीश्रीपादु०-उत्तरे॥७३॥एवंपंचपंचिकाःसंपूज्यदर्शनानियजेत् ॥ अग्रेस्पष्टम् ॥ ७४ ॥ शिवदर्शनश्रीपा० इत्यादि० ॥ ७५ ॥ ज्ञानमुद्रामाह ॥ साचेति॥ अंगुष्ठतर्जनीयोगेज्ञानमुद्रा ॥ ७६ ॥ ७७ ॥

भूबिंबमारभ्यबिंदुपर्यंतं प्रतिलोमेननवावरणपूजा ॥ आवरणदेवतानामादौमायाश्रीबीजे अंतेतुश्रीपादुकांपूजया मीतिप्रयोगः ॥ आग्नेयेहृत ॥ ईशेशिराः ॥ नैर्ऋत्येशिखा ॥ वायौकवचं ॥ पुरोनेत्रं ॥ दिक्ष्वस्त्रं ॥ यथा-श्रींह्रींक्लीं ऐंसौः हृदयंवाग्देवताश्रीपा० ॥ ७८ ॥ ७९ ॥ त्रिरेखंभूगृहमस्ति ॥ कस्याधररेखायामष्टदिक्षुऊर्ध्वमधश्चाणिमाद्या

भूबिंबाद्बिंदुपर्यंतंनवावृतिसमर्चनम् ॥ मायाश्रीबीजपूर्वाणांनाम्नामंतेनियोजयेत् ॥७८॥ श्रीपादुकां पूजयामीत्येतद्वर्णाश्चसर्वतः ॥ अग्नीशासुरवायव्यपुरोदिक्ष्वंगपूजनम् ॥७९॥ भूबिंबस्याऽऽधररेखायां दिक्षूर्ध्वाधःक्रमाद्यजेत् ॥ सिद्धीर्दशाणिमात्वाद्यामहिमालघिमेशिता ॥ ८० ॥ वशित्वसिद्धिःप्राका म्याभुक्तिरिच्छाष्टमीपुनः ॥ प्राप्तिश्चसर्वकामाख्यासिद्धयोदशकीर्तिताः ॥८१॥ तप्तहेमसमानाभाः पाशांकुशधराःशुभाः ॥ साधकेभ्यःप्रयच्छंतिरत्नौघंताविचिंतयेत् ॥ ८२ ॥ भूपुरेमध्यरेखायांपश्चि माद्यर्चयेदिमाः ॥ ब्राह्मींमाहेश्वरींचापिकौमारींवैष्णवीमपि ॥ ८३ ॥

दशसिद्धीर्यजेत् ॥ ह्रींश्रींअणिमासिद्धिश्रीपादुकांपूजयामीत्यादिप्रयोगः ॥ ८० ॥ ८१ ॥ तासांध्यानमाह ॥ दक्षेंकुशधराः ॥ वामेपाशधराः ॥ साधकेभ्योरत्नसमूहान्ददति ॥ ८२ ॥ भूगृहद्वितीयरेखायांपश्चिमादिषुदिक्षु ब्राह्म्याद्याअष्टमातॄर्यजेत् ॥ ह्रींश्रींब्राह्मीमातृकाश्रीपादुकांपूजयामीत्यादि० ॥ ८३ ॥

तासांध्यानमाह ॥ इमाइति ॥ ८४ ॥ क्रमाद्विद्यादीन्यायुधानिदधतीः॥ ८५ ॥ तस्यांभूपुरस्थतृतीयरेखायांदि क्षुऊर्ध्वमधश्चदशसंक्षोभणाद्यादशमुद्रायजेत् ॥ ह्रींश्रींक्षोभणमुद्राश्रीपा० ॥ ८६ ॥ मुद्राणांलक्षणान्युक्तानि ॥ एवंप्रथमावरणमाराध्य ॥ ८७ ॥ त्रैलोक्यमोहनेचक्रे इमाःप्रकटयोगिन्यः पूजितास्तर्पिताइष्टदाःसंत्वितिप्रार्थ्यमूले

वाराहींचतथैंद्राणींचामुंडामथसप्तमीम् ॥ महालक्ष्मीमिमाध्यायेत्सर्वाभरणसंयुताः ॥ ८४ ॥ विद्यां शूलंशक्तिचक्रेगदांवज्रंहिदंडकम्॥ पद्मंक्रमेणदधतीःसर्वाभीष्टप्रदायिकाः ॥८५ ॥ तस्यांतृतीयरेखा यांदशमुद्राःप्रपूजयेत् ॥ क्षोभणद्रावणाकर्षवश्योन्मादमहांकुशाः ॥ ८६ ॥ खेचरीबीजयोनीचात्रि खण्डेतिस्मृताइमाः ॥ एवंभूबिंबमाराध्यक्षोभमुद्रांप्रदर्शयेत् ॥८७ ॥त्रैलोक्यमोहनेचक्रेयोगिन्यःप्र कटाइमाः ॥ पूजितास्तर्पिताःसंतुस्वेष्टदाइतिप्रार्थयेत् ॥८८॥ बिंदौपुष्पांजलिंदत्वामूलेनान्यवृतिं यजेत् ॥ षोडशारेपश्चिमादिविलोमेनक्रमादिमाः ॥ ८९ ॥

नबिंदौपुष्पांजलिंदद्यात् ॥ ततःषोडशारेविलोमेनपश्चिमादिषोडशकामाकर्षणाद्याःशक्तीःपूजयेत् ॥ ह्रींश्रींकामा कर्षणीशक्तिश्रीपा०इत्यादि० ॥ एवंद्वितीयावरणंसंपूज्यसर्वाशापूरकेचक्रेएताःषोडशगुप्तयोगिन्यःपूजितास्तर्पि ताःसंत्वित्युक्त्वा ॥ ८८ ॥ ८९ ॥

॥१०॥११॥१२॥१३॥१४ ॥ द्राविणींमुद्रांदर्शयेत ॥ सागादिता ॥ १५ ॥ अष्टवर्गान्वितेष्टारेपूर्वाद्यनुलोमेनानंगकुसु
माद्याःपूजयेत् ॥ ह्रींश्रींअनंगकुसुमाश्रीपा० ॥ एवंतृतीयावरणंसंपूज्यसर्वसंक्षोभणेचक्रेएताअष्टौगुप्ततरयोगिन्यः

कामाकर्षणिकात्वाद्याबुद्ध्याकर्षणिकाततः ॥ अहंकाराकर्षिणीचशब्दाकर्षणिकापुनः ॥ १० ॥
स्पर्शाकर्षणिकातद्वद्रूपाकर्षणिकापिच ॥ रसाकर्षणिकाचान्यागंधाकर्षणिकातथा ॥११ ॥चित्ता
कर्षणिकाचापिधैर्य्याकर्षणिकापरा॥नामाकर्षणिकाचापिबीजाकर्षणिकातथा ॥ १२॥ अमृताक
र्षणीचान्यास्मृत्याकर्षणिकातथा ॥ शरीराकर्षणीचैवमात्माकर्षणिकापरा ॥१३॥ सर्वाशापूरकेच
क्रेषोडशस्वरसंयुते ॥ गुप्ताएतास्तुयोगिन्यःपूजिताःसंत्विदंवदेत् ॥१४॥ दर्शयेद्द्राविणींमुद्रांद्विती
यावरणार्चने ॥ काद्यष्टवर्गसंयुक्तेष्टारेपूज्याइमाःपुनः ॥१५॥ पूर्वादिष्वनुलोमेनबंधूककुसुमप्रभाः॥
अनङ्गकुसुमात्वाद्याद्वितीयानंगमेखला॥१६॥अनङ्गमदनातद्वदनंगमदनातुरा॥अनंगरेखाचानंगवे
गानंगांकुशापुनः ॥१७॥ अनंगमालिनीत्यष्टौपाशांकुशलसत्कराः॥सर्वसंक्षोभणेचक्रेदेव्योगुप्ततरा
भिधाः॥१८॥पूजिताःसंत्वितिप्रोच्याःकर्षमुद्रांप्रदर्शयेत्।चतुर्दशारेसंपूज्याःकादिह्रांतार्णराजिते॥१९

पूजिताःसंतु इत्युक्त्वाकर्षणमुद्रांदर्शयेत ॥ ततश्चतुर्थावरणेचतुर्दशारेकादिचतुर्दशार्णयुते॥१६॥ १७ ॥ १८॥ १९॥

इंद्रगोपत्यादि ॥ उक्तरूपाःदर्पणपाशधरवामकराः-पानपात्रांकुशधरदक्षकराः ॥ १०० ॥ सर्वसंक्षोभिण्याद्याश्च
तुर्दशशक्तयः शक्तिपदादिकाःपश्चिमादिविलोमतःपूज्याः ॥ ह्रींश्रींकंसंक्षोभणीशक्तिश्रीपा० इत्यादि० ॥ १०१ ॥
॥ १०२ ॥ १०३ ॥ १०४ ॥ एवंचतुर्थावरणमाराध्यमूलं ततःसर्वसौभाग्यदेचक्रेइमाश्चतुर्दशसंप्रदाययोगिन्यःपूजि

इंद्रगोपनिभारम्यामदोन्मत्ताःसभूषणाः ॥बिभ्रत्योदर्पणंपानपात्रंपाशांकुशावपि ॥ १०० ॥ पश्चि
मादिविलोमेनचतुर्थावरणस्थिताः॥३॥सर्वसंक्षोभिणीपूर्वासर्वविद्राविणीपरा॥१॥सर्वाकर्षिणिका
चान्यासर्वाह्लादकरीपुनः ॥ सर्वसंमोहिनीचापिसर्वस्तंभनकारिणी ॥२॥ सर्वजृंभणिकानामाष्टमी
सर्ववशंकरी ॥ सर्वरंजिनिकाचापिसर्वोन्मादिनिकातथा ॥ ३ ॥ सर्वार्थसाधिनीचाथसर्वसंपत्तिपू
रणी ॥ सर्वमंत्रमयीचान्त्यासर्वद्वंद्वक्षयंकरी ॥४॥ मूलेनपुष्पंदत्त्वाथवश्यमुद्रांप्रदर्शयेत् ॥सर्वसौभा
ग्यदेचक्रेसंप्रदायाभिधाइमाः॥५ ॥योगिन्यःपूजितास्तृप्तामंगलानिदिशंतुमे॥संप्रार्थ्येतिदशारेऽथ
णादिभांतार्णभूषिते॥६॥संपूज्यादशयोगिन्योजपापुष्पसमप्रभाः॥स्फुरन्मणिविभूषाढ्याःपाशांकुश
लसत्कराः॥७॥पश्चिमादिविलोमेनसाधकाभीष्टसिद्धिदाः॥सर्वसिद्धिप्रदापूर्वासर्वसंपत्प्रदाततः१०८।

॥ १०७ ॥

ताःसंत्विविचोक्त्वापुष्पांजलिंदत्त्वावश्यमुद्रांदर्शयेत् ॥ णादिदशवर्णयुतेदशारेपश्चिमादिव्युत्क्रमेणसर्वसिद्धिप्रदा
द्यदेवीपदाद्यादशपूजयेत् ॥ ह्रींश्रींणंसर्वसिद्धिप्रदादेवीश्रीपा० ॥ १०५ ॥ १०६ ॥ १०७ ॥ १०८ ॥

एवंपंचमावरणंसंपूज्यपुष्पांजलिंदत्त्वाचसर्वार्थसाधके चक्रेइमादशकुलयोगिन्यःपूजिताःसंत्विंतिसंप्रार्थ्यौन्मादमुद्रां

सर्वप्रियंकरीचान्यासर्वमंगलकारिणी ॥ सर्वकामप्रदापश्चात्सर्वदुःखविमोचनी ॥१०९॥ सर्वमृत्यु प्रशमनीसर्वविघ्ननिवारिणी॥ सर्वांगसुन्दरीचान्यासर्वसौभाग्यदायिनी ॥११०॥बिंदौपुष्पंसमर्प्या थोन्मादमुद्रांप्रदर्शयेत् ॥ सर्वार्थसाधकेचक्रेपंचमेसर्वतःस्थिताः ॥१११॥पूजिताःकुलयोगिन्यःसंतु मेभीष्टसिद्धिदाः॥ इतिसंप्रार्थ्यसंपूज्यमादिक्षांतविभूषिते ॥११२॥ परेदशारेयोगिन्यउद्यद्भास्करस न्निभाः ॥ ज्ञानमुद्राटंकपाशवरधारिकरांबुजाः॥११३॥ सर्वज्ञासर्वशक्तिश्चसर्वैश्वर्यफलप्रदा ॥सर्व ज्ञानमयीपश्चात्सर्वव्याधिविनाशिनी ॥ ११४ ॥ सर्वाधारस्वरूपाचसर्वपापहरापरा॥सर्वानंदमयी देवीसर्वरक्षास्वरूपिणी ॥ ११५॥

दर्शयेत् ॥ १०९ ॥ ११० ॥ १११ ॥ ततोपरेदशारेमादिवर्णयुतेज्ञानमुद्रावरदक्षकराः टंकपाशवामकराः उद्यद्भावे निभाः सर्वज्ञाद्याद्या दश पूजयेत् ॥ ह्रींश्रींमं सर्वज्ञादेवीश्रीपा० ॥ ११२ ॥ ११३ ॥ ११४ ॥ ११५ ॥

एवंषष्ठमावरणमभ्यर्च्य मूलेनपुष्पांजलिंदत्त्वासर्वरक्षाकरेचक्रेइमादशनिगर्भयोगिन्यःपूजिताःसंत्वितिसंप्रार्थ्यांकुश
मुद्रांदर्शयेत॥ततोष्टारेरक्तवस्त्रबाणवरदक्षकराधनुर्विद्यावामकरान्यासोक्ताअष्टवशिन्याद्याउक्तबीजपूर्विकायजेत॥
ह्रींश्रींअंआं इंईं उंऊं ऋंॠं ऌंॡं एंऐं ओंऔं अं अः वशिनीवाग्देवताश्रीपा० ॥ ११६ ॥ ११७ ॥ ११८ ॥ ११९ ॥

सर्वेप्सितार्थफलदापश्चिमादिविलोमगाः ॥ पुष्पंमूलेनदत्त्वाथोकुर्यान्मुद्रांमहांकुशाम् ॥ ११६ ॥
सर्वरक्षाकरेचक्रेनिगर्भाःपूजिताइमाः ॥ योगिन्यस्तर्पिताःसंतुममाभीष्टफलप्रदाः ॥१७॥ संप्रार्थ्यै
वमथाष्टारेदाडिमीपुष्पसन्निभाः ॥ रक्तांशुकाधनुर्बाणविद्यावरलसत्कराः ॥१८॥ अकाराद्यष्टवर्गा
द्याःपश्चिमादिविलोमतः ॥ पूजयेत्पूर्वसंप्रोक्ताबीजाद्याअष्टदेवताः॥१९॥ वशिनीचापिकौमारीमो
दिनीविमलारुणा ॥ जयिनीचापिसर्वेशीकौलिनीत्युदिताःपुरा॥१२०॥ सर्वरोगहरेचक्रेरहस्याःपू
जितामया ॥ तर्पिताःपूजिताःसन्त्वित्युक्त्वादद्यात्सुमांजलिम् ॥ २१॥ खेचरींदर्शयेन्मुद्रांसुंदरींतो
षयेत्ततः ॥ त्रिकोणेत्वकथाद्यर्णरचितेपश्चिमादितः ॥ १२२ ॥

॥ १२० ॥ एवंसप्तमावरणमिष्ट्वासर्वरोगहरेचक्रेइमाअष्टारेरहस्ययोगिन्यःपूजिताःसंत्वितिप्रार्थ्य० खेचरीमुद्रां
दर्शयेत ॥ १२१ ॥ १२२ ॥

ततोऽकथादिवर्णरचितेत्रिकोणेपश्चिमाद्यनुलोमेनचतुर्दिक्षुस्वस्वबीजपूर्वकान् जंभमोहवशस्तंभविशेषणविशिष्टाः कामेश्वरकामेश्वर्योर्बाणधनुःपाशांकुशान्पूजयेत् ॥ बीजान्याह ॥ बाणेति ॥ बाणादौपंचबाणबीजानि ॥ चापादौ सबिंदुमीनकृष्णौधकारथकारौ ॥ पाशमायेआंह्रीमितिपाशादौ ॥ अंकुशस्यादौत्वंकुशंक्रोमिति ॥ हेतिदेवता आयुधदेवताः ॥ १२३ ॥ १२४ ॥ १२५ ॥ तासांध्यानमाह ॥ नानेति ॥ स्वस्वायुधानिबाणादीनितैःसंयुताबाण

यजेत्कामेशकामेश्योर्बाणांश्चापंचपाशकम् ॥ अंकुशंचानुलोमेनचतुर्दिक्षुसमाहितः ॥ १२३ ॥
जंभमोहवशस्तंभपदाद्यान्बीजपूर्वकान् ॥ बाणबीजानिबाणादौमीनकृष्णौसबिंदुकौ ॥२४॥ चापा
दौपाशकस्यादौपाशमायेनियोजयेत् ॥ अंकुशंत्वंकुशस्यादौस्मर्तव्याहेतिदेवताः ॥२५॥ नानारत्न
विभूषाढ्याःस्वस्वायुधसमन्विताः ॥ विद्युद्दामसमानांग्योयौवनोन्मदमंथराः ॥ १२६ ॥

धराइत्यादि० ॥ प्रयोगोयथा–यांरांलांवांशांद्रांद्रींक्लींब्लूंसःकामेश्वरकामेश्वरीजंभनबाणश्रीपा० पश्चिमे ॥ धंथं कामेश्वरकामेश्वरीमोहनधनुःश्रीपा०उत्तरे ॥ आंह्रींकामेश्वरकामेश्वरीवशीकरणपाशश्रीपा०पूर्वे । क्रोंकामेश्वरकामेश्वरीस्तंभनांकुशश्रीपा०दक्षिणे ॥ १२६ ॥

अग्नीति ॥ अग्निदक्षिणवामकोणेषुकूटत्रयंपूर्वं ॥ रुद्रविष्णुब्रह्मणांशक्तयश्चतिस्रःकामेश्वरावज्रेश्वरीभगमालिनी संज्ञाःपूज्याः ॥ १२७ ॥ तासांध्यानान्याहश्लोकत्रयेण ॥ कामेति॥वामयोःपुस्तकाभये ॥ वराक्षमालेदक्षयोः ॥ उद्यन्मार्तंडोभानुस्तेनसमानाप्रभायस्याः ॥ वरपुष्पबाणौदक्षयोः ॥ इक्षुधनुरभयेवामयोः ॥ भगेति ॥ हाटकं कनकंतत्तुल्यंकांतिः ॥ ज्ञानमुद्रावरौदक्षयोः ॥ पाशांकुशौवामयोः ॥ १२८ ॥ १२९ ॥ १३० ॥ प्रयोगोयथा-

अग्न्यादिकोणत्रितयेपूज्याःकूटत्रयादिकाः॥कामेश्वरीचवज्रेशीतृतीयाभगमालिनी॥ १२७ ॥ कामेश्वरीरुद्रशक्तिःशरच्चंद्रशतप्रभा॥ स्मर्तव्यादधतीहस्तैःपुस्तकाऽभीवरस्रजः ॥ २८ ॥ वज्रेश्वरीविष्णुशक्तिरुद्यन्मार्तंडसप्रभा ॥ इक्षुचापवराभीतिपुष्पबाणलसत्करा ॥ २९ ॥ भगमालाब्रह्मशक्तिस्तप्तहाटकसप्रभा ॥ ज्ञानमुद्रांवरंपाशमंकुशंदधतीकरैः ॥ ३० ॥ एवंत्रिकोणंसंपूज्ययच्छेत्पुष्पाञ्जलिंततः॥ बीजमुद्रांप्रदर्श्याथप्रार्थयेत्सुंदरीमिदम् ॥ ३१ ॥ सर्वसिद्धिप्रदेचक्रेयोगिन्यःपूजितामया ॥ दिशंत्वतिरहस्याख्यामंगलंमेनिरंतरम् ॥ १३२ ॥

कएईलह्रींकामरूपपीठेकामेश्वरीरुद्रशक्तिश्रीपा० ॥ हसकलह्रींपूर्णगिरिपीठेवज्रेश्वरीविष्णुशक्तिश्री० ॥ सकलह्रींजालंधरपीठेभगमालिनीब्रह्मशक्तिश्रीपा० ॥ एवमष्टमावरणामेष्टासर्वसिद्धिप्रदेचक्रेमूलेनपुष्पांजलिंदत्त्वाइमा अतिरहस्ययोगिन्यःपूजिताःसंत्वितिसंप्रार्थ्यबीजमुद्रांदर्शयेत् ॥ १३१ ॥ १३२ ॥

ततोमूलविद्यांपठित्वाध्यात्वाबिंदौश्रीमात्रिपुरसुंदरीश्रीपादुकांपूजयामीतियजेत् ॥ १३३ ॥ एवंनवमावरणमारा ध्यसर्वकामप्रदेचक्रेसर्वाभीष्टदायिनिपरापररहस्ययोगिनी श्रीमात्रिपुरसुंदरीपूजितास्त्वितिसंप्रार्थ्ययोनिमुद्रां

बिन्दौसंपूजयेत्पश्चाच्छ्रीमत्रिपुरसुंदरीम् ॥ मूलविद्यांसमुच्चार्य्यध्यात्वापूर्वोक्तवर्त्मना १३३ ॥ सर्वानंदमयेचक्रेसर्वाभीष्टविधायिनीम्॥ परापररहस्याख्यायोगिनीपूजितास्तुमे ॥ ३४॥ योनिमुद्रां प्रदर्श्याथतर्पणंत्रिःसमाचरेत् ॥ धूपंदीपंचनैवेद्यमन्नैर्नानाविधैर्दिशेत् ॥ ३५ ॥वह्निंसंपूज्यपूर्वोक्तविधिनातत्रसुंदरीम् ॥ आवाह्यजुहुयाद्द्रव्यंपंचविंशतिसंख्यया ॥३६॥ श्रीचक्रस्यबलिंदद्याद्धुतशेषेनसंयुतः॥ईशानाग्नेयनैर्ऋत्यवायुकोणेषुचक्रमात्॥ ३७॥बटुकस्यचयोगिन्याःक्षेत्रेशगणनाथयोः॥ निजैर्मंत्रैःस्वमुद्राभिःपूर्वसंकीर्तितैर्मया ॥३८ ॥ प्रदक्षिणानतीःकृत्वामूलविद्यांततोयजेत्॥एवंश्रीसुंदरींनित्यंपूजयन्विजितेंद्रियः ॥१३९ ॥

प्रदर्श्यत्रिस्तर्पयित्वाधूपदीपादीनिदत्त्वाअग्नावावाह्यहुत्वोद्वासयेत् ॥ १३४ ॥ १३५ ॥ १३६ ॥ ततईशानादिकोणेषु हुतशेषेणबटुकयोगिनीक्षेत्रपालगणेशेभ्यःपूर्वोक्तैःस्वस्वमंत्रैस्तत्तन्मुद्रादर्शनपूर्वकंबलिंदद्यात् ॥ १३७ ॥ १३८ ॥ नतीर्नमस्कारान् ॥ १३९ ॥

नवावृतियुतांनवावरणैरुक्तैर्युताम् ॥ १४० ॥ प्रयोगानाह ॥ नवेति ॥ १४१ ॥चंद्रः कर्पूरम् ॥ कामाधिको भवेद्रूपेणेतिशेषः ॥ १४२ ॥ १४३ ॥ दधीति ॥ दध्नारोग्यम् ॥ आज्येनसंपदम् ॥ दुग्धेनग्रामम् ॥ मधुनाधन

नवावृतियुतांसर्वान्कामानिष्टानवाप्नुयात् ॥ अथप्रयोगावक्ष्यंतेसाधकाभीष्टसिद्धिदाः ॥ १४० ॥
नवलक्षजपेनास्यरुद्ररूपोनरोभवेत् ॥ मल्लिकामालतीपुष्पैर्होमाद्वागीशतामियात् ॥ ४१ ॥ करवी
रैर्जपापुष्पहोमान्मोहयतेजगत् ॥ चन्द्रकुंकुमकस्तूरीहोमात्कामाधिकोभवेत् ॥ ४२ ॥ चंपकैःपाट
लैर्विश्वंवशमानयतेऽचिरात् ॥ लाजाहोमोराज्यदायीमधुनोपद्रवक्षयः ॥४३॥ निशिच्छागपलैर्हो
मोरिपुसैन्यविनाशकृत् ॥ दध्याज्यदुग्धमधुभिःक्रमाद्धोमादवाप्नुयात् ॥४४॥ आरोग्यंसंपदंग्रामं
धनंशर्करयासुखम्॥कमलैर्धनसंपत्तिर्दाडिमैराजवश्यताम् ॥ ४५॥ क्षत्रियामातुलिंगैस्तुवैश्यानारं
गजैःफलैः ॥ शूद्राःकूष्मांडसंभूतैर्वश्याःस्युरचिराद्धुतैः ॥ १४६ ॥

मितिक्रमः ॥ राजवश्यतामवाप्नुयादितिपूर्वेणसंबंधः ॥ मातुलिंगैर्बीजपूरैर्हुतैःक्षत्रियावश्याः ॥ एवम
ग्रेपि ॥ १४४ ॥ १४५ ॥ १४६ ॥

॥ १४७ ॥ १४८ ॥ धराभूमिर्विशातत्तथाःप्राणिनावश्याःस्युरित्यर्थः ॥ १४९ ॥ १५० ॥ १५१ ॥ १५२ ॥ मध्येमंत्र मध्येयत्कूटत्रयंतत्रान्यवर्णयोगात्कुबेरोपासितयोर्द्वात्रिंशद्भेदास्तेग्रंथगौरवभीत्यानोक्ताः ॥ अनयैवोपासितया सर्वेष्टसिद्धेश्चमुख्यैषैवकामराजविद्या ॥ तेभेदायथा-हसकलएईलह्रीं हसकलएईलह्रीं सहकएईलह्रीं हसकह

पनसानांलक्षहोमाद्वश्यास्स्युश्चक्रवर्तिनः ॥ द्राक्षाफलैरिष्टसिद्धीरंभाभिर्मंत्रिणोवशाः ॥ १४७ ॥
नारिकेलैस्तुसंपत्तिस्तिलैःसर्वेष्टसिद्धयः ॥ गुग्गुलैर्दुःखनाशःस्यात्सर्वेष्टंशर्करागुडैः ॥४८॥ पायसैर्ध
नधान्याप्तिर्बंधूकैःप्राणिनोवशाः ॥ पक्वैश्चूतफलैर्होमाल्लक्षमात्राद्धरावशा ॥४९॥ लवणैराजिकायुक्तै
र्होमाद्दुष्टविनाशनम् ॥ कर्पूरहोमाल्लभतेवाक्पतित्वंनरोऽचिरात् ॥ ५० ॥ करंजफलहोमेनभूतप्रेता
दयोवशाः ॥ बिल्वैःस्यादतुलालक्ष्मीरिक्षुदंडैःसुखाप्तयः ॥ ५१॥ घृतहोमादीप्सिताप्तिःशांतिःस्या
त्तिलतंडुलैः ॥ किंबहूक्तेनदेवेशिसर्वेष्टंसाधितंनृणाम् ॥ ५२ ॥ मध्येकूटत्रिकेभेदावर्णान्तरनियोज
नात् ॥ बहवोन्यैर्नगदिताग्रंथगौरवभीतितः ॥ १५३ ॥

एईलह्रीं सहकहएईलह्रीं कहसहएईलह्रीं ॥ एतत्कौबेरद्वियंकूटद्वयंरामराजीयम् ॥ सहसकलह्रीं सहसकलह्रीं हसकहलह्रींसकलह्रीं ॥ एतद्वयमगस्त्योपासितम् ॥ हसकलह्रींअंतेकामराजीयेआद्यद्वयंकामराजीयं सहस

कलह्रीं ॥ एतद्द्वयंलोपामुद्रोपासितम् ॥ हसकएईलह्रींसहएकईलह्रींहसकएईलह्रीं ॥ हसकएईलह्रीं सह
कएईलह्रीं । तृतीयमीदृशमेव ॥ चान्द्रीद्वयमेतत् ॥ सकलह्रीं ॥ सकलहलह्रीं ॥ हसकलहह्रीं ॥ कएईल
हसकहलहह्रींह्रींहीलसकहलह्रीं ॥ एतद्द्वयंदुर्वासोर्चितम् ॥ तदुक्तंज्ञानार्णवे--कामराजाख्यविद्यायास्त्रिकूटेषु
वरानने ॥ यास्थिताभुवनेशानीद्विधाकुरुमहेश्वरि ॥ बिंदुहीनानादहीनादुर्वासोपासिताभवेत् ॥ संहिता
यांच--वाग्भवस्थंचतुष्कंचकामराजस्थपंचकम् ॥ शक्तिकूटंत्रिकार्यंचकामराजस्यसंलिखेत् ॥ मायास्थानेहरीवर्ण
युगलंचक्रमाल्लिखेत् ॥ दुर्वाससापूजितेयंपुरुषार्थप्रदायिनीति ॥ कएईलहरीहसकहलहरीसहलहरी ॥ एतद्द्वयं
दुर्वाससार्चितम् ॥ आद्याकामराजतुल्या ॥ सहकलह्रीं० अंत्येएतादृशेएव ॥ ऐंद्रीद्वयमेतत् ॥ सएईलह्रीं हकहक
हलह्रीं०सकलह्रीं ॥ सहसकलह्रींसहसकलकहलह्रीं ॥ आद्यमेवतृतीयम् ॥ नंदिविद्याद्वयमेतत् ॥ हसकहलह्रीं ॥
सकहसकलह्रींसहकहलह्रीं ॥ १५ ॥ हसएकलह्रींद्वयमेतद्देवस्कांदीद्वयमेतत् ॥ १६ ॥ कहएईलह्रींहकएईलह्रींसक
एईलह्रीं ॥१७॥ मानवी॥ कएकलह्रींहकहलह्रींसहकलह्रीं ॥ १८ ॥ धर्मराजी ॥ आद्यंकामराजीयं ॥ द्वितीये
तृतीयेधार्मराजीये ॥ १९ ॥ एषावारुणी ॥ कसकलह्रींहसकलह्रींसकलरह्रीं ॥ २० ॥ आग्नेयी ॥ हसकलह्रींहस
कलह्रींतृतीयमाग्नेयम् ॥ २१ ॥ एषाशैषी ॥ कएरलारह्रींहकलरहलह्रींसरकलरह्रीं ॥ २२ ॥ वायवीयम् ॥ कएईर
लह्रींहकहलह्रींसहकलरह्रीं ॥ २३ ॥ सौमीयम् ॥ कहलह्रींहकहललरह्रींसकलह्रीं ॥ २४ ॥ ऐशीयम् ॥ कएकल

ह्रीं ॥ अन्तेकामराजीयम् ॥२५॥ शाक्तीयम् ॥ आद्यंकामराजद्वयम् ॥ अन्त्यंसकलह्रीमिति ॥२६॥ रतिपूजिता॥ हसकलह्रींहकसरह्रींआद्यमेवतृतीयम् ॥ २७ ॥ जैवीयम् ॥ आद्यंकामराजीयं ॥ हकहसरह्रींहसकलह्रीं ॥ २८ ॥ ब्राह्मीयं ॥ सहलह्रींसहकलहलह्रीं ॥ २९ ॥ वैष्णवीयम् ॥ आद्यंकामराजीयं ॥ हकहलह्रींहसकलह्रीं ॥ ३० ॥ उन्मनीयं ॥ हसकलह्रींसहकलह्रींकलह्रींसकलहलह्रीं ॥३१॥ सौरी ॥ एतेभेदाः ॥ एषांश्रीबीजादिभिःसंपुटिताः॥

अपरीक्षितशिष्यायनदेयंकदाचन ॥ पुत्रायवासुशिष्यायदत्त्वाभीष्टप्रदायिनी ॥१५४ ॥ गोपाल सुंदरींवक्ष्येभोगमोक्षप्रदायिकाम् ॥ मायारमाचित्तजन्माकृष्णायेतिपदंततः॥५५॥ आद्यंवाक्कूटमुच्चार्य्यगोविंदायपदंवदेत् ॥ द्वितीयंतुततःकूटंगोपीजनपदंततः॥५६॥ वल्लभायपदान्तंतुतृतीयंकूटमुच्चरेत् ॥ स्वाहांतावह्नियुग्माणांस्मृतागोपालसुंदरी ॥ ५७॥ विद्यायाद्यौमुनीउक्तौविधात्रानंदभैरवौ ॥ छंदस्तुदैवीगायत्रीदेवतासुंदरीयुता ॥ १५८ ॥

कामराजवदेवउपासनमपि ॥ १५३ ॥ १५४ ॥ गोपालसुन्दरीमिति ॥ मायेति ॥ मायाह्रीं ॥ रमाश्रीं ॥ चित्तजन्माक्लीं ॥ कृष्णाय ॥ १५५ ॥ प्रथमकूटं ॥ गोविंदायद्वितीयंकूटं ॥ गोपीजनवल्लभाय तृतीयं ॥ स्वाहांता ॥ वह्नियुग्माणांत्रयोविंशतिवर्णा ॥ १५६ ॥ १५७ ॥ १५८ ॥

१ अस्यगोपालसुंदरीमंत्रस्य । विधात्रानंदभैरवौऋषी । देवीगायत्रीछंदः । गोपालसुंदरीदेवता । क्लींबीजं । स्वाहाशक्तिः । ममाभीष्ट० ।

षडंगमाह ॥ मायेति ॥ १५९ ॥ १६० ॥ वर्णन्यासमाह ॥ मूर्ध्नीति ॥ हृदादिबाह्वंतःस्थितिन्यासः ॥ पादादिमूर्द्धांतःसंहारन्यासः ॥ एवंन्यासत्रयंकृत्वा पुनःसृष्टिस्थितिन्यासौकुर्यात् ॥ १६१ ॥ १६२ ॥ १६३ ॥ कर



गोपालोमन्मथोबीजंशक्तिःपावकवल्लभा ॥ मायाश्रीर्मन्मथैर्हृत्स्यात्कृष्णायशिरईरितम् ॥१५९॥
गोविंदायशिखागोपीजनेतिकवचंमतम् ॥ वल्लभायस्मृतंनेत्रमस्त्रंपावकभार्यया ॥ ६० ॥ मूर्ध्निभालेभ्रुवोरक्ष्णोःकर्णयोर्नासयोर्मुखे ॥ चिबुकेचगलेबाह्वोर्हृदयेजठरेन्यसेत् ॥ ६१ ॥ नाभौलिंगगुदेसक्थ्नोर्जानुनोर्जंघयोरपि ॥ गुल्फयोःपादयोर्वर्णान्कूटत्रयविवर्जितान् ॥६२॥ सृष्टिन्यासोऽयमुदितोहृदाद्यंसांतिकास्थितिः ॥ संहारोंघ्र्यादिमूर्द्धांतःपुनःसृष्टिंस्थितिंचरेत् ॥ ६३ ॥ करशुद्ध्यासनन्यासौन्यासंवाग्देवताभिधम् ॥ कृत्वापूर्वोदितान्कूटत्रयंकास्यहृदिन्यसेत् ॥ ६४ ॥ कूटत्रयद्विरावृत्त्यापडंगंपुनराचरेत् ॥ कमलावसुधायुक्तंध्यायेच्छ्रीचक्रगंहरिम् ॥ १६५ ॥

शुद्धिन्यासासनन्यासवाग्देवतान्यासान्सुंदर्युक्तान्कृत्वामूर्धमुखहृत्सुकूटत्रयंन्यसेत् ॥ १६४ ॥ १६५ ॥

ध्यानमाह ॥ क्षीरेति ॥ क्षीरसमुद्रस्यकल्पद्रुमवनेविलसन्रत्नयुक्योमंडपस्तदंतःप्रोद्यतयतश्रीपीठंतत्रस्थितमष्टकरं पद्मचक्रबाणवेणुदक्षकरंचापपाशांकुशवीणावामकरमवनिमाभ्यांधरालक्ष्मीभ्यां शोभितंब्रह्मादिसुरैःस्तूयमानंगो

क्षीरांभोधिस्थकल्पद्रूमवनविलसद्रत्नयुङ्मंडपांतःप्रोद्यच्छ्रीपीठसंस्थंकरधृतजलजारीक्षुचापांकुशेषुम् ॥ पाशंवीणांसुवेणुंदधतमवनिमाशोभितंरक्तकांतिंध्यायेद्गोपालमीशंविधिमुखविबुधैरीड्यमानंसमंतात् ॥ १६६ ॥एवंध्यात्वाजपेल्लक्षंदशांशंपायसांधसा ॥ जुहुयाद्वैष्णवेपीठेपूजयेत्सुंदरींहरिम् ॥ ६७ ॥ आदावंगानिसंपूज्यप्रागाद्याशासुपूजयेत् ॥ वासुदेवंसंकर्षणंप्रद्युम्नमनिरुद्धकम् ॥६८॥ पूज्यावह्न्यादिकोणेषुशांतिःश्रीश्चसरस्वती ॥ रतिःपुनर्दिक्षुपूज्यारुक्मिणीसत्यभामिका ॥६९ ॥ कालिंदीजाबवत्याख्यामित्रविंदासुनंदया ॥ सुलक्षणानाग्निजितीततोर्च्यांनिधयोपिच ॥ ७० ॥ महापद्मश्चपद्मश्चशंखोमकरकच्छपौ ॥मुकुंदकुंदनीलाश्चखर्वश्चनिधयोनव॥७१॥ततश्चसुंदरीप्रोक्तावृतिपूजांसमाचरेत् ॥ प्रयोगानपितत्रोक्तान्कुर्यादिष्टप्रसिद्धये ॥ १७२ ॥

पालंध्यायेत् ॥ १६६ ॥ १६७ ॥ १६८ ॥ १६९ ॥ १७० ॥ विधीनाह ॥ महापद्मश्चेति ॥ १७१ ॥ ततःसुंदरीमंत्रोक्तानिनवावरणानियजेत् ॥ १७२ ॥

ब्रह्मणःसायुज्यंब्रह्मरूपंप्राप्नोति ॥ १७३ ॥ इतिश्रीमंत्रमहोदधिव्याख्यायांनौकायांसुंदरीपूजननामद्वादशस्तरंगः ॥ १२ ॥ श्रीहनुमतोमंत्रान्वक्तुंप्रतिजानीते ॥ अथेति ॥ मंत्रमुद्धरति ॥ इंद्रेति ॥ वराहोहः इंद्रस्वरऔबिंदुस्ताभ्यांयुतःह्रौं ॥ हसफस्वरूपम् ॥ अग्नीरःएते ॥ १ ॥ झिंटीशाबिंदुयुताः एबिंदुयुताः ॥ तेनहस्फ्रें ॥ गदीखः ॥

एवंयोभजतेनित्यंश्रीमद्गोपालसुंदरीम् ॥ सर्वान्कामानवाप्यांतेसायुज्यंब्रह्मणोव्रजेत् ॥१७३॥इति
श्रीमहीधरविरचितेमंत्रमहोदधौश्रीचक्रस्थत्रिपुरसुंदरीगोपालसुंदर्योःपूजननामद्वादशस्तरंगः॥१२॥
अथोच्यंतेहनुमतोमंत्राःसर्वेष्टसिद्धये ॥ इन्द्रस्वरेंदुसंयुक्तोवराहोहसफाग्नयः ॥ १ ॥ झिंटीशबिंदुसं
युक्ताद्वितीयंबीजमीरितम् ॥ गदीपांताग्निरुद्रेंदुसंयुतःस्यात्तृतीयकम्॥२॥ हसरामनुचंद्राढ्याश्चतु
र्थंहसखाःफराः ॥ शिवेंद्राढ्याः पंचमःस्याद्धसौमन्बिंदुगौपरम् ॥ ३ ॥

पांताग्निरुद्रेंदुयुतः ॥ पांतःफःअग्नीरःरुद्रए ॥ इंदुर्बिंदुःतैर्युतः ॥ ख्फ्रें ॥ २ ॥ हसरा मनुचंद्राढ्याः औबिंदुयुताः ह्स्रौं ॥ हसखफराःशिवेंद्राढ्याःएबिंदुयुताः ॥ तेनहस्ख्फ्रें ॥ हसौमान्बिन्दुगौ औबिंदुयुतौह्सौं ॥ परंततः॥ ३ ॥

ङेयुतोहनुमान्हनुमते ॥ हार्दंनमः ॥ यथा—ह्रौंह्स्फ्रेंख्फ्रेंह्स्रौंह्स्ख्फेंह्सौंहनुमतेनमः ॥ ४ ॥ षष्ठंह्सौमितिबीजं ॥ द्वितीयंह्स्फ्रेमितिशक्तिः ॥ ह्रौंहृत् ॥ ह्स्फ्रेंशिरः ॥ ख्फ्रेंशिखेत्यादि० ॥ वर्णन्यासमाह ॥ मूर्ध्नीति ॥ एकैकंस वंत्र०

ङेयुतोहनुमान्हार्दंमंत्रोयंद्वादशाक्षरः ॥ रामचंद्रोमुनिश्चास्यजगतीछंदईरितम् ॥ ४ ॥ हनुमान्देवताबीजंषष्ठंशक्तिर्द्वितीयकम् ॥ षड्बीजैरंगषट्कंस्यान्मूर्ध्निभालेदृशोर्मुखे ॥ ५ ॥ कंठेचबाहुद्वितये हृदिकुक्षौचनाभितः॥लिंगेजानुद्वयेपादद्वयेवर्णान्क्रमान्न्यसेत् ॥ ६॥ षड्बीजानिपदद्वंद्वेमूर्ध्निभालेमुखेहृदि ॥ नाभावूर्वोर्जंघयोश्चपादयोर्विन्यसेत्क्रमात् ॥७॥बालार्कायुततेजसंत्रिभुवनप्रक्षोभकंसुन्दरंसुग्रीवादिसमस्तवानरगणैःसंसेव्यपादाम्बुजम् ॥ नादेनैवसमस्तराक्षसगणान्संत्रासयंतंप्रभुंश्रीमद्रामपदांबुजस्मृतिरतंध्यायामिवातात्मजम् ॥ ८ ॥ एवंध्यात्वाजपेदर्कसहस्रंजितमानसः ॥ दशांशंजुहुयाद्व्रीहीन्पयोदध्याज्यसंयुतान् ॥ ९ ॥

॥ ५ ॥ ६ ॥ पदन्यासमाह ॥ षडिति ॥ पदद्वंद्वंहनुमतेनमइति ॥ ७ ॥ ध्यानमाह ॥ बालेति ॥ वातात्मजंहनुमंतम् ॥ ८ ॥ ९ ॥

१ अस्यश्रीहनुमन्मंत्रस्य रामचंद्रऋषिः । जगतीच्छंदः । हनुमान्देवता । ह्सौंबीजं । ह्स्फ्रेंशक्तिर्ममाभीष्टसिद्ध्यर्थेजपेविनियोगः ।

दलेषुतदाह्वयान् हनुमन्नामानि ॥ १० ॥ तानाह ॥ रामभक्तइत्यादि ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

विमलादियुतेपीठेपूजाकार्याहनूमतः ॥ केसरेष्वंगपूजास्याद्दलेष्वन्यांस्तदाह्वयान् ॥ १० ॥ रामभक्तोमहातेजाकपिराजोमहाबलः ॥ द्रोणाद्रिहारकोमेरुपीठकार्चनकारकः ॥ ११ ॥ दक्षिणाशाभास्करश्चसर्वविघ्ननिवारकः ॥ एवंनामानिसंपूज्यदलाग्रेषुचवानरान् ॥१२॥ सुग्रीवमंगदंनीलंजांबवंतंनलंतथा ॥ सुषेणंद्विविदंमैंदंपूजयेद्दिक्पतीनपि ॥ १३ ॥ एवंसिद्धेमनौमंत्रीस्वपरेष्टंप्रसाधयेत् ॥ कदलीबीजपूराम्रफलैर्हुत्वासहस्रकम् ॥ १४ ॥ द्वाविंशतिब्रह्मचारिविप्रान्संभोजयेदथ ॥ एवंकृतेमहाभूतविषचौराद्युपद्रवाः ॥१५॥ नश्यंतिक्षणमात्रेणविद्वेषिग्रहदानवाः ॥ अष्टोत्तरशतंवारिमंत्रितंविषनाशनम् ॥ १६ ॥ रात्रौनवशतंमंत्रंजपेद्दशदिनावधि ॥ योनरस्तस्यनश्यंतिराजशत्रूत्थभीतयः ॥ १७ ॥ अभिचारोत्थभूतोत्थज्वरेतन्मंत्रितैर्जलैः ॥ भस्मभिःसलिलैर्वापिताडयेज्ज्वरिणंक्रुधा ॥ १८॥ दिनत्रयाज्ज्वरान्मुक्तःससुखंलभतेनरः ॥ तन्मंत्रितौषधंजग्ध्वानीरोगोजायतेध्रुवम् ॥ ॥ १९ ॥ तन्मंत्रितंपयःपीत्वायोद्धुंगच्छेन्मनुंजपन् ॥ तज्जप्तभस्मलिप्तांगःशस्त्रसंघैर्नबाध्यते ॥२०॥

॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

शस्त्रक्षतादयोवारत्रयमंत्रितेनभस्मनामार्जिताअचिराच्छुष्यंतिनश्यंति ॥ २१ ॥ २२ ॥ २३ ॥ देहचंदनंदेहेघर्षतंय
च्चंदनंतेनयुतं भस्मांबुचमंत्रितंयस्मैदीयतेसवश्यःस्यात् ॥ २४॥ ईशानेत्यादितद्गृहंचिरमित्यंतएकःप्रयोगः ॥ भूतां

शस्त्रक्षतंव्रणःशोफोलूतास्फोटोपिभस्मना ॥ त्रिमंत्रितेनसंस्पृष्टाःशुष्यंत्यचिरतोनृणाम् ॥ २१ ॥
सूर्य्यास्तमयमारभ्यजपेत्सूर्योदयावधि ॥ कीलकंभस्मचादायसप्ताहावधिसंयतः ॥ २२ ॥ निखने
द्भस्मकीलौतौविद्विषांद्वार्य्यलक्षितम् ॥ विद्वेषमिथआपन्नाःपलायंतेऽरयोऽचिरात्॥२३॥अभिमंत्रि
तभस्माम्बुदेहचंदनसंयुतम् ॥ खाद्यादियोजितंयस्मैदीयतेसचदासवत्॥२४॥क्रूराश्चजंतवोनेनभवं
तिविधिनावशाः ॥ ईशानदिक्स्थमूलेनभूतांकुशतरोःशुभाम् ॥ २५॥ अंगुष्ठमात्रांप्रतिमांप्रविधायह
नूमतः ॥ प्राणसंस्थापनंकृत्वासिंदूरैःपारिपूज्यच॥२६ ॥ गृहस्याभिमुखेद्वारेनिखनेन्मंत्रमुच्चरन् ॥
भूताभिचारचौराग्निविषरोगनृपोद्भवाः ॥ २७ ॥ संजायंतेगृहेतस्मिन्नकदाचिदुपद्रवाः ॥ प्रत्यहंधन
पुत्राद्यैरेधतेतद्गृहंचिरम् ॥ २८ ॥

कुशतरोःकरंजस्यअरिष्टस्यईशानदिशिस्थितेनमूलेनांगुष्ठमितांहनुमत्प्रतिमांकृत्वाप्राणान्संस्थाप्यासिंदूरैरभ्यर्च्यग
गृहद्वारेनिखन्यतेतत्रसर्वोपद्रवनाशस्तद्वृद्धिश्च ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

॥ २९ ॥ ३० ॥ ३१ ॥ शिवाविर्त शिवेनापिराक्षितं शत्रुमेवंकुर्वन्हन्यात् ॥ अर्द्धचंद्रेत्यादिरिपुमुद्धतामित्यंतरकोमा

निशिश्मशानभूमिस्थौभस्मनामृत्स्नयापिवा ॥ शत्रोःप्रतिकृतिंकृत्वाहृदिनामसमालिखेत्॥२९॥
कृतप्राणप्रतिष्ठांतांभिंद्याच्छस्त्रैर्मनुंजपन् ॥ मंत्रांतेप्रोच्चरेच्छत्रोर्नामछिंधिचभिंधिच ॥ ३० ॥ मारये
तिच[illegible]स्यां[illegible]दंतैरोष्ठंनिपीड्यच ॥ पाण्योस्तलेप्रपीड्याथत्यक्त्वातांसदनंव्रजेत् ॥ ३१ ॥ एवंसप्त
दिनंकुर्वन्हन्याच्छत्रुंशिवावितम्॥अर्द्धचंद्राकृतौकुंडेस्थंडिलेवाहुतंचरेत् ॥३२ ॥ मुक्तकेशःश्मशा
नस्थेलवणैराजिकायुतैः ॥ उन्मत्तफलपुष्पैश्चनखरोमविषैरपि ॥ ३३ ॥ काककौशिकगृध्राणांपक्षैः
श्लेष्मातकाक्षजैः ॥ समिद्भिश्चत्रिशतंदक्षिणाशामुखोनिशि ॥ ३४ ॥ सप्तघस्रानिदंकुर्वन्मारयेद्रिपु
मुद्धतम् ॥ शतषट्कंजपेद्रात्रौश्मशानेदिवसत्रयम् ॥ ३५ ॥ततोवेतालउत्थायवदेद्भाविशुभाशुभम् ॥
उदितंकुरुतेसर्वंकिंकरीभूयमंत्रिणः ॥ ३६ ॥

॥११५

रणप्रयोगः ॥ उन्मत्तोधत्तूरः ॥ श्लेष्मातकश्चिक्कणफलोवृक्षः ॥ अक्षोबिभीतकस्तदुत्थसामीद्भिश्चहुतंचरेज्जुहुयात्सप्त
घस्रान् दिवसान् ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥

॥ ३७ ॥ ३८ ॥ पराधीनोबद्धोनिगडाच्छृंखलातोमुच्यते ॥ विद्वेषणादीनिविद्वेषमारणोच्चाटान्तत्कृतपल्लवांलि
खन्नेवंकुर्यात् ॥ अमुकंद्वेषय २ इतिद्वेष्ये मारय २ इतिमारणे इत्यादिपल्लवलेखनम् ॥ ३९ ॥ ४० ॥ कुबेराक्षः

हनुमत्प्रतिमांभूमौविलिखेत्तत्पुरोमनून् ॥ साध्यनामद्वितीयांतंविमोचयविमोचय ॥ ३७ तत्सर्वंमार्जये
द्वामहस्तेनाथपुनर्लिखेत् ॥ एवमष्टोत्तरशतंलिखित्वामार्जयेत्पुनः ॥ ३८ ॥ एवंकृतेपराधीनोमुच्यते
निगडात्क्षणात् ॥ एवंविद्वेषणादीनिकुर्यात्तत्पल्लवंलिखन् ॥ ३९ ॥ वश्यार्थेसर्षपैर्होमोविद्वेषकरवीर
जैः ॥ कुसुमैरिध्मकाष्ठैर्वाजीरकैर्मरिचैरपि ॥ ४० ॥ ज्वरेदूर्वागुडूचीभिर्दध्नाक्षीरेणवाघृतैः ॥ शूलेहोमः
कुबेराक्षैरेरंडसमिधातथा ॥ ४१ ॥ तैलाक्ताभिश्चनिर्गुंडीसमिद्भिर्वाप्रयत्नतः ॥ सौभाग्येचंदनैश्चंद्रैरोचनै
लालवंगकैः ॥ ४२ ॥ सुगंधिपुष्पैर्वस्त्राप्त्यैतत्तद्धान्यैस्तदाप्तये ॥ तत्पादरजसाराजीलवणाक्तेनमृत्य
वे ॥ ४३ ॥ किंबहूक्त्वाविषेव्याधौशांतौमोहेचमारणे ॥ विवादेस्तंभनेद्यूतभूतभीतौचसंकटे ॥ ४४ ॥
वश्येयुद्धेनृपद्वारेसमरेचौरसंकटे ॥ मंत्रोयंसाधितोदद्यादिष्टसिद्धिंध्रुवंनृणाम् ॥ ४५ ॥

सूक्ष्मकणास्तिक्तक्षुपाविशेषः ॥ ४१ ॥ ४२ ॥ यद्धान्यैर्होमस्तदाप्तिः ॥ राजीलवणयुतेन यत्पादरजसाहूयतेसाम्रि
यते ॥ ४३ ॥ ४४ ॥ ४५ ॥

मंत्रमाह ॥ वलयेति ॥ पुच्छाकारंवलयत्रयंविलिख्यमध्येआमितिबीजेनवेष्टितंसाध्यनामालिखेत् ॥ तदुपर्यष्टदले हुहुमिति ॥ ४६ ॥ ४७ ॥ बहिरेकंवलयंकृत्वोपरिचतुरस्रंकृत्वातदग्राणिसंवर्ध्यतत्रत्रिशूलानिकृत्वात्रिशूलेषुक्रोमि

वक्ष्येहनुमतोयंत्रंसर्वसिद्धिप्रदायकम् ॥ वलयत्रितयंलेख्यंपुच्छाकारसमन्वितम् ॥४६॥ साध्यनाम लिखेन्मध्येपाशबीजप्रवेष्टितम् ॥ उपर्य्यष्टदलंकृत्वावर्मपत्रेषुसंलिखेत् ॥४७॥वलयंबहिरालिख्यत द्बहिश्चतुरस्रकम् ॥ चतुरस्रस्यरेखाग्रेत्रिशूलानिसमालिखेत्॥४८॥भूपुरस्याष्टवज्रेषुह्सौबीजंतुलिखे त्ततः॥ कोणेष्वंकुशमालिख्यमालामंत्रेणवेष्टयेत् ॥ ४९ ॥ तत्सर्वंवेष्टयेद्यंत्रंवलयत्रितयेनच ॥ वस्त्रे शिलायांफलकेताम्रपात्रेथकुड्यके ॥५०॥ भूर्जेवाताडपत्रेवारोचनानाभिकुंकुमैः ॥ यंत्रमेतत्समालि ख्यत्यक्ताशोब्रह्मचर्य्यवान् ॥५१॥ कपेःप्राणान्प्रतिष्ठाप्यपूजयेत्तंयथाविधि ॥ सर्वदुःखनिवृत्त्यैतद्यं त्रमात्मनिधारयेत् ॥५२॥ ज्वरमार्य्यभिचारघ्नंसर्वोपद्रवशांतिकृत् ॥ योषितामपिबालानांधृतंजन मनोहरम् ॥ ५३ ॥

ति वज्रेषुह्सौमिति विलिख्यतन्मालामंत्रेणवक्ष्यमाणेनसंवेष्ट्यतत्पुनर्वलयत्रयेणवेष्टयेत् ॥ ४८ ॥ ४९ ॥ ५० ॥ नाभिःकस्तूरी ॥ त्यक्ताशउपवासी ॥ ५१ ॥ ५२ ॥ ५३ ॥

मालामंत्रमाह ॥ प्रणवइति ॥ वाक्ऐं ॥ हरिप्रियाश्रीं ॥ मायादीर्घत्रयान्विता ह्रांह्रींह्रूं ॥ पूर्वोक्तंमूलमंत्रस्थम् ॥

मालामंत्रमथोवक्ष्येप्रणवोवाग्घरिप्रिया ॥ दीर्घत्रयान्वितामायापूर्वोक्तंकूटपंचकम् ॥ ५४ ॥
तारोनमोहनुमतेप्रकटांतेपराक्रम ॥ आक्रांतदिङ्मंडलतोयशोवीतिचतानच ॥ ५५ ॥ धवलीकृतव
र्णान्तेजगत्त्रितयवज्रच ॥ देहज्वलदग्निसूर्यकोटयन्तेतुसमप्रभ॥ ५६ ॥तनूरुहपदंरुद्रावतारपदमीर
येत् ॥ लंकापुरीदहांतेनोदधिलंघनवर्णकाः ॥ ५७ ॥ दशग्रीवशिरःपश्चात्कृतांतकपदंततः ॥ सीता
श्वासनवाय्वंतेसुतशब्दमुदीरयेत् ॥ ५८॥ अंजनागर्भसंभूतश्रीरामांतेतुलक्ष्मणा ॥ नंदकांतेरकपिच
सैन्यप्राकारवर्णकाः ॥ ५९ ॥ सुग्रीवसख्यकावर्णारणवालिनिबर्हण॥कारणद्रोणपर्वांतेतोत्पाटनप
दंवदेत् ॥ ६० ॥ अशोकवनवीत्यंतेदारणाक्षकुमारक॥ च्छेदनांतेवनपदंरक्षाकरसमूहच ॥ ६१ ॥
विभंजनांतेब्रह्मास्त्रब्रह्मशक्तिग्रसेतिन ॥ लक्ष्मणांतेशक्तिभेदनिवारणपदंपुनः ॥ ६२ ॥ विशल्यौषधि
वर्णांतेसमानयनवर्णकाः ॥ बालोदितांतेभान्वंतेमंडलग्रसनेतिच ॥ ६३ ॥मेघनादेतिहोमांतेविध्वं
सनपदंवदेत् ॥ इन्द्रजिद्वधकारांतेणसीतारक्षकेतिच ॥ ६४ ॥

॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥

॥ ६५ ॥ ६६ ॥ ६७ ॥ अत्रिःदः वायुःयः ॥ स्वस्वरूपमन्यत् ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥७२॥७३॥७४॥ ७५॥७६॥

राक्षसीसंघवणांतेविदारणचकुंभच ॥ कर्णादिवधशब्दांतेपरायणपदंवदेत् ॥ ६५ ॥ श्रीरामभक्तिश
ब्दांतेतत्परेतिसमुद्रच ॥ व्योमद्रुमलंघनेतिमहासामर्थ्यमेतिच ॥ ६६ ॥ हातेजःपुंजवीत्यंतेराजमा
नपदंपुनः ॥ स्वामिवचनसंपादिताजुंनांतेचसंयुग ॥६७॥ सहायांतेकुमारेतिब्रह्मचारिन्पदंवदेत् ॥
गंभीरशब्दोऽत्रिर्वायुर्दक्षिणाशापदंपुनः ॥ ६८ ॥ मार्तंडमेरुशब्दांतेपर्वतेतिपदंवदेत् ॥पीठिकार्चन
शब्दांतेसकलेतिपदंपुनः ॥ ६९ ॥ मंत्रागमाचार्य्यममसर्वग्रहविनाशन॥ सर्वज्वरोच्चाटनेतिसर्ववि
षविनाशन ॥ ७० ॥ सर्वापत्तिनिवारणसर्वदुष्टेतिसंपठेत् ॥निबर्हणपदंसर्वव्याघ्रादिभयतत्परम् ॥
॥ ७१ ॥ निवारणसर्वशत्रुच्छेदनेतिपदंमम ॥ परस्यचत्रिभुवनपुंस्त्रीनपुंसकात्मकम् ॥ ७२ ॥ सर्वं
जीवपदंपश्चाज्जातंवशययुग्मकम् ॥ ममाशाकारकंपश्चात्संपादयपदद्वयम् ॥ ७३ ॥ नानानामपदं
धेयान्सर्वान्राज्ञःससंपठेत् ॥ परिवारान्ममेत्यंतेसेवकान्कुरुयुग्मकम् ॥ ७४ ॥ सर्वशस्त्रास्त्रवीत्यंते
षाणिविध्वंसयद्वयम् ॥ मायादीर्घत्रयोपेताहात्रयंचैहियुग्मकम्॥७५॥विलोमपंचकूटानिसर्वशत्रू
न्हनद्वयम् ॥ परदांतेलानिपरसैन्यानिक्षोभयद्वयम् ॥ ७६ ॥

॥ ७७ ॥ ७८ ॥ ७९ ॥ चतुर्विंशतिश्लोकैर्निष्पन्नोमालामंत्रो यथा–ॐऐंश्रींह्रांह्रींह्रूंह्रौंह्स्फ्रेंख्फ्रेंह्स्रौंह्स्ख्फ्रेंह्सौं ॐनमोहनुमते प्रकटपराक्रमआक्रांतदिङ्मंडलयशोवितानधवलीकृतजगत्रितयवज्रदेहज्वलदग्निसूर्यकोटिसमप्रभ तनूरुहरुद्रावतार लंकापुरीदहनोदधिलंघनदशग्रीवशिरःकृतांतकसीताश्वासनवायुसुतांजनागर्भसंभूतश्रीरामलक्ष्मणानंदकरकपिसैन्यप्राकारसुग्रीवसख्यकारणवालिनिबर्हणकारणद्रोणपर्वतोत्पाटनाशोकवनविदारणाक्षकुमारकच्छेदनवनरक्षाकरसमूहविभंजनब्रह्मास्त्रब्रह्मशक्तिग्रसनलक्ष्मणशक्तिभेदनिवारणाविशल्यौषधिसमानयनबालोदि

ममसर्वंकार्य्यंजातंसाधयद्वितयंततः ॥ सर्वदुष्टदुर्जनांतेमुखानिकीलयद्वयम् ॥ ७७ ॥ घेत्रयंहात्रयं वर्मत्रितयंफट्त्रयंततः ॥ वह्निप्रियांतोमंत्रोयंमालासज्ञोखिलेष्टदः ॥७८॥ अष्टाशीत्युत्तराःपंचशत वर्णामनोःस्मृताः॥महोपद्रवसंपातेस्मृतोयंदुःखनाशनः ॥७९॥ द्वादशार्णांतिमान्वर्णान्षट्त्यक्त्वै कंतथादिमम् ॥ पंचकूटात्मकोमंत्रोनिखिलाभीष्टसाधकः ॥ ८० ॥

तभानुमंडलग्रसनमेघनादहोमविध्वंसनइंद्रजिद्वधकारणसीतारक्षकराक्षसीसंघविदारणकुंभकर्णादिवधपरायण श्रीरामभक्तितत्परसमुद्रव्योमद्रुमलंघनमहासामर्थ्यमहातेजःपुंजविराजमानस्वामिवचनसंपादितार्जुनसंयुगसहाय कुमारब्रह्मचारिन्गंभीरशब्दोदयदक्षिणाशामार्तंडमेरुपर्वतपीठिकार्चनसकलमंत्रागमाचार्यममसर्वग्रहविनाशनसर्वज्वरोच्चाटनसर्वविषविनाशनसर्वापत्तिनिवारणसर्वदुष्टनिबर्हणसर्वव्याघ्रादिभयनिवारणसर्वशत्रुच्छेदनममपरस्य

चत्रिभुवनपुंस्त्रीनपुंसकात्मकसर्वजीवजातंवशय २ममाज्ञाकारकंसंपादय२नानानामधेयान्सर्वान्राज्ञःसपरिवारान्म
मसेवकान्कुरु २ सर्वशस्त्रास्त्रविषाणिविध्वंसय२ह्रांह्रींह्रूंह्रां३एह्येहिहसौंहस्ख्फ्रेंहस्रौंख्फ्रेंहस्फ्रेंहौंसर्वशत्रून्हन २पर
दलानिपरसैन्यानिक्षोभय२ममसर्वकार्यजातंसाधय २ सर्वदुष्टदुर्जनमुखानिकीलय २ घे ३ हा ३ हुं ३ फट् ३ स्वा
हामालामंत्रोयमष्टाशीत्यधिकपंचशतवर्णः ( ५८८ ) ॥ मंत्रांतरमाह ॥ द्वादशेति ॥ द्वादशाक्षरस्यांतिमानषड्

मुनीरामोथगायत्रीछंदोदेवःकपीश्वरः ॥ पंचबीजैःसमस्तेनषडंगंमुनिभिःस्मृतम् ॥ ८१ ॥ रामदूतो
लक्ष्मणांतेप्राणदातांजनासुतः ॥ सीताशोकविनाशोथलंकाप्रासादभंजनः ॥ ८२ ॥ हनूमदाद्याः
पंचैतेबीजाद्याङेसमन्विताः ॥ षडंगमंत्राःसंदिष्टाध्यानपूजादिपूर्ववत् ॥ ८३ ॥

वर्णान् हनुमतेनमइति ॥ प्रथममेकंहौमितित्यक्त्वाशेषःपंचार्णोमंत्रः—हस्फ्रेंख्फ्रेंहस्रौंहस्ख्फ्रेंहसौमिति ॥ ८० ॥
॥ ८१ ॥ षडंगमाह ॥ रामदूतइति ॥ हनुमदाद्याश्चतुर्थ्यंताबीजपूर्वाःषडंगमंत्राः ॥ यथा—हस्फ्रेंहनुमतेहृत् ॥
ख्फ्रेंरामभक्तायशिरः ॥ हस्रौंलक्ष्मणप्राणदात्रेशिखेत्यादि० ॥ ८२ ॥ पूर्ववद्द्वादशवर्णवत् ॥ ८३ ॥

१ अस्यहनुमत्पंचकूटमंत्रस्यरामचंद्रऋषिःगायत्रीछंदःकपीश्वरोदेवताममाभीष्टसिद्ध्यर्थेजपेविनियोगः ।

मंत्रांतरमाह ॥ तारइति ॥ तारॐ ॥ वाक्ऐं ॥ कमलाश्रीं ॥ मायादीर्घत्रयाद्या ह्रांह्रींह्रूं ॥ पंचकूटानिचइदानी मुक्तानि ॥ रुद्रार्णएकादशाक्षरः ॥ ८४ ॥ मंत्रांतरमाह ॥ हृदयमिति ॥ तद्वत् ॥ ङेंतोनमोभगवतेआंजनेयायम

तारोवाक्कमलामायादीर्घत्रयसमन्विताः ॥ पंचकूटानिमंत्रोयंरुद्रार्णोऽभीष्टसिद्धिदः ॥ ८४ ॥ अर्च नापूर्ववच्चास्यपरोमंत्रोभिधीयते ॥ हृदयंभगवान्ङेंतंआंजनेयमहाबलौ ॥ ८५॥तद्वद्वह्निप्रियांतोयं मनुरष्टादशाक्षरः ॥ मुनिरीश्वरएवास्यानुष्टुप्छंदःसमीरितम् ॥ ८६ ॥ हनूमान्देवताबीजहुंशक्तिर्व ह्निवल्लभा ॥ आंजनेयोरुद्रमूर्तिर्वायुपुत्रस्तथैवच ॥ ८७ ॥ अग्निगर्भोरामदूतोब्रह्मास्त्रविनिवारणः ॥ एतैर्ङेंतैःषडंगानिकृत्वाध्यायेत्कपीश्वरम् ॥८८ ॥दहनतप्तसुवर्णसमप्रभंभयहरंहृदयेविहितांजलिम् ॥ श्रवणकुंडलशोभिमुखांबुजंनमतवानरराजमिहाद्भुतम् ॥८९॥अयुतंप्रजपेन्मंत्रंदशांशंजुहुयात्तिलैः ॥ वैष्णवेपूजयेत्पीठेपूर्ववत्कपिनायकम् ॥ ९० ॥ जितेंद्रियोनक्तभोजीप्रत्यहंसाष्टकंशतम्॥जपित्वा क्षुद्ररोगेभ्योमुच्यतेदिवसत्रयात् ॥ ९१ ॥

हाबलायस्वाहेति ॥ षडंगमाह ॥ आंजनेयइति ॥ आंजनेयायहृत् ॥ रुद्रमूर्तयेशिरइत्यादि० ॥ ८५ ॥ ८६ ॥ ॥ ८७ ॥ ८८ ॥ ध्यानमाह ॥ दहनेति ॥ ८९ ॥ ९० ॥ प्रयोगानाह ॥ जितेंद्रियइति ॥ ९१ ॥

---

१ ॐऐंश्रींह्रांह्रींह्रूंह्स्फ्रेंख्फ्रेंह्स्रौंह्स्ख्फ्रेंह्सौं ।

॥ ९२ ॥९३॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ध्रुवंओंकारः ॥ ९८ ॥ उदररोगनाशकमंत्रमाह ॥ पवनेति ॥ सद्योजा
तओंकारस्तद्युतंपवनद्वयंयोयो ॥ हनूस्वरूपं ॥ शशांकाढ्योमहाकालःसबिंदुर्मःमं ॥ कामिका तः॥ फलस्वरूपः

भूतप्रेतपिशाचादिनाशायैवंसमाचरेत् ॥ महारोगनिवृत्त्यैतुसहस्रंप्रत्यहंजपेत् ॥ ९२ ॥ यताशनो
ऽयुतंनित्यंजपन्ध्यायन्कपीश्वरम् ॥ राक्षसौघंविनिघ्नंतमचिराज्जयतिद्विषम् ॥ ९३ ॥ सुग्रीवेणस
मंरामंसंदधानंस्मरन्कपिम्॥प्रजप्यायुतमेतस्यसंधिंकुर्य्याद्विरुद्धयोः ॥९४॥ लंकांदहंतंतंध्यायन्नयुतं
प्रजपेन्मनुम् ॥ शत्रूणांप्रदहेद्ग्रामानचिरादेवसाधकः ॥९५॥ प्रयाणसमयेध्यायन्हनूमंतंमनुंजपन्॥यो
यातिसोऽचिरात्स्वेष्टंसाधयित्वागृहंव्रजेत्॥९६॥यःकपीशंसदागेहेपूजयेज्जपतत्परः॥आयुर्लक्ष्म्यौ
प्रवर्द्धेतेतस्यनश्यंत्युपद्रवाः॥९७॥शार्दूलतस्करादिभ्योरक्षेन्मनुरयंस्मृतः॥प्रस्वापकालेचौरेभ्योदुष्टस्व
प्नादपिध्रुवम्॥९८॥पवनद्वितयंसद्योजातयुक्तंहनूपदम्॥महाकालःशशांकाढ्यःकामिकाफलफःक्रिया
॥ ९९ ॥ सनेत्राणांतमीनोगसात्वतोगितआयुरा ॥ षलोहितंरुडाहेतिवेदनेत्राक्षरोमनुः ॥ १०० ॥

न्तेसनेत्राक्रिया इयुतोलःलि ॥ णांतस्तः ॥ मीनोधः ॥ गस्वरूपं ॥सात्वतोधः ॥ गितआयुराषस्वरूपं ॥ लोहि
तंपः॥ रुडाहस्वरूपं ॥ वेदनेत्राक्षरः चतुर्विंशत्यर्णः॥ यथा–ॐयोयोहनुमंतफलफालितधगधगितःआयुराषपरुडा

हेति ॥ ९९ ॥ १०० ॥ प्लीहरोगः उदररोगः ॥ तन्नाशकप्रयोगमाह ॥ प्लीहेति ॥ १०१ ॥ १०२ ॥ आरण्यप्रस्त
रोत्पन्नेवनपाषाणान्निष्कासितेग्नौबदर्युत्थांयष्टिंसप्तधामूलमंत्रेणतापयेत् ॥ १०३ ॥ तयोदरस्थितेवंशखंडेताडिते

प्लीहरोगहरश्चास्यसुन्यायंपूर्ववन्मतम् ॥प्लीहयुक्तोदरेस्थाप्यंनागवल्लीदलंशुभम्॥१०१॥ तदुपर्य्यष्ट
गुणितंवस्त्रमाच्छादयेत्ततः ॥ वंशजंशकलंतस्योपरिमुंचेत्कपिंस्मरन्॥२॥आरण्यप्रस्तरोत्पन्नेवह्नौ
यष्टिंप्रतापयेत् ॥ बदरीतरुसंभूतांमंत्रेणानेनसप्तशः ॥ ३ ॥ तयासंताडयेद्वंशशकलंजठरस्थितम् ॥
सप्तकृत्वःप्लीहरोगोनश्यत्येवनृणांक्षणात्॥ ४ ॥ पुच्छाकारेसुवसनेलेखिन्याकोकिलोत्थया ॥ अष्ट
गंधैर्लिखेद्रूपंकपिराजस्यसुंदरम् ॥५ ॥ तन्मध्येष्टादशार्णंतुशत्रुनामयुतंलिखेत् ॥ तेनमंत्राभिजप्तेन
शिरोबद्धेनभूमिपः ॥६॥ जयत्यरिगणंसर्वंदर्शनादेवनिश्चितम्॥युद्धेजिगीषुर्नृपतिःपूर्वोक्तंलेखयेद्ध्वजे
॥ ७ ॥ ध्वजमादायोपरागेसंस्पर्शान्मोक्षणावधि ॥ मातृकांजापयेत्पश्चाद्दशांशेनचहावयेत्॥१०८॥

रोगोनश्यति ॥ १०४ ॥ प्रयोगांतरमाह ॥ पुच्छेति ॥ पुच्छाकारेवस्त्रेकोकिलापिच्छलेखिन्याऽष्टगंधैर्हनुमद्रूपंकृत्वा
तदुदरेऽष्टादशार्णंविलिख्याभिमंत्रितेनाशिरोबद्धेनतेनारीञ्जयति ॥ १०५ ॥ १०६ ॥ १०७ ॥ १०८ ॥

॥ १०९ ॥ यंत्रमाह ॥ लिखेदिति ॥ ११० ॥ अष्टार्णमालामंत्रौवक्ष्यमाणौ ॥ १११ ॥ ११२ ॥ दुरोदरेद्यूते
॥ ११३ ॥ ११४ ॥ अष्टार्णमाह ॥ वियदिति ॥ वियत्ह् ॥ अग्निरः ॥ यथा-ॐह्रांह्रींह्रूंह्रैंह्रौंह्रः ॐइत्यष्टार्णः ॥
॥ ११५ ॥ मालामंत्रमाह ॥ वज्रेति ॥ यथा-ॐवज्रकायवज्रतुंडकपिलपिंगलऊर्ध्वकेशमहाबलरक्तमुखताडिज्जिह्व

सर्षपैस्तिलसमिश्रैः संस्पर्शान्मोक्षणाविभि॥ गजस्थंतंध्वजंदृष्ट्वापलायेतेऽरयोऽचिरात्॥ १०९॥ अथोह नुमतः यंत्रंवक्ष्येरक्षाविधायकम्॥ लिखेदष्टदलंपद्मंसाध्याख्यायुतकर्णिकम्॥ १०॥ दलेष्वष्टार्णमालिख्य मालामंत्रेणवेष्टयेत ॥ तद्बहिर्मायया वेष्ट्यप्राणस्थापनमाचरेत्॥ ११॥ लिखितंस्वर्णलेखिन्यादलेभूर्ज तरोःशुभे ॥ रोचनाकुंकुमाभ्यांतुवेष्टितंकनकादिभिः॥ १२॥ संपातसाधितंयंत्रंभुजेवामूर्ध्निधारयेत्॥ रणेजयमवाप्नोतिव्यवहारेदुरोदरे ॥ १३॥ ग्रहैर्विघ्नैर्विषैःशस्त्रैश्चौरैर्नैवाभिभूयते॥ रोगान्सर्वानपाकृत्य चिरंजीवतिभाग्यवान्॥ १४॥ वियदग्नियुतंदीर्घषट्काद्यंतारसंपुटम् ॥ अष्टार्णोमंत्रआख्यातोमालामं त्रोऽथकथ्यते॥ ॥ १५ वज्रकायवज्रतुण्डकपिलेत्यथपिंगल॥ ऊर्ध्वकेशमहावर्णबलरक्तमुखेतिच ११६॥

महारौद्रदंष्ट्रोत्कटकहहकरालिनेमहादृढप्रहारिन्लंकेश्वरवधायमहासेतुबंधमहाशैलप्रवाहगगनेचरएह्येहिभगवन्म हाबलपराक्रमभैरवाज्ञापयएह्येहिमहारौद्रदीर्घपुच्छेनवेष्टयवैरिणंभंजय २ हुंफट् ॥ ११६ ॥

॥ ११७ ॥ ११८ ॥ ११९ ॥ १२० ॥ बाणनेत्रेंदुवर्णः पंचाविंशत्युत्तरशतार्णः ॥ १२१ ॥ अष्टार्णमालामंत्रौस्वतंत्रा
वितिसूचयन्नाह अष्टार्णेति ॥ १२२ ॥ ॥ इतिश्रीमंत्रमहोदधिव्याख्यायांनौकायांत्रयोदशस्तरंगः ॥ १३ ॥

तडिज्जिह्वमहारौद्रदंष्ट्रोत्कटकहद्वयम् ॥ करालिनेमहादृढप्रहारिन्नितिवर्णकाः ॥ ११७॥ लंकेश्वरव
धायांतेमहासेतुपदंततः ॥ बंधांतेचमहाशैलप्रवाहगगनेचर ॥ १८ ॥ एह्येहिभगवन्नंतेमहाबलपरा
क्रम ॥ भैरवज्ञापयैह्येहिमहारौद्रपदंपुनः ॥१९॥ दीर्घपुच्छेनवर्णांतेवेष्टयांतेतुवैरिणम्॥भंजयद्वित
यंहुंफट्प्रणवादिसमीरितः ॥१२०॥ बाणनेत्रेंदुवर्णोयंमालामंत्रोखिलेष्टदः॥युद्धेजप्तोजयंदद्याद्व्याधौ
व्याधिविनाशनः ॥ २१ ॥ अष्टार्णमालामन्वोस्तुमुन्याद्यर्चातुपूर्ववत्॥भूरिणाकिमिहोक्तेनसर्वंद
द्यात्कपीश्वरः ॥ १२२ ॥ इति श्रीमंत्रमहोदधौहनुमन्मंत्रकथनंनामत्रयोदशस्तरंगः ॥ १३ ॥ अथ
वक्ष्येमहाविष्णोर्मंत्रान्सर्वार्थसाधकान् ॥ ब्रह्माद्यायानुपास्याथससृजुर्विविधाःप्रजाः ॥१॥मेरुःकृ
शानुसंयुक्तोऽनुग्रहेंदुसमन्वितः ॥ एकाक्षरोनरहरेर्मंत्रःकल्पद्रुमोनृणाम् ॥ २ ॥

विष्णुमंत्रान्वक्तुंप्रतिजानीते ॥ अथेति ॥ १ ॥ मंत्रानाह ॥ मेरुरिति ॥ मेरुःक्षः ॥ कृशानूरः ॥ अनुग्रहऔ ॥
इंदुर्बिंदुः ॥ तेनक्ष्रौं ॥ २ ॥.

मायाह्रीं ॥तत्संपुटः प्रणवसंपुटश्चेति द्वौत्र्यर्णौ ॥ ३ ॥ ४ ॥ ध्यानमाह ॥ तपनेति ॥ सूर्येंद्वग्निनेत्रं ॥ घनविरामः
शरत्तत्रयोहिमांशुश्चंद्रस्तत्तुल्यकांतिः ॥ घनसमानगलामितिपाठेनीलकंठं ॥ शशिसमप्रभामितिपाठान्तरे शशिनास



त्र्यक्षरैः[1]संपुटःप्रोक्तोमाययाप्रणवेनंच ॥ ऋषिरत्रिश्चगायत्रीछंदोदेवोनृकेसरी॥३॥षड्दीर्घयुक्तबीजे
नषडंगानिसमाचरेत् ॥ त्र्यर्णेमायापुटेनैवतारसंपुटितेनवा ॥ ४ ॥ तपनसोमहुताशनलोचनंघन
विरामहिमांशुसमप्रभम् ॥ अभयचक्रपिनाकवरान्करैर्दधतमिंदुधरंनृहरिंभजे ॥५॥[2]लक्षमेकंजपेन्मं
त्रंदशांशंघृतपायसैः ॥ जुहुयात्पूजयेत्पीठेविमलादिसमन्विते॥६॥केसरेष्वंगपूजास्यादिग्दलेषुखगे
श्वरम् ॥ शंकरंशेषनागंचशतानंदंप्रपूजयेत् ॥ ७ ॥ श्रियंह्रियंधृतिंपुष्टिंकोणपत्रेषुसाधकः॥द्वात्रिंश
त्पत्रमध्येषुनृसिंहांस्तावतोर्चयेत् ॥ ८ ॥

मानाप्रभायस्यतम् ॥ ऊर्ध्वयोर्दक्षवामयोश्चक्रपिनाकौ ॥ अधस्थयोर्वराभये ॥ इंदुधरंशशिशेखरम् ॥ ५ ॥ विम
लादयउक्ताः ॥ ६ ॥ शतानंदंब्रह्माणम् ॥ ७ ॥ तावतोद्वात्रिंशत्संख्याकान् ॥ ८ ॥

१ ह्रींक्ष्रौंह्रींइतित्र्यक्षरः । २ ॐ क्ष्रौं ॐ इतित्र्यक्षरः ।

तानाह ॥ कृष्णइति ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ प्रयोगानाह ॥ सहस्रेति ॥ शतपर्वांदूर्वा।१४।१५।१६।

कृष्णोरुद्रोमहाघोरोभीमोभीषणउज्ज्वलः ॥ करालोविकरालश्चदैत्यांतोमधुसूदनः ॥ ९ ॥रक्ताक्षः
पिंगलाक्षश्चांजनसंज्ञस्त्रयोदशः ॥ दीप्ततेजाःसुघोणश्चहनुश्च षोडशःस्मृतः ॥१०॥ विश्वाक्षोराक्षसांत
श्चविशालोधूम्रकेशवः ॥ हयग्रीवोघनस्वरोमेघनादस्तथापरः ॥ ११ ॥ मेघवर्णःकुंभकर्णःकृतांतक
इतीरितः॥ तीव्रतेजाअग्निवर्णोमहोग्रोविश्वभूषणः॥१२॥ विघ्नक्षमोमहासेनःसिंहोद्वात्रिंशदीरिताः॥
इंद्रादीन्वज्रमुख्यांश्चपूजयेच्चतुरस्रके ॥ १३ ॥ एवंसंसाधितोमंत्रःप्रयोगेषुक्षमोभवेत् ॥ सहस्राष्टकसं
ख्यातैःशतपर्वात्रिकैस्तुयः ॥ १४ ॥ जुहुयादुदकेतस्यसर्वेनश्यंत्युपद्रवाः ॥ महोत्पातहरोप्येषहोमः
सर्वेष्टदोनृणाम् ॥ १५ ॥ संस्थाप्यविधिवत्कुंभंजपेदष्टसहस्रकम्॥अभिषिंचेद्विषाक्रांतंविषजार्तिनि
वृत्तये ॥ १६ ॥ विचरन्विपिनेचौरव्याघ्रसर्पाकुलेनरः ॥ जपन्नमुंमंत्रवरंनभयंप्रतिपद्यते ॥ १७ ॥
ईक्षितेनिशिदुःस्वप्नेजपन्मंत्रंनिशांनयेत् ॥ अवशिष्टंस्वप्नफलंसम्यगादिशतिध्रुवम्॥ १८ ॥ कर्णने
त्रशिरःकंठरोगान्मंत्रोविनाशयेत् ॥ अभिचारकृतांपीडामनुमंत्रितभस्मच ॥ १९ ॥

॥ १७ ॥ निशिदुःस्वप्नेदृष्टे मंत्रंजपन्नवशिष्टांनिशांनयेत्॥ सदुःस्वप्नःसुस्वप्नस्यैवफलंददाति ॥ १८ ॥ १९ ॥

॥ २० ॥ २१ ॥ प्रसंगान्मारणप्रायश्चित्तमाह ॥ प्रजपेदिति ॥ अभिचारजातपापनिवृत्त्यै अयुतंजपेत् ॥ २२ ॥ पुत्र
जीवेद्धवह्नौपुत्रजीवतरुकाष्ठदीप्तेऽग्नौतत्फलैःपुत्रजीवफलैःपुत्राप्त्यैजुहुयात् ॥ २३ ॥ २४ ॥ २५ ॥ मंत्रांतरमाह

आत्मानंनृहरिंध्यात्वावैरिणंमृगबालकम् ॥ आदायप्रक्षिपेद्यस्यांदिशितस्यांसगच्छति॥ २० ॥ स्व
कुटुंबंपरित्यज्यनचैवावर्त्ततेपुनः ॥ नृसिंहं संस्मरन्वादेरिपोःस्वस्यविनष्टये॥ २१॥ प्रजपेदयुतंमंत्रं
मारणोत्थाघनष्टये ॥ प्रसूनैर्बिल्ववृक्षोत्थैःफलैस्तत्काष्ठसंभवैः॥२२॥सहस्रंजुहुयाद्वह्नौवांछितश्रीस
मृद्धये॥पुत्रजीवेद्धवह्नौतुतत्फलैःपुत्रसंपदे॥२३॥ब्राह्मींवचांवामंत्रेणमंत्रितांशतसंख्यया॥संवत्सरमद
न्प्रातर्विद्यापारंगतोभवेत्॥२४॥किंबहूक्तेननृहरिःसर्वेष्टफलदोनृणाम्॥अथोच्यतेनरहरिर्भीतिहारीष्ट
साधकः॥२५॥जयद्वयंश्रीनृसिंहेत्यष्टार्णोमनुरीरितः॥ऋषिर्ब्रह्मास्यगायत्रीछंदोदेवोनृकेसरी॥२६॥
शक्तिर्नेत्रंवियद्बीजमुभेचंद्रसमन्विते ॥ वियतादीर्घयुक्तेनचंद्राढ्येनषडंगकम् ॥ २७ ॥

जयेति ॥यथा–जय २ श्रीनृसिंहेति ॥ २६ ॥ नेत्रंइःशक्तिः ॥ वियत्हःबीजम् ॥ उभेशक्तिबीजेबिंदुयुते ॥ दीर्घ
युतेनसबिंदुनावियताहेनषडंगं ॥ हांहृत् हींशिरइत्यादि० ॥ २७ ॥

१ जयजयश्रीनृसिंहेत्यष्टार्णः । अस्यजयनृसिंहमंत्रस्यब्रह्माऋषिःगायत्रीछंदःनृसिंहो देवताइंशक्तिःहंबीजंममाभीष्टसिद्ध्यर्थेजपेवि० ।

ध्यानमाह ॥ श्रीमदिति ॥ साम्नांराजाईशः ॥ यद्वासामसुराजतेप्रकाशतेससामराजः ॥ सामगानेकृतेप्रत्यक्षो भवतीत्यर्थः ॥ तीव्रकरोरविः ॥ पिनाकपाणेइत्युपलक्षणंवराभचक्राणाम् ॥ वामोर्ध्वादिदक्षोर्ध्वांतंपिनाकाभय वरचक्रधरइत्यर्थः ॥ २८ ॥ अस्यपूजादिपूजाप्रयोगादिकमेकार्णवत् ॥ २९ ॥ मंत्रांतरमाह ॥ तार इति ॥

श्रीमन्नृकेसरितनोजगदेकबंधोश्रीनीलकंठकरुणार्णवसामराज॥वह्नींदुतीव्रकरनेत्रपिनाकपाणेशीतांशुशेखररमेश्वरपाहिविष्णो ॥ २८ ॥ एवंध्यात्वाजपेल्लक्षाष्टकंतस्यदशांशतः ॥ जुहुयात्पायसेनाग्नौ पूजाद्यस्यतुपूर्ववत् ॥ २९ ॥ तारःपद्माचहृल्लेखाजयलक्ष्मीप्रियायच ॥ नित्यप्रमुदितांतेतुचेतसेपद मीरयेत्॥३०॥ लक्ष्मीश्रितार्द्धदेहायरमामायेनमःपदम् ॥ एकाधिकस्त्रिंशदर्णोमनुःपद्मभवोमुनिः ॥ ॥ ३१ ॥ छन्दोतिजगतीप्रोक्तंदेवःश्रीनरकेसरी ॥ बीजंरमाद्रिजाशक्तिःश्रीबीजेनषडंगकम्॥३२॥

तारॐ ॥ पद्माश्रीं ॥ हृल्लेखाह्रीं ॥ ३० ॥ रमामाये श्रींह्रीं ॥ स्वरूपमन्यत् ॥ यथा–ॐश्रींह्रींजयलक्ष्मीप्रियायानित्यप्रमुदितचेतसेलक्ष्मीश्रितार्धदेहायश्रींह्रींनमः ॥ पद्मभवोब्रह्मा ॥ ३१ ॥ अद्रिजाह्रींश्रींबीजेनषड्दीर्घयुक्तेनश्रां श्रींश्रूमित्यादिना ॥ ३२ ॥

---

१ अस्यश्रीलक्ष्मीनृसिंहमंत्रस्यपद्मभवऋषिः अतिजगतीछंदः श्रीनरकेसरीदेवताश्रींबीजंह्रींशक्तिः ममाभीष्टसिध्यर्थेजपेविनियोगः ।

ध्यानमाह ॥ क्षीराब्धाविति ॥ क्षीरसमुद्रगतश्वेतद्वीपेवस्वादिदेवौघैरग्न्यादियथातथावेष्टितः ॥ अग्रेवसुभिः दक्षे रुद्रैः पश्चिमेआदित्यैः वामेविश्वेदेवैरित्यर्थः॥अधोवामदक्षयोः शङ्खचक्रे ॥ ऊर्ध्वयोर्गदापद्मे ॥ सितश्चंद्रवर्णः ॥

क्षीराब्धौवसुमुख्यदेवनिकरैरग्न्यादिसंवेष्टितःशंखंचक्रगदांबुजंनिजकरैर्बिभ्रंस्त्रिनेत्रःसितः॥सर्पाधीश फणातपत्रलसितःपीतांबरालंकृतोलक्ष्म्याश्लिष्टकलेवरोनरहरिःस्तान्नीलकंठोमुदे ॥ ३३ ॥ एवंध्या त्वाजपेल्लक्षत्रयंषष्टिसहस्रकम्॥मध्वक्तैर्मल्लिकापुष्पैर्जुहुयाज्जातवेदसि ॥३४॥षट्शतंत्रिसहस्राणिपी ठेपूर्वोदितेयजेत्॥प्रथमावरणेङ्गानिपरशक्तिरिमाःपुनः॥३५॥भास्वतीभास्करीचिंताद्युतिरुन्मीलि नीतथा ॥ रमाकांतीरुचिश्चैतिशक्त्याद्याहेतिसंयुताः ॥३६॥ इत्थंसिद्धमनोमंत्रीनिग्रहानुग्रहक्षमः ॥ मल्लिकाकुसुमैर्होमादिष्टसिद्धिमवाप्नुयात् ॥३७॥प्रणवोनृहरेर्बीजंनमोभगवतेपदम् ॥ नरसिंहायतार श्चबीजंमत्स्यायेतिकीर्तयेत् ॥३८॥रूपायतारोबीजंचकूर्मरूपायवर्णकाः॥ तारबीजंवराहायरूपायता रबीजके॥३९॥नृसिंहरूपायेतितुतारोबीजंचवामनम्॥रूपायत्रिस्तारबीजेरामायेतिपदंवदेत्॥४०॥

शेषफणाएवातपत्रंतेनलसितोदीप्तः ॥ ईदृङ्नृसिंहोममसुदेहर्षायस्तात्भूयात् ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ मंत्रांतरमाह ॥ प्रणवइति ॥ नृहरेर्बीजंक्ष्रौं ॥ ३८ ॥ ३९ ॥ त्रिस्त्रिवारंतारबीजे ॥ ४० ॥



१ घृतमधुशर्करायुक्तैःमालतीपुष्पैः ।

सनेत्रादीर्घाइयुतोनःनि ॥ ४१ ॥ ङेंतिमश्चतुर्थ्यंतः ॥ ४२ ॥ नवनवत्यर्णएकोनशताक्षरः ॥ मंत्रोयथा-ॐक्ष्रौं नमोभगवतेनरसिंहायॐक्ष्रौंमत्स्यरूपायॐक्ष्रौंकूर्मरूपायॐक्ष्रौंवराहरूपायॐक्ष्रौंनृसिंहरूपायॐक्ष्रौंवामनरूपा यॐक्ष्रौंॐक्ष्रौंॐक्ष्रौंरामायॐक्ष्रौंकृष्णायॐक्ष्रौंकल्किनेजयजयशालग्रामनिवासिनेदिव्यसिंहायस्वयंभुवेपुरुषा

तारोबीजंचकृष्णायतारोबीजंचकल्किने ॥जयद्वयंततःशालग्रामदीर्घासनेत्रका॥४१॥वासिनेदिव्य सिंहायस्वयंभूङेंतिमःस्मृतः॥पुरुषायनमस्तारोबीजमित्युदितोमनुः॥४२॥हरेर्नवनवत्यर्णोमुनिरात्रिः किलास्यतु॥ छंदोतिजगतीदेवोनृकेसर्य्यवतारवान्॥४३॥बीजंपूर्वोदितंशक्तिराद्याबीजेनचांगकम्॥ कृत्वाषड्दीर्घयुक्तेनध्यायेत्क्षीरोदधिस्थितम् ॥४४ ॥सहस्रचंद्रप्रतिमोदयालुर्लक्ष्मीमुखालोकनलो लनेत्रः ॥ दशावतारैःपरितःपरीतोनृकेसरीमंगलमातनोतु ॥४५॥जपोयुतंदशांशेनहवनंपायसेनतु ॥ पीठेपूर्वोदितेपूर्वमंगानिपरिपूजयेत्॥४६॥दशावतारान्मत्स्यादीन्दिक्पालानायुधान्यपि॥प्रयोगाः पूर्ववत्प्रोक्ताःसर्वसिद्धिप्रदेमनौ ॥ ४७ ॥

यनमःॐक्ष्रौं ॥ अवतारवान्दशावतारयुतोनृसिंहोदेवता ॥ ४३ ॥ ॐक्ष्रौंबीजम् ॥ आद्येति॥ ॐशक्तिः॥ क्ष्रांक्ष्री मित्याद्यंगम् ॥४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥

१ उभयोर्नरसिंहोदेवताक्ष्रौंबीजंॐशक्तिःममाभीष्टसिद्ध्यर्थेजपेविनियोगः ।

मंत्रांतरमाह ॥ तारइति ॥ हृन्नमः ॥ ४८ ॥ वह्नेःकलत्रं स्वाहा ॥ ४९ ॥ बीजंक्ष्रौं ॥ यथा-ॐनमोभगवतेनरसिं
हायनमस्तेजस्तेजसेआविराविर्भववज्रनखवज्रदंष्ट्रकर्माशयान्रन्धय २ तमोग्रस २ स्वाहाअभयमात्मनिभूयिष्ठा

॥अथाभयनृसिंहमंत्रः॥ तारोनमोभगवतेनरसिंहायहृच्चते ॥जस्तेजसेआविराविर्भववज्रनखांततः॥
॥४८ ॥ वज्रदंष्ट्रचकर्मांतेत्वाशयान्रंधयद्वयम् ॥ तमोग्रसद्वयंवह्नेःकलत्रमभयंपुनः॥ ४९ ॥ आत्म
न्यंतेचभूयिष्ठास्तारोबीजंमनुःस्मृतः ॥ द्विषष्ट्यर्णैःशुकःप्रोक्तोमुनिश्छंदस्तुपूर्ववत्॥५० ॥अभयो
नारसिंहस्तुदैवतान्यत्तुपूर्ववत् ॥ अथगोपालमनवःप्रोच्यतेस्वेष्टसाधकाः ॥ ५१ ॥गोपीजनपद
स्यांतेवल्लभायाग्निसुंदरी ॥ दशाक्षरोमनुःप्रोक्तोमनोरथफलप्रदः ॥५२ ॥ नारदोस्यविराट्कृष्णो
मुनिपूर्वाः समीरिताः॥ बीजशक्तीतुविज्ञेयेक्रमात्कामानलप्रिये ॥ ५३ ॥

ॐक्ष्रौमिति ॥ ५० ॥ अन्यत्पूजादि ॥ ५१ ॥ गोपालमंत्रमाह ॥ गोपीति ॥ अग्निसुंदरीस्वाहा ॥ यथा-गोपीजन
वल्लभायस्वाहा ॥ ५२ ॥ विराट्छंदः ॥ क्लींबीजं ॥ स्वाहाशक्तिः ॥ ५३ ॥

---

१ अस्यदशावतारमंत्रस्यअत्रिर्ऋषिःजगतीछंदःनृकेसर्यवतारवान्देवताक्ष्रौंबीजम् ॐ शक्तिःममाभीष्टसिद्ध्यर्थेजपेविनियोगः । अस्य-अभयनरसिंह-
मंत्रस्यशुकऋषिःजगतीछंदः । २ अस्यगोपालमंत्रस्य नारदऋषिः विराट्छंदः कृष्णोदेवता क्लींबीजं स्वाहाशक्तिर्ममाभीष्टसिद्ध्यर्थेजपेविनियोगः ।

पंचांगमाह ॥ आचक्रायहृत् ॥ विचक्रायशिरः ॥ सुचक्रायशिखा ॥ त्रैलोक्यरक्षणचक्रायकवचम् ॥ असुरांतक
चक्रायअस्त्रम् ॥ ५४ ॥ ५५ ॥ वर्णन्यासमाह ॥ मस्तकइति ॥ ५६ ॥ तारपुटानिति ॥ ॐगों ॐनमःमस्तके ॐ

आचक्रायहृदाख्यातंविचक्रायशिरोपिच ॥ सुचक्रायशिखापश्चात्त्रैलोक्यरक्षणंततः ॥ ५४॥चक्रा
यकवचंप्रोक्तमसुरांतकशब्दतः॥चक्रायास्त्रमिदंकुर्य्यादंगानांपंचकंमनोः ॥ ५५॥ सर्वांगेत्रिमनुंन्य
स्यवर्णन्यासंसमाचरेत् ॥ मस्तकेनेत्रयोःश्रुत्योर्नसोर्वक्त्रेहृदंबुज ॥ ५६ ॥ जठरेलिंगदेशेचजान्वोः
पादयोरपि ॥ वर्णास्तारपुटान्न्यस्येद्विंद्वाढ्यान्नमसायुतान्॥ ५७ ॥वृंदारण्यगकल्पपादपतलसद्रत्नपी
ठेंबुजेशोणाभेवसुपत्रकेस्थितमजंपीतांबरालंकृतम्।जीमूताभमनेकभूषणयुतंगोगोपगोपीवृतंगोविंदं
स्मरसुंदरंमुनियुतंवेणुंरणंतंस्मरेत् ॥ ५८ ॥ एवंध्यात्वाजपेल्लक्षंदशांशंसरसीरुहैः ॥ जुहुयात्पूजयेत्पी
ठंवैष्णवेनंदनंदनम् ॥ ५९ ॥ अग्न्यादिकोणेष्वभ्यर्च्यहृदाद्यंगचतुष्टयम् ॥ दिशास्वस्त्रंदलेष्वष्टौमहि
षीःपरिपूजयेत् ॥ ६० ॥

पॐनमःनेत्रयोरित्यादि० ॥ ५७ ॥ ध्यानमाह ॥ वृंदावनगतकल्पवृक्षतलेमणिपीठेरक्ताष्टपत्रेस्थितंध्यायेत् ॥ जी
मूताभंमेघश्यामंस्मरादपिसुंदरम् ॥ ५८ ॥ ५९ ॥ ६० ॥

अर्कजाकालिंदी ॥ ६१ ॥ ६२ ॥ गोपाश्चगोपिकाश्चताः ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ मंचात् स्रस्तोगत

रुक्मिणीसत्यभामाचनग्नजित्तनयार्कजा ॥ मित्रविंदालक्ष्मणाचजांबवत्यासुशीलका ॥ ६१ ॥ महिष्योष्टौसुवर्णाभाविचित्राभरणस्रजः ॥ दलाग्रेवसुदेवश्चदेवकींनंदगोपतिम् ॥ ६२॥ यशोदांबलभद्रंचसुभद्रांगोपगोपिकाः॥इंद्रादीनपिवज्रादीन्पूजयेत्तदनंतरम् ॥ ६३॥ इत्थंसिद्धेमनोमंत्रीसाधयेत्स्वमनीषितम् ॥ गुडूचीशकलैरग्नौजुहुयाज्ज्वरशांतये॥ ६४ ॥ कृष्णंद्वेषंप्रकुर्वंतंबलदेवस्यरुक्मिणः ॥द्यूतासक्तस्यसंचिंत्यगोमयोद्भवगोलकान्॥ ६५ ॥ जुहुयाद्द्वेषसिद्ध्यर्थंनरयोःसुहृदोर्मिथः॥ पिचुमंदफलोत्पन्नतैलाभ्यक्तैःसमिद्वरैः ॥६६॥ अक्षैर्जुहुयाद्रात्रावयुतंशत्रुशांतये ॥ अयुतंप्रजपेन्मंत्रमात्मानंसंस्मरन्हरिम् ॥ ६७ ॥ मंचस्रस्तगतप्राणाकृष्टकंसारिपुंसुधीः ॥ शत्रुजन्मर्क्षवृक्षोत्थसमिद्भिरयुतंनिशि ॥६८॥ जुहुयादित्थमुग्रोपिसपत्नोनिधनंव्रजेत् ॥पलाशकुसुमैर्लक्षंविद्यासिद्ध्यैजुहोतुना॥६९॥तंडुलैःसितपुष्पाद्यैराज्याक्तैःप्रत्यहंनरः॥ हुत्वासप्तदिनां तद्भस्मभालेचमूर्द्धनि॥७०॥

प्राणआकृष्टश्चासौकंसश्चतथाभूतंरिपुंस्मरन्॥रिपुजन्मनक्षत्रवृक्षसामिद्भिर्जुहुय त्॥ नक्षत्रवृक्षाउक्ताः॥६८॥६९॥७०॥

तच्चयौवतं युवतिसमूहःपुरुषान्वशयेत् ॥ ७१ ॥ ७२ ॥ ७३ ॥७४॥ मण्डलमेकोनपंचाशद्दिनानितन्मध्येवांछितंप्रि यंप्राप्नोति ॥ ७५ ॥ ७६ ॥ ७७ ॥ मंत्रांतरमाह ॥ कामइति ॥ कामःक्लीं ॥ वियद्हःरेचिकाढ्यःऋयुतः हृ ॥ पी

धारयन्वशयेत्सद्योयौवतंतच्चपूरुषान् ॥ पुष्पंवासोंजनंवापितांबूलमथचंदनम् ॥७१॥ सहस्रंमनुना जप्तंदद्याद्यस्मैनरायसः॥ वशमेत्यचिरादेवसपुत्रपशुबांधवः ॥७२॥ वृन्दावनस्थंगायंतंगोपीभिःसं स्मरन्हरिम् ॥ अपामार्गसमिद्भिर्योजुहुयाद्वशयेज्जगत् ७३॥ रासक्रीडागतंकृष्णंध्यायन्योयुतमा जपेत् ॥ षण्मासाद्वांछितांकन्यामुद्वहेद्भक्तितत्परः ॥७४॥जपेत्सहस्रंध्यायंतीयाकदंबस्थितंहरिम् ॥ कन्यकावांछितंनाथंमंडलांतर्लभेतसा॥७५॥पत्रैःफलैःसमिद्भिर्वाबिल्वोत्थैर्मधुसंयुतैः॥कमलैःशर्क रायुक्तैर्होमाल्लक्ष्मीपतिर्भवेत्॥७६॥बहुनाकिमिहोक्तेनकृष्णःसर्वार्थदोनृणाम्॥अथमंत्रांतरंवच्मिगो विंदस्येष्टदंनृणाम्॥७७॥कामोवियद्रेचिकाढ्यःपीतावामाक्षिसंयुता ॥ चक्रीझिंटीशमारूढोबकोनंता न्वितोमरुत्॥७८॥हृदयांतोमनुश्रेष्ठोवसुवर्णोखिलेष्टदः॥मुनिःसम्मोहनाद्योस्यनारदःपरिकीर्तितः७९

ताषः वामाक्षिसंयुता ईयुता षी ॥ चक्रीकः झिंटीशए तदारूढःके ॥ बकःशः अनंतान्वितःआयुतःशा ॥ मरु त्यः ॥ ७८ ॥ हृदयंनमः ॥ यथा–क्लींहृषीकेशायनमः ॥ ७९ ॥

१ अस्यगोविन्दमन्त्रस्यसंमोहननारदऋषिःगायत्रीछंदःत्रैलोक्यमोहनोदेवताममाभीष्टसिद्ध्यर्थेजपेविनियोगः ।

षडगमाह ॥ कामेति ॥ क्लांहृत् क्लींशिरइत्यादि० ॥ ८० ॥ ध्यानमाह कल्पेति ॥ कल्पवृक्षमूलस्थितगरुडासनं

गायत्रीछंदइत्युक्तंदेवस्त्रैलोक्यमोहनः ॥ कामबीजनषड्दीर्घयुक्तेनांगंसमाचरेत् ॥ ८० ॥ कल्पानो
कहमूलसंस्थितवयोराजोन्नतांसस्थितंपौष्पंबाणमथेक्षुचापकमलेपाशांकुशेबिभ्रतम् ॥ चक्रंशंखगदे
करैरुदधिजासंश्लिष्टदेहंहरिं नानाभूषणरक्तलेपकुसुमंपीतांबरंसंस्मरेत् ॥ ८१ ॥ एवंध्यात्वाजपेत्सूर्य
लक्षंत्रिमधुरप्लुतैः पलाशपुष्पैर्जुहुयात्तत्सहस्रंहुताशने ॥ ८२ ॥ तर्पयेत्सलिलैस्तावत्पीठेपूर्वोदिते
यजेत् ॥ पक्षिराजायठद्वंद्वमनेनगरुडार्चनम् ॥ ८३ ॥ मुकुटंशिरसीष्ट्वाथकर्णयोःकुण्डलेयजेत् ॥
करेषुचक्राद्यस्त्राणिश्रीवत्संकौस्तुभंहृदि ॥ ८४ ॥ वनमालांगलेश्रोणीदेशेपीतांबरंश्रियम् ॥ वामांगेभ्य
र्च्यवह्न्यादिदिग्विदिक्ष्वंगपूजनम् ॥ ८५ ॥ दिक्षुप्रपूज्यचतुरोबाणान्कोणेषुपंचमम् ॥ लक्ष्म्याद्याः
शक्तयःपूज्याःशक्राद्याआयुधान्यपि ॥ ८६ ॥ लक्ष्मीःसरस्वतीचापिरतिःप्रीतिस्तथैवका ॥ कीर्तिः
कांतिस्तुष्टिपुष्टीइतिलक्ष्म्यादयोमताः ॥ ८७ ॥

बाणपद्मांकुशशंखादक्षेषु ॥ अन्यान्यन्येषु ॥ ८१ ॥ सूर्यलक्षंद्वादशलक्षम् ॥ ८२ ॥ ठद्वयंस्वाहा ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥

॥ ८८ ॥ ८९ ॥ मंत्रांतरमाह ॥ कामेति॥ क्लीमिति गोपालमनुः॥ परिचर्यौति ॥ तत्पूजोक्ताष्टार्णवादित्यर्थः॥ अयं स्त्रीवशीकारी ॥९०॥ मंत्रांतरमाह ॥ रमेति ॥ रमाश्रीं ॥ भवानीह्रीं ॥ कंदर्पःक्लीं ॥ स्मृतिर्गः ॥ओयुता गो ॥

विजयापुष्पसंयुक्तैर्जलैःसंतर्पयेच्छतम्॥प्रातःप्रत्यहमेतस्यवांछितंमासतोभवेत् ८८॥अयुतंतुघृतेनाग्नौहुत्वासंपातजंघृतम्।तावज्जप्तंप्रियाकांतंभोजयेद्वशमेतिसः ।८९।कामबीजेपिविज्ञेयापरिचर्योक्तमंत्रवत्॥ विशेषात्कामिनीवर्गमोहकोमनुनायकः ॥९०॥रमाभवानीकंदर्पःकृष्णायस्मृतिरोयुता॥विंदायवह्निजायांतोद्वादशार्णोमनुःस्मृतः ॥ ९१॥ मुनिर्ब्रह्मास्यगायत्रीछंदःकृष्णोस्यदेवता॥धरैकचंद्ररामाब्धिनेत्रार्णैरंगमीरितम् ॥९२॥उपासनास्यमन्त्रस्यपूर्ववत्परिकीर्त्तिता॥अथवक्ष्येषोडशार्णमनुलोकविमोहनम् ॥ ९३ अथरुक्मिणीवल्लभमंत्रः ॥ तारोहृद्भगवतेरुक्मिणीङेंतवल्लभः ॥ द्विठांतःषोडशार्णोयंनारदोमुनिरस्यतु ॥ ९४ ॥ छन्दोनुष्टुब्देवतातुरुक्मिणीवल्लभोहरिः॥ एकद्वियुगसप्ताक्षिवर्णैःपंचांगमीरितम् ॥ ९५ ॥

यथा-श्रींह्रींक्लींकृष्णायगोविंदायस्वाहेति ॥ ९१ ॥ षडंगमाह ॥ धरैकेति ॥ धराएकः ॥ ९२ ॥ ९३ ॥ मंत्रांतरमाह ॥ तारइति ॥ ॐनमोभगवतेरुक्मिणीवल्लभायस्वाहेति ॥ ९४॥ पंचांगमाह ॥ एकेति ॥ ९५ ॥

१ अस्य द्वादशार्णगोपालमंत्रस्य ब्रह्माऋषिः गायत्रीछंदःकृष्णोदेवता ममाभीष्टसिद्ध्यर्थेजपेविनियोगः ।२अस्य षोडशार्णगोपालमंत्रस्यन.रदऋषिःअनुष्टुप्छंदःरुक्मिणीवल्लभोहरिर्देवता ममाभीष्टसिद्ध्यर्थेजपेविनियोगः ।

ध्यानमाह ॥ चिंतेति ॥ चिंतामणियुतानिजहस्तेनालिंगिताकांतायेनतम् ॥ सपद्महस्तया पत्न्यालिंगितं ॥ स्वर्ण यष्टियुतदक्षकरम् ॥ ९६ ॥ अंगैर्नारदादिभिः ॥ इंद्रादिभिः वज्रादिभिः॥ ९७॥९८॥ मंत्रांतरमाह ॥ कामइति ॥ क्लींगोवल्लभायस्वाहेति ॥ गायत्रीछंदः॥कृष्णोदेवता॥ब्रह्माऋषिः ॥ पंचांगमाह ॥ वर्णैरिति॥क्लींगोहृत् ॥वल्लशिरः ॥

चिंताश्मयुक्तनिजदोःपरिरब्धकांतमालिंगितंसजलजेनकरेणपत्न्या ॥ सौवर्णवेत्रयुतहस्तमनेकभूषं पीतांबरंभजतकृष्णमभीष्टसिद्ध्यै ॥ ९६ ॥ लक्षंजपेद्दशांशेनपद्मैर्होमंसमाचरेत् ॥अंगैर्नारदवृत्रारि वज्राद्यैःपूजयेद्धरिम् ॥९७॥ नारदंपर्वतंजिष्णुंनिशठोद्धवदारुकान् ॥ विष्वक्सेनंचशैनेयंदिक्ष्वग्रे विनतासुतम् ९८ ॥ अथाष्टाक्षरी ॥ कामोगोवल्लभोङेंतःस्वाहांतोष्टाक्षरोमनुः॥गायत्रीकृष्णधातार श्छंदोदेवर्षयोमताः ॥ वर्णयुग्मैःसमस्तेनपंचांगविधिरीरितः ॥ ९९॥ हरिंपंचवर्षंव्रजेधावमानंस्व सौंदर्यसंमोचितंस्वर्गयोषम् ॥ यशोदासुतंश्रीगणैर्दृष्टकेलिंभजेभूषितंभूषणैर्नूपुराद्यैः ॥ १००॥ अष्ट लक्षंजपेदष्टसहस्रंब्रह्मवृक्षजैः ॥ समिद्वरैःप्रजुहुयादंगाद्यैर्दिग्विदिक्ष्वथ ॥ १०१ ॥

मायाशिखा ॥ स्वाहावर्म ॥ सर्वैणास्त्रम् ॥ ९९ ॥ ध्यानमाह ॥ पंचेति ॥ निजसौंदर्यमोहिताप्सरसम्॥१००॥ब्रह्म वृक्षजैःपलाशोत्थैः ॥ १०१ ॥



१ अस्याष्टाक्षरकृष्णमंत्रस्य ब्रह्माऋषिः गायत्रीछंदः कृष्णोदेवता ममाभीष्टसिद्ध्यर्थेजपेविनियोगः ।

॥ १०२ ॥ संक्रंदनादयइंद्रादयः ॥ १०३ ॥ मंत्रांतरमाह ॥ कामेनेति ॥ क्लींकृष्णक्लींमितिवेदाक्षरश्चतुर्वर्णः॥१०४॥

वासुदेवःसंकर्षणःप्रद्युम्नश्चानिरुद्धकः ॥ रुक्मिणीसत्यभामाचलक्ष्मणाजांबवत्यपि ॥१०२ ॥ संक्रंदनादयःपूज्यावज्राद्यान्यायुधानिच॥ एवंसिद्धेमनौमंत्रीसंपदामालयोभवेत् ॥३॥ कामसंपुटितंकृष्णपदंवेदाक्षरोमनुः ॥ गायत्रीनारदःकृष्णश्छंदोमुनिरधीश्वरः ॥ ४ ॥ दीर्घारूढेनकामेनषडंगन्यासमाचरेत् ॥ कल्पद्रुमूलसंरूढपद्मस्थंचिंतयेद्धरिम् ॥ ५॥ कल्पद्रोरतिरमणीयपल्लवेभ्यःप्रोद्भूतैर्मणिनिकरैःप्रसिक्तमीशम् ॥ ध्यायेयंकनकनिभांशुकेवसानंभुंजानंदधिनवनीतपायसानि ॥ ६॥ चतुर्लक्षंजपेन्मंत्रंदशांशंबिल्वसंभवैः ॥ फलैःप्रजुहुयादग्नौयजेदंगानिपूर्ववत् ॥ ७ ॥ महापद्मंतथापद्मंशंखंमकरकच्छपौ ॥ मुकुंदकुंदनीलाश्चनिधीन्दिक्षुसमर्चयेत् ॥ ८॥ इन्द्रादीन्वज्रपूर्वांश्चप्रयजेत्तदनंतरम् ॥ इत्थंजपादिभिःसिद्धोमंत्रोनिधिरिवापरः ॥ १०९ ॥

॥ १०५ ॥ ध्यानमाह ॥ कल्पेति ॥ कल्पद्रोःकल्पवृक्षस्यप्रसिक्तमभिषिक्तम् ॥ १०६ ॥ १०७ ॥ १०८ ॥ १०९ ॥

---

१ अस्यकृष्णमन्त्रस्यनारदऋषिर्गायत्रीछंदःकृष्णोदेवता ममाभीष्टसिद्ध्यर्थेजपेविनियोगः ।

॥ ११० मंत्रांतरमाह ॥ देवकीति ॥ यथा—देवकीसुतगोविंदवासुदेवजगत्पते ॥ देहिमेतनयंकृष्णत्वामहंशरणंगत इति १११ ॥ ११२ ॥ ११३ ॥ ध्यानमाह ॥ विजयेनेति॥ अर्जुनेनयुतोंबुधिमध्यात्तनयानानीयाद्विजायददतध्येयः॥

मंत्रेष्वेषुदशार्णोक्तान्प्रयोगान्विदधीतच ॥ अथपुत्रप्रदंवच्मिकृष्णमंत्रमनुष्टुभम्॥११०॥ देवकीसुत वर्णांतेगोविंदपदमुच्चरेत्।वासुदेवपदंप्रोच्यसंबुद्ध्यंतंजगत्पतिम् ॥११॥ देहिमेतनयंप्रोच्यकृष्णत्वा महमीरयेत्॥शरणंगतइत्युक्तोमंत्रोद्वात्रिंशदक्षरः॥१२॥ नारदोमुनिरस्योक्तोनुष्टुप्छंदःसमीरितम्॥ देवःसुतप्रदःकृष्णःपादैःसर्वेणचांगकम् ॥१३॥ विजयेनयुतोरथस्थितःप्रसमानीयसमुद्रमध्यतः॥प्रद दत्तनयान्द्विजन्मनेस्मरणीयोवसुदेवनंदनः ॥ १४ ॥लक्षंजपोयुतंहोमस्तिलैर्मधुरसंयुतैः॥अर्चापूर्वो दितात्वेवंमंत्रःपुत्रप्रदोनृणाम्।१५नृसिंहोमाधवारूढोलोहितोनिगमादिमः।कृशानुभार्यापंचार्णोम नुर्विषहरःपरः॥१६अनन्तपंक्तिपक्षींद्रामुनिश्छंदश्चदेवता।तारवह्निप्रियेबीजशक्तीमंत्रस्यकीर्तिते१७

॥ ११४ ॥ ११५ ॥ हरिप्रसंगात्तद्वाहनस्यगरुडस्यमंत्रमाह ॥ नृसिंहइति ॥ नृसिंहःक्षः माधवारूढः इयुतःक्षि लोहितःपः ॥ निगमादिमॐ ॥ कृशानुभार्यास्वाहा ॥ ११६ ॥ ११७ ॥

१ अस्यगोपालमंत्रस्य नारदऋषिःअनुष्टुप्छंदः सुतप्रदःकृष्णोदेवता ममाभीष्टसिद्ध्यर्थेजपेवि०।२क्षिपॐस्वाहेतिपंचार्णः।३अस्यगरुडमन्त्रस्यअनन्त ऋषिः पंक्तिश्छंदःपक्षीन्द्रादेवताॐबीजंस्वाहाशक्तिःममाभीष्टसिद्ध्यर्थेजपेविनियोगः ।

षडंगमाह ॥ ज्वलेति ॥ ज्वल २ महामतिस्वाहाहृत् ॥ गरुडचूडाननस्वाहाशिरः ॥ ११८ ॥ गरुडशिखेस्वाहा शिखा ॥ गरुडप्रभंजय २ प्रभेदय २ वित्रासय २ विमर्दय २ स्वाहाहुं ॥११९॥ १२० ॥ उग्ररूपधरसर्वविषहरभीषय २ सर्वंदहदह भस्मीकुरुकुरुस्वाहानेत्रम् ॥ अप्रतिहतबलाप्रतिहतशासनहुंफट्स्वाहाअस्त्रम् ॥ वर्णन्यास

ज्वलज्वलमहामतिस्वाहाहृदयमीरितम्॥ गरुडेतिपदस्यांतेचूडाननशुचिप्रिया ॥ ११८ ॥ शिरोमंत्रोगरुडतःशिखेस्वाहाशिखामनुः ॥गरुडार्णानुदित्वांतेप्रभंजययुगंवदेत् ॥ १९ ॥प्रभेदययुगंपश्चाद्वित्रासयविमर्दय ॥ प्रत्येकंद्विस्ततःस्वाहाकवचोमनुरीरितः॥२०॥उग्ररूपधरांतेतुसर्वविषहरेतिच॥ भीषयद्वितयंप्रोच्यसर्वंदहदहेतिच ॥ २१ ॥ भस्मीकुरुकुरुस्वाहानेत्रमंत्रोयमीरितः ॥ अप्रतिहतवर्णांतेबलाप्रतिहतेतिच ॥ २२ ॥शासनांतेतथाहुंफट्स्वाहास्त्रमनुरीरितः ॥ पादेकटौहृदिमुखेमूर्ध्निवर्णान्प्रविन्यसेत्॥२३॥तप्तस्वर्णनिभंफणीद्रनिकरैःकॢप्तांगभूषंप्रभुंस्मर्तॄणांशमयंतमुग्रमखिलंनॄणांविषंतत्क्षणात्॥ चंच्वग्रप्रचलद्भुजंगमभयंपाण्योर्वरंबिभ्रतंपक्षोच्चारितसामगीतममलश्रीपक्षिराजंभजे१२४

माह ॥ पादइति ॥ १२१ ॥ १२२ ॥ १२३ ॥ ध्यानमाह ॥ तप्तेति ॥ स्मर्तॄणांनृणामुग्रंविषंतत्क्षणाच्छमयाति ॥दक्षेवरम् ॥ पक्षाभ्यामुच्चारिताःसाम्नांबृहद्रथंतरादीनांगीतयोयेनतम् ॥ बृहद्रथंतरेपक्षावितिश्रुतेः ॥ १२४ ॥

॥ १२५ ॥ पक्षिराजायस्वाहेतिपीठमंत्रः॥१२६॥१२७ ॥ गरलद्वयंविषद्वयंस्थावरजंगमाख्यम्॥१२८॥१२९॥ धरणी धवैर्भूपतिभिःसेवितश्चिरंजीवित्वातत्तनुक्षयेहरिसायुज्यंप्राप्नोति ॥ १३० ॥ इति श्रीमंत्रमहोदधिव्याख्यायांनौका



पंचलक्षंजपेन्मंत्रंदशांशंजुहुयात्तिलैः ॥पूजयेन्मातृकापद्मेगरुडंवेदविग्रहम् ॥ १२५ ॥ चतुर्थ्यंतःपक्षिराजःस्वाहापीठमनुःस्मृतः ॥इष्ट्वांगंकर्णिकामध्येनागान्पत्रेषुपूजयेत् ॥ २६ ॥ अनंतंवासुकिंचापितृतीयंतक्षकंपुनः॥कर्कोटकंतथापद्मंमहापद्मंसमर्चयेत् ॥ २७ ॥ शंखपालंचकुलिकमिंद्रादीन्वज्रसंयुतान्॥एवंसिद्धेमनौमंत्रीनाशयेद्गरलद्वयम् ॥२८ ॥विष्णुभक्तिपरोनित्यंयोभजेत्पक्षिनायकम्॥ शत्रून्सर्वान्पराभूयसुखीभोगसमन्वितः॥२९ ॥ जीवेदनेकवर्षाणिसेवितोधरणीधवैः॥कलेवरांतेश्रीनाथसायुज्यंलभतेतुसः ॥१३०॥इतिश्रीमंत्रमहोदधौविष्णुगरुडमंत्रनिरूपणंनामचतुर्दशस्तरंगः ॥ ॥ १४ ॥ अथवक्ष्येरवेर्मंत्रंरोगदारिद्र्यनाशनम् ॥प्रणवोभुवनेशानीमेधारेचिकयान्विता ॥ १ ॥



यांविष्णुमंत्रकीर्तनंनामचतुर्दशस्तरङ्गः॥ १४ ॥ रविमंत्रमाह ॥ ॥ प्रणवइति ॥ प्रणवॐ ॥ भुवनेशानीह्रीं ॥मेधा घःरेचिकयान्विताऋयुताघृ ॥ १ ॥

अक्षियुक्इयुतःसर्गीचउमाकांतोणःणिः ॥ सूर्यआदित्यःस्वरूपम् ॥ इंदिराश्रीं ॥ ॐह्रीं घृणिःसूर्यआदित्यःश्रीं ॥ २ ॥ ३ ॥ षडंगमाह ॥ सत्येति ॥ सत्यतेजोज्वालामणेहुंफट्स्वाहाहृत् ॥ ब्रह्मतेजोज्वालाम० शिरः ॥ विष्णुतेजोज्वाला०शिखेत्यादि० ॥ भूयइति ॥ शिवाश्रियोः ॥ ह्रींश्रींबीजयोर्मध्यस्थितैःषड्वर्णैःपुनःषडंगंकृत्वाशेष

उमाकांतोक्षियुक्सर्गीसूर्यआदित्यइंदिरा ॥ दशवर्णोमनुर्देवभागोस्यमुनिरीरितः ॥ २ ॥गायत्रीछंदउद्दिष्टंदेवतादिवसेश्वरः ॥मायाबीजंरमाशक्तिर्नियोगोऽभीष्टसिद्धये ॥ ३ ॥सत्येतिहृदयंब्रह्मशिरोविष्णुशिखास्मृता॥रुद्रवर्माग्निनेत्रंस्यात्सर्वेत्यस्त्रमुदीरितम् ॥ ४ ॥ तेजोज्वालामणेहुंफट्स्वाहांतामनवोंगजाः॥भूयःषडंगषड्वर्णैःकृत्वांतःस्थैःशिवाश्रियोः ॥ ५ ॥ शेषाणर्जठरेपृष्ठेङेंतनाम्नातयोर्न्यसेत्॥ आदित्यंचरविंभानुंभास्करंसूर्य्यमेवच ॥ ६ ॥

वर्णैश्चतुर्थ्यंतैरुदरपृष्ठयोर्न्यसेत् ॥ यथा—ह्रींॐहृत् ॥ ह्रींघृंश्रींशिरः । ह्रींणिंश्रींशिखा ॥ ह्रींसूंश्रींवर्म ॥ ह्रींयंश्रींनेत्रम् ॥ ह्रींआंश्रींअस्त्रम् ॥ ह्रींदिंश्रींउदरायनमःउदरे। ह्रींत्यंश्रींपृष्ठायनमःपृष्ठे इत्यष्टांगम् ॥ पंचमूर्तिन्यासमाह ॥ आदित्यमिति ॥ ४ ॥ ५ ॥ ६ ॥

१ ॐह्रींघृणिःसूर्यआदित्यःश्रींमितिदशार्णः । अस्यश्रीसूर्यमंत्रस्यभृगुर्ऋषिःगायत्रीछंदः दिवाकरोदेवताह्रींबीजंश्रींशक्तिः ममाभीष्टसाधनेजपेविनियोगः ।

सद्यॐकारस्तदादिकाविलोमेनपंचह्रस्वाः ॐ लंऋंउंइंअंएतदाद्याङ्गनमोंतानादित्यादीन्मूर्धादिषुन्यसेत् ॥ यथा–ॐलंआदित्यायनमोमूर्ध्नि ॥ ॐ ऋंरवयेनमोमुखे ॥ ॐ उंभानवेनमोहृदि ॥ ॐ इंभास्करायनमोलिंगे ॥ ॐअंसूर्यायनमःपादयोः ॥ ७ ॥ वर्णन्यासमाह ॥ मायेति ॥ नमोन्वितानित्यपिबोध्यम् ॥ यथा--ॐह्रींॐश्रींनमो मूर्ध्नि॥ ॐह्रींघृंश्रींनमोमुखे ॥ ॐह्रींणिंश्रींनमोगले ॥ ॐह्रींसृंश्रींनमोहृदि ॥ ॐह्रींयंश्रींनमःकुक्षौ ॥ ॐह्रींआंश्रींनमो

मूर्ध्निवक्त्रेहृदिशिवेपादयोश्चप्रविन्यसेत् ॥सद्यादिपंचह्रस्वाद्यांश्चतुर्थीनमसान्वितान् ॥ ७ ॥ माया
रमागतानष्टौवर्णमूर्धमुखेगले ॥ हृत्कुक्षिनाभिजंघेचपादयोश्चप्रविन्यसेत् ॥ ८॥ स्वरान्सबिंदूनुच्चा
र्यंडेंतंशीतांशुमंडलम् ॥ शिखादिकंठपर्य्यंतंविन्यसेत्संस्मरन्विधुम् ॥९॥ स्पर्शान्सेंदून्समुच्चार्य्य
ङेंतंभास्करमंडलम् ॥ कंठादिनाभिपर्य्यंतंन्यसेद्ध्यायन्प्रभाकरम् ॥ १० ॥

नाभौ ॥ ॐह्रींदिंश्रींनमोलिंगे ॥ ॐ ह्रींत्यंश्रींनमः पादयोः ॥ ८ ॥ मंडलन्यासमाह ॥ स्वरानिति ॥ विधुंचंद्रंस्मरन्चंद्रमंडलंन्यसेत् ॥ यथा–अ १६ सोममंडलायनमःशिखादिकंठांतम् ॥ ९ ॥ स्पर्शान्कादीन्मांतान्यथा–कं २५ सूर्यमंडलायनमः कंठादिनाभ्यंतम् ॥ १० ॥

यादीनि ॥ यं १० वह्निमंडलायनमोनाभ्यादिपादांतम् ॥ ११ ॥ अग्नीषोमन्यासमाह ॥ अकारादीति । अ-ठं
२८ सोममंडलायनमोमूर्धादिहृदयांतम् ॥ १२ ॥ डइति २३ डं-क्षं २३ वह्निमंडलायनमोहृदादिपादांतम् ॥ १३ ॥
॥ १४ ॥ हंसन्यासमाह ॥ सबिंदूनिति अं-क्षं ५१ हंसःपुरुषात्मनेनमः सर्वांगे ॥ १५ ॥ ग्रहन्यासमाह ॥अष्टावष्टा

यादीन्सेंदूश्चतुर्थ्यंतवह्निमंडलमुच्चरन् ॥ नाभ्यादिपादपर्य्यंतंविन्यसेत्पावकंस्मरन् ॥ ११ ॥ मंडल
त्रयविन्यासःप्रोक्तस्तेजोविधायकः ॥ अकारादिठकारांतंवर्णाढ्यंसोममंडलम् ॥१२ ॥ङेनमोंतंन्य
सेन्मंत्रीमूर्द्धादिचरणावधि ॥ ॥ डकारादिक्षकारांतंवर्णाढ्यंवह्निमंडलम् ॥१३ ॥ हृदादिपादपर्य्यंतंवि
न्यसेन्ङेनमोन्वितम् ॥अग्नीषोमात्मकोन्यासःकथितःसर्वसिद्धिदः ॥१४॥ सबिन्दून्मातृकावर्णा
नजपांपुरुषात्मने ॥ नमोंतंव्यापकंन्यस्येद्धंसन्यासोऽयमीरितः ॥१५॥ अष्टावष्टौस्वरान्पंचपंचशः
शेषवर्णकान् ॥ उक्तादित्यमुखान्न्यस्येच्चतुर्भिश्चग्रहान्नव ॥ १६ ॥ आधारलिंगनाभीहृत्कंठेचमुख
मध्यतः ॥ भ्रूमध्येभालदेशेचब्रह्मरंध्रेक्रमान्न्यसेत् ॥१७॥

विति ॥अं-८आदित्यायभगवतेनमःआधारे ॥ ऌं-८ सोमायभगवतेनमः लिंगे ॥ क-५अंगारकाय भ० नाभौ ॥
चं-५बुधायभ०हृदि०॥टं-५बृहस्पतयेभ०गले॥तं-५ शुक्रायभ० मुखमध्ये ॥ पं-५शनैश्चरायभ०भ्रूमध्ये ॥यं-४ राहवे भ०भाले॥शं-४केतवेभ०ब्रह्मरंध्रे ॥ खेचराग्रहास्तन्नामांतेभगवतेनमः इतिपदंवदेत् ॥ तच्चप्रयोगेलिखितम् ॥
हंसेति ॥ ग्रहन्यासानंतरंहंसाग्नीषोममंडलसंज्ञंन्यासत्रयंपुनःकुर्यात् ॥ प्रथमकरणाद्वैपरीत्येनेत्यर्थः ॥ १६ ॥ १७॥

॥ १८ ॥ ध्यानमाह ॥शोणेति ॥ रक्तपद्मस्थांवेदत्रयीतनुं ॥ सैषात्रय्येवविद्यातपतीतिश्रुतेः ॥ ऊर्ध्वयोःवा०द० ॥
पद्मद्वयम् ॥अधोवामदक्षयोरभयदाने ॥ १९ ॥ २० ॥ पीठपूजायांधर्मादिकाष्टस्थानेषुपंचैवपूज्याः ॥ प्रभूताय० ॥

वदेत्खेचरनामांतेपदंभगवतेनमः ॥ हंसाख्यमग्नीषोमाख्यंमंडलत्रयसंज्ञकम् ॥ पुनर्न्यासत्रयंकुर्य्यान्मूलेनव्यापकंचरेत् ॥ १८ ॥शोणांभोरुहसंस्थितंत्रिनयनंवेदत्रयीविग्रहं दानांभोजयुगाभयानिदधतंहस्तैः प्रवालप्रभम् ॥ केयूरांगदहारकंकणधरंकर्णोल्लसत्कुंडलंलोकोत्पत्तिविनाशपालनकरंसूर्य्यंगुणाब्धिंभजे ॥१९ ॥ एवंध्यायञ्जपेल्लक्षदशकंतद्दशांशतः ॥ पद्मैस्तिलैर्वाजुहुयात्तर्पयेद्भोजयेद्द्विजान् ॥ २० ॥ प्रयजेत्पीठपूजायांधर्माद्यष्टस्थलेष्विमान् ॥प्रभूतंविमलंसारंसमाराध्यंविदिक्ष्वथ॥२१ ॥ परमादिसुखंमध्येनंतादीन्पर्ववद्यजेत् ॥ सोमाग्निमंडलेप्रोच्यरविमंडलमर्चयेत्॥ २२॥ ततोऽष्टदिक्षुमध्येचपीठशक्तीरिमानव ॥ दीप्तासूक्ष्माजयाभद्राविभूतिर्विमलातथा ॥ २३ ॥

विमलाय० ॥ साराय०समाराध्यायेति अग्न्यादिषु संपूज्य परमसुखायनमःइतिमध्येचसंपूज्य पुनरनंतादीन्पूर्ववत् प्रथमतरंगोक्तवत् ॥तेचाष्टावेव ॥ ॥ ततः सोममंडलाय० वह्निमंडलायेत्यभ्यर्च्य सूर्यमंडलायनम इतियजेत्
॥ २१ ॥ २२ ॥ एतानावाह्यएव पीठदेवानिष्ट्वापीठशक्तीर्यजेत् ॥ ताआह ॥ दीप्तेति ॥ २३ ॥

तासांबीजान्याह ॥ ह्रस्वेति ॥ ह्रस्वत्रयम् अइउ ॥ क्लीबाःऋॠऌॡ इत्यतिरिक्तारेफबिंदुयुताःस्वराःक्रमात्
तासांबीजानि रांरींरूंरेंरैंरांरौंरंरः इति ॥ तत्पूर्वास्तायजेत् ॥ रांदीप्तायैनमः ॥ रींसूक्ष्मायैइत्यादि० ॥ पीठमंत्र
माह ॥ ब्रह्मेति ॥ स्मृतिर्गः ॥ ॐब्रह्मविष्णुशिवात्मकायसौराययोगपीठात्मनेनमइति॥मूर्तिकल्पनेमंत्रमाह॥तारइ
ति ॥तारॐ ॥ सेंदुवियतहं ॥ बिंदुयुतस्तद्रहितश्चेति द्वौकांतौखौ खंखः ॥ २४॥ २५॥ २६ ॥ खोल्का

अमोघाविद्युतासर्वतोमुखीपीठशक्तयः॥ह्रस्वत्रयक्लीबहीनस्वरान्वह्नींदुसंयुतान् ॥ २४॥ बीजानि
पीठशक्तीनांतदाद्यास्ताःप्रपूजयेत्॥ब्रह्मविष्णुशिवात्मांतेकायसौराययोस्मृतिः ॥ २५ ॥पीठात्मने
नमस्तारपूर्वःपीठमनुःस्मृतः ॥तारसेंदुवियत्कांतौबिंदुमद्बिन्दुवर्जितौ ॥ २६ ॥ खोल्कायहृदयंमं
त्रोनवार्णो मूर्तिकल्पने॥अनेनमूर्तौक्लृप्तायांयजेत्प्रद्योतनंप्रभुम् ॥ २७ ॥प्राग्वत्षडंगंसंपूज्यदिक्ष्वष्टां
गंप्रपूजयेत्॥ आदित्यंमध्यतोभ्यर्च्यरविंभानुंचभास्करम् ॥ २८ ॥

यस्वरूपं ॥ हृदयंनमः ॥ २७ प्राग्वदिति ॥ षडंगान्यग्न्यादिषुसंपूज्यदिक्ष्वष्टांगानिन्यासोक्तानियजेत् ॥ आदि
त्यादीन्पंचमध्येदिक्षुचन्यासवत् ॐकारादिपंचह्रस्वाद्यान् ॥ उषामिति आद्यर्णाद्याःउंउषायैनमइत्यादि० ॥ अष्ट
म्यामातुः स्थानेरुणमेवयजेदित्यर्थः ॥ सोंसोमायेत्यादिपूर्ववत्॥आद्यर्णाद्याः॥ रविपार्षदेभ्योनमइत्यादि ॥२८॥

॥ २९ ॥ ३० ॥ ३१ ॥ अर्घविधिमाह ॥ प्राणेति ॥ ३२ ॥ प्रस्थं षोडशपलानि ॥ ३३ ॥ मूलं विलोममेव ॥ ३४ ॥

सूर्यं दशासुसद्याादिं पंचह्रस्वादिकान्यजेत् ॥ उषांप्रज्ञांप्रभांसंध्यामाद्यर्णाद्याविदिक्ष्वपि ॥ २९ ॥
ब्राह्म्याद्यादिग्दलेष्वर्चेन्महालक्ष्मीस्थलेरुणम् ॥ सोमंबुधंगुरुंशुक्रंदिक्ष्वाद्यर्णादिकान्यजेत् ॥ ३० ॥
अंगारकंशनिंराहुंकेतुंकोणेषुपूजयेत् ॥ इंद्राद्यानायुधैर्युक्तान्पार्षदानर्चयद्रवेः ॥ ३१ ॥ इत्थंसिद्धेमनौ
दद्याद्भानवेर्घ्यंचतद्दिने ॥ प्राणायामंषडंगंचकृत्वान्यासान्पुरोदितान् ॥ ३२ ॥ स्वमंडलेयजेदर्कंमानसै
रुपचारकैः ॥ सुताम्रघटितंप्रस्थतोयग्राहिमनोहरम् ॥ ३३ ॥ मंडलेस्थापयेत्पात्रंरक्तचंदनचर्चितम् ॥
विलोमांमातृकांमूलंविलोमंचपठञ्जलैः ॥ ३४ ॥ रविमंडलनिर्गच्छत्सुधाबुद्धिविभावितैः ॥ त्रयोदशैव
वस्तूनिप्रक्षिपेन्मूलमुच्चरन् ॥ ३५ ॥ तिलतंडुलदर्भाग्रशालिश्यामाकराजिका ॥ हयारिकुसुमंरक्तचं
दनंरक्तचन्दनम् ॥ ३६ ॥ गोरोचनंकुंकुमंचजयांवेणुयवानिति ॥ तज्जलेपीठमभ्यर्च्यबाह्यभानुंस्वमंडला
त् ॥ ३७ ॥ अखिलैरुपचारैस्तंपूजयेदावृतीरपि ॥ प्राणायामत्रयंकृत्वाषडंगन्यासमाचरेत् ॥ ३८ ॥

सूर्यमंडलान्निर्गच्छद्यदमृतंतद्धिया चिंतितैः ॥ ३५ ॥ वस्तून्याह ॥ तिलेति ॥ रक्तं करवीरम् ॥ ३६ ॥ वेणुयवा न्वंशोत्पन्नयवान् ॥ ३७ ॥ ३८ ॥

१ प्राणानायम्यसदेशे इति ।

॥ ३५ ॥ ३६ ॥ नवमेउत्तरदिशमारभ्योमादयः ॥ दशमेमातरः इन्द्राद्यश्च ॥ प्रयोगानाह ॥ जन्मभइति॥ 

सप्तमावृतिगाःपूज्याःशक्तयःकांचनप्रभाः ॥अनंतसूक्ष्मसंज्ञश्चतृतीयस्तुशिवोत्तमः ॥ ३५ ॥ एकने त्रैकरुद्रौचत्रिमूर्तिःषष्ठईरितः॥श्रीकंठोऽथशिखंडीचसंपूज्याअष्टमावृतौ ॥३६॥ उत्तरादियजेत्पश्चा दुमांचंडेश्वरंपुनः ॥ नंदिनंचमहाकालंगणेशंवृषभंपुनः ॥ ३७ ॥ यजेद्भृंगिरिटिंस्कन्दंनवमावरण स्थितान् ॥ब्राह्म्याद्यामातरःपूज्यादशमावरणेततः ॥ ३८ ॥ इंद्रादयश्चवज्राद्याएवंसिद्धोभवे न्मनुः ॥ जन्मभेदशमेतस्मात्पुनश्चैकोनविंशके ॥ ३९ ॥ जुहुयाद्यःसुधावल्ल्याःसमिधश्चतुरं गुलाः ॥ सरोगान्सकलाञ्छत्रून्पराभूयश्रियायुतः ॥ ४० ॥ मोदतेपुत्रपौत्राद्यैःशतवर्षाणि साधकः ॥ समिद्भिःश्रीफलोत्थाभिर्होमःसंपत्तिसिद्धये ॥ ४१ ॥ पलाशतरुजाभिस्तुब्रह्मवर्चस सिद्धये ॥ वटोत्थाभिर्धनप्राप्त्यैखादिराभिस्तुकांतये ॥ ४२ ॥ तिलैरघर्मनाशायसर्षपःशत्रुनष्टये ॥ पायसेनकृतोहोमःकांतिश्रीकीर्तिदायकः ॥ ४३ ॥ कृत्यामृत्युक्षयकरोदध्नासंवादसिद्धिदः ॥ होम संख्यातुसर्वत्रायुतमानेनकीर्तिता ॥ ४४ ॥

॥ ३८ ॥ ३९ ॥ सुधावल्ल्यागुडूच्याः ॥ चतुरंगुलप्रमाणाः समिधः ॥४०॥ श्रीफलंबिल्वः ॥४१॥ ४२॥ ४३ ॥४४॥

रुजांरोगाणाम् ॥ ४५ ॥ ४६॥ जन्मताराात्रयेजन्मनक्षत्रेततोदशमैकोनविंशयोश्च ॥४७॥४८ ॥ रुद्रजपांगभूतंदशार्ण माह ॥ तारइति ॥ भगवानरुद्रोपिङेंतः ॥ पदद्वयंचतुर्थ्यंतं ॥ यथा-ॐनमोभगवतेरुद्रायेति ॥ ४९ ॥ रुद्रवि



अष्टोत्तरशतंदूर्वात्रिकहोमाद्रुजांक्षयः ॥ स्वजन्मदिवसेयस्तुपायसैर्मधुरान्वितैः॥४५ ॥जुहोतितस्य
वर्द्धंतेकमलारोग्यकीर्तयः ॥गुडूचीबकुलोत्थाभिःसमिद्भिर्हवनंनृणाम् ॥ ४६॥ जन्मतारात्रयेरोगा
न्मृत्युंचापिविनाशयेत् ॥ प्रत्यहंजुहुयाद्दूर्वाअपमृत्युविनष्टये ॥ ४७ ॥ किंबहूक्तेनसर्वेष्टंप्रयच्छति
शिवोनृणाम् ॥ अपामार्गसमिद्भिश्चसिद्धान्नैर्ज्वरनष्टये ॥ ४८ ॥ दुग्धाक्तैरमृताखंडैर्मासंहोमोखिला
र्तये ॥तारोन्तेभगवान्ङेंतोरुद्रायेतिदशाक्षरः ॥ ४९ ॥बोधायनोमुनिःपंक्तिश्छंदोरुद्रोऽस्यदेवता॥
पंचन्यासान्प्रकुर्वीतस्वस्वरुद्रत्वसिद्धये ॥ ५० ॥ यजुर्वेदस्थितान्मंत्रानेकत्रिंशत्स्थलेन्यसेत् ॥
यातेरुद्रशिवादेशेह्यस्मिन्महतिमस्तके ॥ ५१ ॥

धानमाह ॥ पंचेति ॥ ५० ॥ यातेरुद्रेत्यृचाशिखायांन्यसेत् १ ॥ अस्मिन्महत्यर्णवेशिरसि २ ॥५१ ॥



१ अस्यश्रीरुद्रमन्त्रस्य बोधायनऋषिः पंक्तिश्छंदः रुद्रोदेवता ममाभीष्टसिद्ध्यर्थे जपे विनियोगः ।

सहस्राणिसहस्रशः भाले ३ ॥ हँसः शुचिषत्० भ्रुवोः ४ ॥ त्र्यंबकंयजामहे० नेत्रयोः ५ ॥ नमः स्रुत्यायच पथ्यायचेतिकर्णयोः ६ ॥ ५२ ॥ मानस्तोके० नसोः ७ ॥ अवतत्यधनुः० मुखे ८ ॥ नीलग्रीवाः शितिकंठा दिवँ—नीलग्रीवाः शितिकंठाः शर्वाइतिऋग्द्वयंकंठे ९ ॥ ५३ ॥ नमस्तेअस्त्वायुधायानातताय० स्कंधयोः १० ॥ यातेहेति० बाह्वोः ११ ॥ येतीर्थानि० करयोः १२ ॥ ५४ ॥ सद्योजातमितितैत्तिरीयशाखोक्तंमंत्रपंचकमंगुष्ठा

सहस्राणिललाटेतुहँसः शुचिभ्रुवोर्न्यसेत्॥त्र्यंबकंनेत्रयोः श्रुत्योर्नमः स्रुत्यायविन्यसेत् ॥ ५२॥ मान
स्तोकेनासिकायामवतत्यमुखेतथा ॥नीलग्रीवाइतिऋचोर्द्वयंकंठेन्यसेद्बुधः ॥५३॥ नमस्तेअस्त्वा
युधेतिमंत्रमंसद्वयेन्यसेत्॥यातेहेतिरिमांबाह्वोर्येतीर्थानीतिहस्तयोः ॥ ५४ ॥ सद्योजातंप्रपद्यामी
त्यृचमंगुष्ठयोर्न्यसेत्॥वामदेवायतर्जन्योरघोरेभ्योऽथमध्ययोः ॥५५॥ तत्पुरुषायानामायामी
शानस्तुकनिष्ठयोः॥ नमोवः किरिकेभ्यस्तुहृदिमंत्रमिमंन्यसेत् ॥५६॥ नमोगणेभ्यः पृष्ठेतुविन्यसे
त्साधकोत्तमः ॥ ततः पार्श्वद्वयेन्यस्येन्नमोहिरण्यबाहवे ॥ ५७ ॥

ष्वंगुलीषु १३, १४, १५, १६, १७ ॥ नमोवः किरिकेभ्योदेवानां ँ हृदयेभ्योनमोविचिन्वत्केभ्योनमोविक्षीणके भ्योनमआनिर्हतेभ्यइतिहृदि १८ ॥ ५५ ॥ ५६ ॥ नमोगणेभ्योगणपतिभ्यश्चवोनमइतिपृष्ठे १९ ॥ नमोहिरण्यबाहवेसेनान्येदिशांचपतयेनमइतिपार्श्वयोः २० ॥ ५७ ॥

हिरण्यगर्भः नाभौ २१ ॥ मीढुष्टमशिवायनमः कट्योः २२ ॥ येभूतानामधिपतयः गुह्ये २३ ॥ ५८ ॥ जातवेदसेइमामृचंशिरोयुतां-जातवेदसेसुनवामसोम० तामग्निवर्णामित्यस्यांतेसुतरासितरसेनमःसुतरासितरसेनमः इतिशिरोयुतामृग्द्वयमपाने २४ ॥ मानोमहांतमूर्वोः २५ ॥ एषतेरुद्रभागः जानुनोः २६ ॥ ५९ ॥ येपथांपथिरक्षयः पदोः २७ ॥ अध्यवोचदधिवक्ता० कवचे २८ ॥ नमोबिल्मिनेचकवाचिने० इत्युपकवचे २९ ॥ ६० ॥ नमोअस्तुनीलग्रीवाय० तृतीयनेत्रे ३० ॥ प्रमुंचधन्वन० अस्त्रे ३१ ॥ ६१ ॥ इतिप्रथमोन्यासः ॥ यएतावंतश्च० दिग्बंधः ॥ ६२ ॥

हिरण्यगर्भोनाभौचकट्योर्मीढुष्टमेतिच ॥ येभूतानामिमंगुह्येमंत्रंविन्यस्यसाधकः ॥ ५८ ॥ अपाने शिरसायुक्तांजातवेदसइत्यृचम् ॥ मानोमहांतमित्यूर्वोरेषतेजानुनोर्न्यसेत् ॥ ५९ ॥ येपथांपादयोर्न्यस्याध्यवोचत्कवचेन्यसेत् ॥ मंत्रंनमोबिल्मिनेचेत्युपवर्मणिविन्यसेत् ॥ ६० ॥ नमोस्तुनीलग्रीवायतृतीयेऽक्षिणिसाधकः ॥ प्रमुंचधन्वनइतिमंत्रेणास्त्रंप्रविन्यसेत् ॥ ६१ ॥ इत्येकत्रिंशदंगानां न्यासःप्रथमईरितः ॥ ततःकुर्वीतदिग्बंधंयएतावंतइत्यृचा ॥ ६२ ॥

व्यासमंत्रमाह ॥ बालइति ॥ बालोवः पवनदीर्घेन्दुयुतः यकाराकारबिंदुयुतः व्याम् ॥ जलंझिंटीशयुग्वका रएकारयुतः वे ॥ अत्रिर्दः ॥ व्यासायस्वरूपम् ॥ हृदयंनमः ॥ यथा–व्यांवेदव्यासायनमइति ॥ १०१ ॥

बालःपवनदीर्घेन्दुयुक्तोझिंटीशयुग्जलम्॥अत्रिर्व्यासायहृदयंमनुरष्टाक्षरोमतः ॥ १०१ ॥ ब्रह्मानुष्टुम्मुनिश्छंदोदेवःसत्यवतीसुतः ॥ आद्यबीजंनमःशक्तिर्दीर्घाढ्येनादिनांगकम् ॥१०२ ॥व्याख्यामुद्रिकयालसत्करतलंसद्योगपीठस्थितंवामेजानुतलेदधानमपरंहस्तंसुविद्यानिधिम् ॥विप्रव्रातवृतंप्रसन्नमनसंपाथोरुहाङ्गद्युतिंपाराशर्य्यमतीवपुण्यचारितंव्यासंस्मरेत्सिद्धये ॥१०३॥जपेदष्टसहस्राणिपायसैर्होममाचरेत्॥पूर्वोक्तपीठेव्यासस्यपूर्वमंगानिपूजयेत् ॥ १०४ ॥ प्राच्यादिषुयजेत्पैलंवैशंपायनजैमिनी॥सुमंतुंकोणभागेषुश्रीशुकंरोमहर्षणम्॥ १०५ ॥

॥ १०२॥ विप्रव्रातवृतंब्राह्मणसमूहपरिवेष्टितम् ॥पाथोरुहांगद्युतिं नीलेंदीवरकांतिम्॥ १०३ ॥ पूर्वोक्तपीठेधर्मादिके॥ १०४॥ १०५ ॥

१ अस्य श्रीव्यासमन्त्रस्य ब्रह्माऋषिः सत्यवतीसुतोदेवता व्यांबीजंनमःशक्तिःममाभीष्टसिद्ध्यर्थेजपेविनियोगः

शुक्रमंत्रमाह ॥ तारइति ॥ तारॐ॥ वस्त्रस्वरूपम् ॥ भगीसूर्यः एयुतोमः मे ॥ देहिशुक्रायस्वरूपम्॥ठद्वयं

जुहुयात्पिप्पलोत्थाभिःसमिद्भिस्तन्निवृत्तये॥तारोवस्त्रंभगीसूर्य्योदेहिशुक्रायठद्वयम् ॥ ९५॥एकाद
शाक्षरोमंत्रोहेमवस्त्रप्रदायकः॥ब्रह्मामुनिर्विराट्छंदोदेवतादैत्यपूजितः ॥ ९६॥बीजंतारोग्निभार्य्यातु
शक्तिरस्यप्रकीर्तिता॥एकद्विचंद्रनेत्राग्निनेत्रवर्णैःषडंगकम् ॥ मंत्रवर्णैस्तुकृत्वाथध्यायेद्विद्यानिधिंसित
म्॥९७॥ श्वेतांभोजनिषण्णमापणतटेश्वेतांबरालेपनंनित्यंभक्तजनायसंप्रददतंवासोमणीन्हाटकम्॥
वामेनैवकरेणदक्षिणकरेव्याख्यानमुद्रांकितंशुक्रंदैत्यवरार्चितंस्मितमुखंवंदेसितांगप्रभम् ॥ ९८ ॥
॥अयुतंप्रजपेन्मंत्रंदशांशंजुहुयाद्घृतैः ॥ यजेद्धर्मादिपीठेतंनगेंद्रादितदायुधैः ॥९९ ॥ सुगंधैःश्वेत
कुसुमैर्जुहुयाच्छुक्रवासरे॥एकविंशतिवारंयोलभतेसोंशुकंमणीन् ॥१०० ॥

स्वाहा ॥ ९५ ॥ ९६ ॥ ९७ ॥ ध्यानमाह ॥ श्वेताम्भोजेति:आपणतटे श्वेतपद्मास्थितम् ॥ ९८ ॥ ९९ ॥ १०० ॥

१ ॐ वस्त्रंमेदेहिशुक्रायस्वाहा । अस्य श्रीशुक्रमन्त्रस्य ब्रह्माऋषिः विराट्छन्दःदैत्यपूज्योदेवता आंबीजंस्वाहाशक्तिःममाभीष्टसिद्ध्यर्थेजपेविनियोगः

नभोह: ॥ लोहितस्थोभृगुः पकारस्थः सकारः स्प ॥ हरिस्तकारः भगान्वितोवायुः एयुतोयः थे ॥ :हृदयं नमः ॥ यथा–बृंबृहस्पतयेनमःइति ॥ ८९ ॥ आदिमंबृमितिबीजम् ॥ षडंगमाह ॥ बराभ्यामिति ॥ ब्रांहृत् ॥ ब्रीं शिरइ

नभोभृगुर्लोहितस्थोहरिर्वायुर्भगान्वितः ॥ हृदयांतोष्टवर्णोयंमनुर्ब्रह्मामुनिःस्मृतः ॥८९॥ छंदोनुष्टु प्सुराचार्य्योदेवताबीजमादिमम् ॥ बराभ्यांदीर्घयुक्ताभ्यांषडंगानिप्रकल्पयेत् ॥ ९० ॥रत्नाष्टाप दवस्त्रराशिममलंदक्षात्किरंतंकरादासीनंविपणौकरंनिदधतंरत्नादिराशौपरम् ॥पीतालेपनपुष्पवस्त्रम खिलालंकारसंभूषितंविद्यासागरपारगंसुरगुरुंवंदेसुवर्णप्रभम्॥ ९१ ॥ जपित्वाशीतिसाहस्रंहुत्वान्नेन घृतेनवा॥धर्माधर्मादिपीठेतंपूजयेदंगादिग्भवैः ॥ ९२ ॥ सिद्धेमनौप्रकुर्वीतप्रयोगानिष्टसिद्धये ॥ हरिद्राकुंकुमैर्हुत्वाघृताक्तैर्दिवसत्रयम् ॥ ९३ ॥ सविंशतिशतंमंत्रीवासांसिलभतेमणीन्॥शत्रुरोगा दिपीडासुस्वजनेकलहोद्भवे ॥ ९४ ॥

त्यादि० ॥ ९० ॥ ध्यानमाह ॥ रत्नेति ॥दक्षहस्ताद्रत्नहेमवस्त्रराशीन्निक्षिपंतम् ॥ वामकरंरत्नादिसमूहे आरोपयं तम् ॥ ९१ ॥ धर्माधर्मादिपीठेइति ॥ पीठशक्तयोभवंतीत्यर्थः ॥ ९२ ॥ ९३ ॥ ९४ ॥



१ अस्य श्रीबृहस्पतिमन्त्रस्य ब्रह्माऋषिः अनुष्टुप्छन्दः सुराचार्योदेवता बृंबीजं ममाभीष्टसिद्ध्यर्थेजपेविनियोगः ।

॥ ८० ॥ ८१ ॥ उद्यापनमाह ॥ तिलैरिति ॥ ८२ ॥ मंडलस्थइति ॥ सर्वतोभद्रमंडलेकुंभंसंस्थाप्य तत्रभौममूर्तिं सौवर्णीमंगलप्रतिमांसंपूज्याचार्यायदद्यात् ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ गुरुमंत्रमाह ॥ खड्गीशाविति ॥

प्रसादंकुरुमेनाथमंगलप्रदमंगल॥ मेषवाहनरुद्रात्मन्पुत्रान्देहिधनंयशः ॥ ८० ॥ एवंसंस्तूयसंपूज्य गृह्णीयाद्ब्राह्मणाशिषः ॥गुरवेदक्षिणांदत्त्वाभुंजीतान्नंनिवेदितम् ॥८१ ॥ प्रतिभौमदिनेकुर्य्यादेवंसंवत्सरावधि ॥तिलैस्संजुहुयाद्धोमंशतार्द्धंभोजयेद्द्विजान् ॥ ८२॥ माहेयमूर्तिंसौवर्णीमाचार्य्यायनिवेदयेत्॥मंडलस्थेघटेऽभ्यर्च्यसुतसौभाग्यसिद्धये ॥८३ ॥ एवंव्रतपरानारीप्राप्नुयात्सुभगान्सुतान्॥धन्यात्यैऋणनाशायव्रतंकुर्य्यात्पुमानपि ॥ ८४॥ अग्निर्मूर्द्धेत्यपिमनुंवैदिकंब्राह्मणोजपेत्॥ तथांगारकगायत्रींसर्वाभीष्टस्यसिद्धये ॥८५॥ अङ्गारकायशब्दान्तेविद्महेपदमुच्चरेत् ॥ शक्तिहस्तायचपदंधीमहीतिततोवदेत् ॥८६॥ तन्नोभौमःप्रचोवर्णान्दयादितिचकीर्तयेत्॥ एषांगारकगायत्रीजप्ताभीष्टप्रदायिनी॥८७॥माहेयोपासनंप्रोक्तंगुरुमंत्रउदीर्य्यते॥खड्गीशौभारभूतिस्थौतत्राद्यःक्रूरसंयुतः ८८॥

खड्गीशौद्वौवकारौ भारभूतिस्थौऋवर्णस्थौ ॥ तयोराद्यःक्रूरणबिंदुनायुतः ॥ ८८ ॥

---

१ अङ्गारकायविद्महेशक्तिहस्तायधीमहि । तन्नोभौमःप्रचोदयात् ।

मन्त्रमाह ॥ भूमिपुत्रेति ॥ ६९ ॥ ७० ॥ पूर्वनामभिर्मंगलाद्यैः ॥ ७१ ॥ ७२ ॥ रेखामार्जनमंत्रमाह ॥ दुःखेति ॥

भूमिपुत्रमहातेजःस्वेदोद्भवपिनाकिनः॥सुतार्थिनीप्रपन्नात्वांगृहाणार्घ्यंनमोस्तुते ॥ ६९ ॥ रक्तप्रवा
लसंकाशजपाकुसुमसन्निभ ॥ महीसुतमहाबाहोगृहाणार्घ्यंनमोस्तुते ॥ ७० ॥ एकविंशतिकृत्वोथ
प्रणमेत्पूर्वनामभिः ॥ प्रदक्षिणाविधातव्यास्तावत्योवसुधात्मजे ॥ ७१ ॥ खदिरांगारकेनाथकुर्य्या
द्रेखात्रिकंसमम्॥वामपादेनमंत्राभ्यामेताभ्यांतत्प्रमार्जयेत् ॥ ७२ ॥ दुःखदौर्भाग्यनाशायपुत्रसंता
नहेतवे॥कृतरेखात्रयंवामपादेनैतत्प्रमार्ज्म्यहम् ॥ ७३ ॥ऋणदुःखविनाशायमनोभीष्टार्थसिद्धये ॥
मार्जयाम्यसितारेखास्तिस्रोजन्मत्रयोद्भवाः ॥ ७४ ॥ ततःपुष्पांजलिकरास्तुवीतधरणीसुतम् ॥
ध्यायंतीचरणांभोजंपूजासांगत्वसिद्धये ॥ ७५ ॥ धरणीगर्भसंभूतंविद्युत्तेजःसमप्रभम्॥कुमारंशक्ति
हस्तंचमंगलंप्रणमाम्यहम् ॥ ७६ ॥ ऋणहर्त्रेनमस्तुभ्यंदुःखदारिद्र्यनाशिने ॥नभसिद्योतमानायसर्व
कल्याणकारिणे॥ ७७ ॥ देवदानवगंधर्वयक्षराक्षसपन्नगाः॥सुखंयांतियतस्तस्मैनमोधरणिसूनवे ॥
॥७८ ॥योवक्रगतिमापन्नोनृणांदुःखंप्रयच्छति ॥पूजितःसुखसौभाग्यंतस्मैक्ष्मासूनवेनमः ॥ ७९ ॥

॥ ७३ ॥ ७४ ॥ ७५ ॥ स्तुतिमाह ॥॥ धरणीति ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥

न्यासमवाह ॥ मंगलमिति ॥ ॐमंगलायनमः पादयोः इत्यादि० ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥

मंगलंविन्यसेदंघ्र्योर्भूमिपुत्रंतुजानुनोः ॥ ऊर्वोश्चऋणहर्तारंकटिदेशेधनप्रदम् ॥ ५७ ॥ स्थिरासनं गुह्यदेशेमहाकायमथोरसि॥वामबाहौततोन्यस्येत्सर्वकर्मावरोधकम् ॥५८॥लोहितंदक्षिणेबाहौलो हिताक्षंगलेन्यसेत् ॥ वदनेविन्यसेत्साध्वीसामगानांकृपाकरम् ॥ ५९ ॥धरात्मजंनसोरक्ष्णोःकुजं भौमंललाटतः॥ भूतिदंतुभ्रुवोर्मध्येमस्तकेभूमिनंदनम् ॥ ६० ॥ अंगारकंशिखादेशेसर्वांगेविन्यसे द्यमम्॥ततोबाहुद्वयेन्यस्येत्सर्वरोगापहारकम् ॥ ६१ ॥ मूर्द्धादिपादपर्य्यंतंवृष्टिकर्तारमङ्गके ॥ वि न्यसेद्दृष्टिहर्तारं मूर्द्धांतंचरणादितः ॥ ६२ ॥ दिक्षुप्रविन्यसेदंत्यंसर्वकामफलप्रदम्॥आरंवक्रंभूमिजं चनाभौवक्षसिमूर्द्धनि ॥ ६३ ॥एवंन्यस्तशरीरोसौध्यायेद्धरणिनंदनम् ॥अर्घंसंस्थाप्यविधिवत्पूज येदुपचारकैः ॥ ६४ ॥एकविंशतिकोष्ठाढ्येत्रिकोणेताम्रपात्रगे ॥ आवाह्यधरणीपुत्रंशोणैःपुष्पैश्चचं दनैः॥ ६५ ॥ अंगानिपूजयेत्प्राग्वदेकविंशतिकोष्ठके ॥ मंगलादींस्त्रिकोणेषुवक्रमारंचभूमिजम् ॥ ॥६६॥ब्राह्म्याद्यामातृकाबाह्येशक्रादीनायुधान्यपि॥धूपदीपौविधायाथगोधूमान्नंनिवेदयेत् ॥६७॥ जलपूर्णेताम्रपात्रेगंधपुष्पाक्षतान्विते॥फलंनिधायमंत्राभ्यांभौमायार्घ्यंनिवेदयेत् ॥ ६८ ॥

॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥

धरात्मजो भौमः ॥ ४८ ॥ देवताध्यानमाह ॥ जपाभामिति ॥ शूलवरौदक्षयोः ॥ अन्ययोरितरे ॥ ४९ ॥ रसल क्षंषट्लक्षम् ॥ शैवेपीठेमृत्युंजयोक्ते ॥५०॥ ककुभांनाथानिंद्रादीन् ॥कुलिशादीन्वज्रादीन्॥५१॥५२॥भौमव्रतमाह

मुनिर्निरूपागायत्रीछंदोदेवोधरात्मजः॥षड्भिर्वर्णैःषडंगानिमनोःकुर्वीतसाधकः॥४८॥जपाभंशिव स्वेदजंहस्तपद्मैर्गदांशूलशक्तीवरंधारयंतम्॥अवंतीसमुत्थंसुमेषासनस्थंधरानंदनंरक्तवस्त्रंसमीडे॥४९॥ रसलक्षंजपोहोमःसमिद्भिःखदिरस्यच॥शैवेपीठेयजेद्भौमंप्रागंगानिप्रपूजयेत्॥५० ॥एकविंशतिको ष्ठेषुमंगलादीन्प्रपूजयेत्॥तद्बहिःककुभांनाथान्कुलिशादींस्ततोर्चयेत् ॥ ५१ ॥इत्थंजपादिभिःसिद्धं स्वेष्टसिद्धौप्रयोजयेत्॥नारीपुत्रमभीप्सन्तीभौमाह्वेतद्व्रतंचरेत् ॥ ५२॥मार्गशीर्षेथवैशाखेतस्यारंभः प्रशस्यते॥अरुणोदयवेलायामुत्थायशुचिविग्रहा॥५३॥ दंतान्धावेदपामार्गसमिधामौनसेविनी ॥ नद्यादिसलिलेस्नात्वाधारयेद्रक्तवाससी॥ ५४ ॥ नैवद्यकुसुमालेपान्रक्तान्संपाद्यसंयता ॥ विधिज्ञं विप्रमाहूयभौममर्चेत्तदाज्ञया ॥ ५५ ॥ रक्तगोगोमयालिप्तदेशेपीठनिषेविणी ॥ मंगलादीनिनामा निस्वप्रतीकेषुविन्यसेत् ॥ ५६ ॥



मार्गेति॥शुचिविग्रहाशरीरचिंतानिवर्तनानंतरंप्रक्षालितपाणिपादमुखा॥५३॥५४॥स्वप्रतीकेष्वनिजांगेषु ॥५५॥५६॥

सुधाबीजंवमिति ॥ तेनदक्षकरेण ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४॥४५ ॥ मंगलमंत्रमाह ॥ तारइति ॥
तारॐ ॥ वियत् हः दीर्घबिंदुयुतंहाम् ॥ पुनस्तदेवावियत् चंद्रांकितहं॥ ४६॥ विसर्गीभृगुःसः ॥रात्रीशसर्गिणौ

चंदनेनसुधाबीजंदक्षेकरतलेन्यसेत्। आच्छादयेदर्घपात्रंवामाक्रांतेनतेनच ॥३९॥अष्टोत्तरशतावृत्त्या मूलेनांभोभिमंत्रयेत्॥ पुनःपंचोपचारैस्तंपूजयेन्मूलमंत्रतः॥४० ॥ पाणिभ्यांपात्रमादायजानुनीभूतलेन्यसेत्॥आमूर्धपात्रमुद्धृत्यदृष्टिंचाधायमंडले ॥ ४१ ॥ मनसापूजयेत्तत्रभानुमावरणान्वितम् ॥ अर्घ्यंदद्याद्विधायत्ररक्तचंदनमंडले ॥ ४२ ॥ ततःपुष्पांजलिंदद्यान्मंडलस्थायभानवे॥ अष्टोत्तरशतंमूलंजपेदासनसंस्थितः ॥४३॥ प्रत्यर्कंप्रातरेवंयोदद्यादर्घ्यंविवस्वते ॥ लक्ष्मीयशःसुतान्विद्यामैश्वर्य्यंसोऽधिगच्छति॥४४॥ गायत्र्युपासनासक्तःसंध्यावंदनतत्परः॥दशवर्णंजपन्विप्रोनैवदुःखमवाप्नुयात् ॥४५॥अथवच्मिधरासूनुमंत्रंसुतधनप्रदम्॥तारोवियद्दीर्घबिंदुयुक्तंचंद्रांकितंपुनः ॥४६ ॥
भृगुर्विसर्गीचंडीशौक्रमाद्रात्रीशसर्गिणौ ॥ षड्वर्णोमनुराख्यातोभीष्टदायीऋणापहः ॥ ४७ ॥

बिंदुयुतौविसर्गयुतौ चंडीशौखौंखंखः॥ ४७ ॥

१ ॐ हांहंसः खंसः। अस्य श्रीमंगलमन्त्रस्य विरूपा ऋषिः गायत्रीछंदः धरात्मजोदेवता ममा० ।

॥ १०६ ॥ १०७ ॥ मृत्युंजयमंत्रमाह॥तारइति । तार ॐ॥ वामकर्णबिंदुयुतः ऊबिन्दुयुतः शूलीजः जूम् ॥ससर्गः सःसः ॥ १०८ ॥ केवलोप्ययंजप्तोनृणांमृत्युनाशनः ॥ किंपुनस्तत्पुटितः ॥ व्यासमंत्रः॥ अस्यमंत्रस्य कहो

उग्रश्रवसमन्यांश्चमुनीन्सेंद्रादिकायुधान् ॥ एवंसिद्धमनुर्मंत्रीकवित्वंशोभनाःप्रजाः ॥ १०६ ॥
व्याख्यानशक्तिकीर्तिंचलभतेसंपदांचयम् ॥ मृत्युंजयेनपुटितंयोव्यासस्यमनुंजपेत् ॥ १०७ ॥
सर्वोपद्रवसंत्यक्तोलभतेवांछितंफलम् ॥ तारःशूलीवामकर्णबिंदुयुक्तःससर्गसः ॥ १०८ ॥ मृत्युं
जयस्यमंत्रोयंत्रिवर्णोमृत्युनाशनः ॥ जप्तोयंकेवलोनॄणामिष्टसिद्धिंप्रयच्छति ॥ किंपुनस्तेनपुटि
तोवेदव्यासमनूत्तमः ॥ १०९ ॥ इतिश्रीमंत्रमहोदधौसूर्य्यादिलघुमृत्युञ्जयव्यासमंत्रनिरूपणंनामपं
चदशस्तरंगः ॥ १५ ॥

लऋषिःदैवीगायत्रीछंदः मृत्युंजयोदेवता जूंबीजं सःशक्तिः ॥ दीर्घाढ्यसकारेणषडङ्गम् ॥ १०९ ॥ इतिश्रीमंत्रम
होदधिव्याख्यायांनौकायांसूर्यादिमंत्रनिरूपणंनामपंचदशस्तरंगः ॥ १५ ॥

१ ॐजूंसःव्यांवेदव्यासायनमःसःजूंॐ ।

॥ १ ॥ महामृत्युंजयमंत्रमाह ॥ तारइति ॥ तारःॐ ॥ व्यापिनीचंद्रयुक् औंबिंदुयुतंखंहःहौं तारःॐ ॥अर्घीश
बिंदुयुक्तश्चतुराननः ऊंबिंदुयुतोजःजूं ॥ सर्गीहंसःसः ॥ भूर्भुवःस्वरूपम् ॥ २ ॥ सकारोबालविसर्गाढ्योवविसर्ग
युतःसकारःस्वः ॥ त्र्यंबकंवैदिकोमंत्रः ॥ यथा–त्र्यंबकं यजामहे सुगंधिं पुष्टिवर्द्धनम् ॥ उर्वारुकमिव बंधनान्मृत्यो

महामृत्युंजयंवक्ष्येदुरितापन्निवारणम् ॥ यंप्राप्यभार्गवःशंभोर्मृतान्दैत्यानजीवयत् ॥ १ ॥ तारःखंव्या
पिनीचंद्रयुक्तारश्चतुराननः ॥ अर्घीशबिंदुसंयुक्तोहंसःसंर्गीचभूर्भुवः ॥ २ ॥ सकारोबालसर्गाढ्य
स्त्र्यंबकंवैदिकोमनुः ॥ भूर्भुवःस्वर्भुजंगेशस्तारीजूंसर्गवान्भृगुः ॥ ३ ॥ आकाशोमनुबिंद्वाढ्यःप्रणवां
तोमनूत्तमः ॥ महामृत्युंजयाख्योयंपंचाशद्वर्णनिर्मितः ॥ ४ ॥ वामदेवकहोलाख्यवसिष्ठामुनयोस्य
तु ॥ छंदांस्युक्तानिरुद्रेणपंक्तिगायत्र्यनुष्टुभः ॥ ५ ॥ सदाशिवमहामृत्युंजयरुद्रोस्यदेवता ॥ मायाश
क्तीरमाबीजंविनियोगोर्थसिद्धये ॥ ६ ॥

मुक्षीयमामृतादिति ॥ भूर्भुवःस्वःस्वरूपम् ॥ तारयुतोभुजंगेशोरःरौं ॥ जूंस्वरूपम् ॥ सर्गवान्भृगुःसः ॥ ३ ॥
मनुबिंद्वाढ्यःआकाशः औंबिंदुयुतोहःहौं ॥ प्रणवांतश्चायमंत्रः ॥ यथा–ॐहौंॐजूंसःभूर्भुवः स्वःत्र्यंबकं०भूर्भुवः
स्वःरौंजूंसःहौंॐइतिपंचाशद्वर्णः ॥ ४ ॥ ५ ॥ माया ह्रीं ॥ रमाश्रीं ॥ ६ ॥

१ अस्यश्रीमहामृत्युंजयमन्त्रस्यवामदेवकहोलवसिष्ठाऋषयःपंक्तिगायत्र्यनुष्टुभश्छन्दांसिसदाशिवमहामृत्युंजयरुद्रोदेवताह्रींशक्तिःश्रींबीजंममाभीष्टसिद्ध्यर्थे
जपेविनियोगः ।

मुन्यादिकानृष्यादीन्मूर्धादिषुन्यसेत् ॥ शिवेलिंगे ॥ षडंगन्यासमाह ॥ त्रिचतुरिति ॥ चतुर्भिःअनुष्टुभःत्र्यंबकमंत्रस्यआदिवर्णान् ॥मूलादिनववर्णाद्यान्मूलमंत्रस्यादौयेनववर्णास्ताराद्यास्तान् ॥ ॐनमोभगवतेरुद्रायेति पदान्वितान्-तथाशूलपाणयेइत्यादिप्रातिस्विकांगमंत्रयुतानुक्त्वाषडंगंकुर्यादित्यर्थः ॥ यथा-ॐह्रौंॐजूंसःभूर्भु

मूर्ध्निवक्त्रेहृदिशिवेपदोर्मुन्यादिकान्न्यसेत् ॥ त्रिचतुर्वसुनंदेषुगुणवर्णाननुष्टुभः ॥ ७ ॥ तारोनमो भगवतेरुद्रायेतिपदान्वितान् ॥ मूलादिनववर्णाद्यानुक्त्वाकुर्य्यात्षडंगकम् ॥८॥शूलांतेपाणयेस्वाहाहृन्मंत्रांतेनियोजयेत् ॥ अमृतांतेमूर्त्तयेमांजीवयेतिशिरोंतिमम् ॥९ ॥ शिखांतेचंद्रशिरसेजटिने वह्निवल्लभा॥ त्रिपुरांतकायहांहींकवचांतेमनुःस्मृतः ॥ १० ॥

वःस्वःत्र्यंबकंॐनमोभगवतेरुद्रायशूलपाणयेस्वाहाहृत् ॥ ॐयजामहेॐअमृतमूर्तयेमांजीवयशिरः ॥ ७ ॥ ८ ॥ ॥ ९ ॥ ॐसुगंधिंपुष्टिवर्धनंॐचंद्रशिरसेजटिनेस्वाहाशिखा ॥ ॐउर्वारुकमिवबंधनात् ॐत्रिपुरांतकायहांहीं कवचम् ॥ १० ॥

---

गमदेवकहोलवसिष्ठाऋषयःमूर्ध्नि । पंक्तिगायत्र्यनुष्टुभश्छन्दांसिवक्त्रे । सदाशिवमहामृत्युंजयरुद्रदेवतायैनमःहृदि । ह्रींशक्त्यैनमःलिंगे श्रींबीजायनमःपादयोः इति ऋष्यादिन्यासः ।

ॐह्रौंमृत्योर्मुक्षीयॐनमोत्रिलोचनायऋग्यजुःसाममंत्रायनेत्रम् ॥ ११ ॥ ॐह्रौंमामृतात्ॐनमो०अग्नित्रयायज्वल२ मारक्ष २ ॐअघोरास्त्रायअस्त्रम् ॥ १२ ॥ वर्णन्यासमाह ॥ द्वात्रिंशदिति ॥ प्रणवादिनववर्णाद्यान्सबिंदून्नमोंतां

प्रवदेत्रिपदस्यांतेलोचनायपदंपुनः ॥ ऋग्यजुःसाममंत्रायवर्णान्नेत्रमनोःपठेत् ॥११॥ अग्नित्रयाय ज्वलचज्वलमारक्षरक्षच॥ अघोरास्त्रायमंत्रोयमस्त्रमंत्रस्ततःस्मृतः ॥ १२ ॥ द्वात्रिंशत्र्यंबकाद्यर्णान्न मोंतान्बिन्दुसंयुतान्॥तारादिनववर्णाद्यानंगेष्वेषुप्रविन्यसेत् ॥ १३ ॥ पूर्वपश्चिमयाम्योदङ्मुखेषू रसिकंठतः॥वदनेनाभिहृत्पृष्ठेकुक्षौलिंगेगुदेन्यसेत् ॥ १४ ॥

त्र्यमित्यादिद्वात्रिंशद्वर्णान्पूर्ववक्त्रादिष्वंगेषुन्यसेत् ॥ १ ॐह्रौंॐजूंसःभूर्भुवःस्वःत्र्यंनमःपूर्ववक्त्रे २ ॐह्रौं०बंनमः पश्चिमवक्त्रे इत्यादिप्रयोगः ॥ १३ ॥ अंगान्याह ॥ पूर्वेति ॥ पूर्ववक्त्रादिष्वेकैकंवर्णन्यसेत् ॥ १४ ॥

(१) ॐह्रौंॐजूंसःभूर्भुवःस्वःत्र्यंनमःपूर्वमुखे १ । ॐह्रौंॐजूंसःभूर्भुवःस्वःबंनमःपश्चिममुखे२ ।ॐह्रौंॐजूंसःभूर्भुवःस्वःकंनमःदक्षिणमुखे३ ।ॐह्रौंॐ जूंसःभूर्भुवःस्वःयंनमःउत्तरमुखे ४ । ॐह्रौंॐजूंसःभूर्भुवःस्वःजांनमःउरसि५ ।ॐह्रौंॐजूंसःभूर्भुवःस्वःमंनमःकंठे६ ।ॐह्रौंॐजूंसःभूर्भुवःस्वःहेंनमःमुखे७। ॐह्रौंॐजूंसःभूर्भुवःस्वःसुंनमःनाभौ८ ।ॐह्रौंॐजूंसःभूर्भुवःस्वःगंनमःहृदि९ ।ॐह्रौंॐजूंसःभूर्भुवःस्वःधिंनमःपृष्ठे१० ।ॐह्रौंॐजूंसःभूर्भुवःस्वःपुंनमःकुक्षौ ११ ॐह्रौंॐजूंसःभूर्भुवःस्वःष्टिंनमःलिंगे१२ ॐह्रौंॐजूंसःभूर्भुवःस्वःवंनमःगुदे१३ ।ॐह्रौंॐजूंसःभूर्भुवःस्वःधंनमःदक्षिणोरुमूले१४ ।ॐह्रौंॐजूंसःभूर्भुवः स्वःनंनमःवामोरुमूले१५ ।ॐह्रौंॐजूंसःभूर्भुवःस्वःउंनमःदक्षिणोरुमध्ये१६ ॐह्रौंॐजूंसःभूर्भुवःस्वःवांनमःवामोरुमध्ये१७ ।ॐह्रौंॐजूंसःभूर्भुवःस्वःरुंनमः दक्षिणजानुनि १८ ।ॐह्रौंॐजूंसःभूर्भुवःस्वःकंनमःवामजानुनि१९ ।ॐह्रौंॐजूंसःभूर्भुवःस्वःमिंनमःदक्षिणजानुवृत्ते२० । ॐह्रौंॐजूंसःभूर्भुवःस्वःवंनमः

ऊरुमूलोरुमः यजानुवृत्तस्तनपार्श्वपादकरनसिद्धौद्धौ ॥ मूर्धन्येकैकम् ॥१५॥ पदन्यासमाह ॥ अथैकेति॥ शिवोलिंगे

ऊरुमूलोरुमध्येचजानुनोर्जानुवृत्तयोः॥स्तनयोःपार्श्वयोरंघ्र्योःकरयोर्नसिमूर्द्धनि ॥ १५ ॥ अथैकादशविन्यस्येत्पदानिशिरसिभ्रुवोः ॥नेत्रयोर्वदनेगंडेहृदयेजठरेशिवे॥१६ ॥ ऊर्वोर्जानुप्रदेशेचपादयोःक्रमशःपुनः ॥त्रिवेदगुणबाणाब्धिद्विरामाक्षिगुणेन्दुभिः॥१७॥ त्रिभिर्वर्णैश्चविज्ञेयापदसंख्याक्रमाद्बुधैः॥मूलेनव्यापकंकृत्वाततोध्यायेत्रिलोचनम् ॥ १८ ॥

॥ १६ ॥ पदेषु वर्णसंख्यामाह ॥ त्रिवेदेति ॥ त्र्यंबकंशिरसिइत्यादि० ॥ १७ ॥ १८ ॥

वामजानुवृत्ते २१ । ॐह्रौंॐजूंसःभूर्भुवःस्वःबंनमःदक्षिणस्तने २२ । ॐह्रौंॐजूंसःभूर्भुवःस्वःधंनमःवामस्तने २३। ॐह्रौंॐजूंसःभूर्भुवःस्वःनांनमः दक्षिणपार्श्वे २४ । ॐह्रौंॐजूंसःभूर्भुवःस्वःमृंनमःवामपार्श्वे २५ । ॐह्रौंॐजूंसःभूर्भुवःस्वःत्योंनमःदक्षिणेपादे २६ । ॐह्रौंॐजूंसःभूर्भुवःस्वःमुंनमः वामपादे २७ । ॐह्रौंॐ जूंसःभूर्भुवःस्वःक्षींनमःदक्षिणकरे २८। ॐ ह्रौंॐजूंसःभूर्भुवःस्वःयंनमःवामकरे २९। ॐह्रौंॐजूंसःभूर्भुवःस्वःमांनमः दक्षिणनासायाम् ३० । ॐह्रौंॐजूंसःभूर्भुवःस्वःमृंनमःवामनासायां ३१ । ॐह्रौंॐजूंसःभूर्भुवःस्वःतांनमःमूर्ध्नि ३२ । इत्यक्षरन्यासः ।

(१) त्र्यम्बकंशिरसि १ । यजामहेभ्रुवोः २ । सुगंधिंनेत्रयोः ३ । पुष्टिवर्धनंमुखे ४ । उर्वारुकंगंडयोः ५ । इवहृदये ६ । बंधनाजठरे ७ । मृत्योःलिंगे ८ । मुक्षीयऊर्वोः ९ । माजान्वोः १० । अमृतात्पादयोः ११ ॥ इतिपदन्यासः ॥ (आअमृतादितिपदच्छेदःनदकालेएव)

ॐह्रौंमृत्योर्मुक्षीयॐनमोत्रिलोचनायऋग्यजुःसाममंत्रायनेत्रम् ॥ ११ ॥ ॐह्रौंमामृतात्ॐनमो०अग्नित्रयायज्वल२
मांरक्ष २ ॐअघोरास्त्रायअस्त्रम् ॥ १२ ॥ वर्णन्यासमाह ॥ द्वात्रिंशदिति ॥ प्रणवादिनववर्णाद्यान्साबिंदून्नमोंतां

प्रवदेत्रिपदस्यांतेलोचनायपदंपुनः ॥ ऋग्यजुःसाममंत्रायवर्णान्नेत्रमनोःपठेत् ॥ ११ ॥ अग्नित्रयाय
ज्वलचज्वलमांरक्षरक्षच॥ अघोरास्त्रायमंत्रोयमस्त्रमंत्रस्ततःस्मृतः ॥ १२ ॥ द्वात्रिंशत्त्र्यंबकाद्यर्णान्न
मोंतान्बिन्दुसंयुतान्॥तारादिनववर्णाद्यानंगेष्वेषुप्रविन्यसेत् ॥ १३ ॥ पूर्वपश्चिमयाम्योदङ्मुखेषू
रसिकंठतः॥वदनेनाभिहृत्पृष्ठेकुक्षौलिंगेगुदेन्यसेत् ॥ १४ ॥

त्र्यमित्यादिद्वात्रिंशद्वर्णान्पूर्ववक्त्रादिष्वंगेषुन्यसेत ॥ १ ॐह्रौंॐजूंसः भूर्भुवःस्वःत्र्यंनमःपूर्ववक्त्रे २ ॐह्रौं०बंनमः
पश्चिमवक्त्रे इत्यादिप्रयोगः ॥ १३ ॥ अंगान्याह ॥ पूर्वेति ॥ पूर्ववक्त्रादिष्वेकैकंवर्णंन्यसेत् ॥ १४ ॥

(१) ॐह्रौंॐजूंसःभूर्भुवःस्वःत्र्यंनमःपूर्वमुखे १। ॐह्रौंॐजूंसःभूर्भुवःस्वःबंनमःपश्चिममुखे२।ॐह्रौंॐजूंसःभूर्भुवःस्वःकंनमःदक्षिणमुखे३।ॐह्रौंॐ
जूंसःभूर्भुवःस्वःयंनमःउत्तरमुखे ४। ॐह्रौंॐजूंसःभूर्भुवःस्वःजांनमःउरसि५।ॐह्रौंॐजूंसःभूर्भुवःस्वःमंनमःकंठे६।ॐह्रौंॐजूंसःभूर्भुवःस्वःहेंनमःमुखे७।
ॐह्रौंॐजूंसःभूर्भुवःस्वःसुंनमःनाभौ८।ॐह्रौंॐजूंसःभूर्भुवःस्वःगंनमःहृदि९।ॐह्रौंॐजूंसःभूर्भुवःस्वःधिंनमःपृष्ठे१०।ॐह्रौंॐजूंसःभूर्भुवःस्वःपुंनमःकुक्षौ
११ ॐह्रौंॐजूंसःभूर्भुवःस्वःष्टिंनमःलिंगे१२ ॐह्रौंॐजूंसःभूर्भुवःस्वःवंनमःगुदे१३।ॐह्रौंॐजूंसःभूर्भुवःस्वःधंनमःदक्षिणोरुमूले१४।ॐह्रौंॐजूंसःभूर्भुवः
स्वःनंनमःवामोरुमूले१५।ॐह्रौंॐजूंसःभूर्भुवःस्वःउंनमःदक्षिणोरुमध्ये१६ ॐह्रौंॐजूंसःभूर्भुवःस्वःवांनमःवामोरुमध्ये१७।ॐह्रौंॐजूंसःभूर्भुवःस्वःरुंनमः
दक्षिणजानुनि १८।ॐह्रौंॐजूंसःभूर्भुवःस्वःकंनमःवामजानुनि१९।ॐह्रौंॐजूंसःभूर्भुवःस्वःमिंनमःदक्षिणजानुवृत्ते२०। ॐह्रौंॐजूंसःभूर्भुवःस्वःवंनमः

ऊरुमूलोरुमः यजानुवृत्तस्तनपार्श्वपादकरनासिद्धौद्वौ ॥ मूर्धन्येकैकम् ॥१५॥पदन्यासमाह ॥ अथैकोति॥शिवेलिंगे

ऊरुमूलोरुमध्येचजानुनोर्जानुवृत्तयोः॥स्तनयोःपार्श्वयोरंघ्योःकरयोर्नसिमूर्द्धनि ॥ १५ ॥ अथैका
दशाविन्यस्येत्पदानिशिरासिभ्रुवोः ॥नेत्रयोर्वदनेगंडेहृदयेजठरेशिवे॥१६ ॥ ऊर्वोर्जानुप्रदेशेचपाद
योःक्रमशःपुनः ॥त्रिवेदगुणबाणाब्धिद्विरामाक्षिगुणेन्दुभिः॥१७॥ त्रिभिर्वर्णैश्चविज्ञेयापदसंख्याक्र
माद्बुधैः॥मूलेनव्यापकंकृत्वाततोध्यायेत्रिलोचनम् ॥ १८ ॥

॥ १६ ॥ पदेषु वर्णसंख्यामाह ॥ त्रिवेदेति ॥ त्र्यंबकंशिरसिइत्यादि० ॥ १७ ॥ १८ ॥

---

वामजानुवृत्ते २१ । ॐह्रौंॐजूंसःभूर्भुवःस्वःबंनमःदक्षिणस्तने २२ । ॐह्रौंॐजूंसःभूर्भुवःस्वःधंनमःवामस्तने २३। ॐह्रौंॐजूंसःभूर्भुवःस्वःनांनमः दक्षिणपार्श्वे २४ । ॐह्रौंॐजूंसःभूर्भुवःस्वःमृंनमःवामपार्श्वे २५ । ॐह्रौंॐजूंसःभूर्भुवःस्वःत्योंनमःदक्षिणेपादे २६ । ॐह्रौंॐजूंसःभूर्भुवःस्वःमुंनमः वामपादे २७ । ॐह्रौंॐ जूंसःभूर्भुवःस्वःक्षींनमःदक्षिणकरे २८। ॐ ह्रौंॐजूंसःभूर्भुवःस्वःयंनमःवामकरे २९। ॐह्रौंॐजूंसःभूर्भुवःस्वःमांनमः दक्षिणनासायाम् ३० । ॐह्रौंॐजूंसःभूर्भुवःस्वःमृंनमःवामनासायां ३१ । ॐह्रौंॐजूंसःभूर्भुवःस्वःतांनमःमूर्ध्नि ३२ । इत्यक्षरन्यासः ।

(१) त्र्यम्बकंशिरसि १ । यजामहेभ्रुवोः २ । सुगंधिंनेत्रयोः ३ । पुष्टिवर्धनंमुखे ४ । उर्वारुकंगंडयोः ५ । इवहृदये ६ । बंधनाज्जठरे ७ । मृ
योःलिंगे ८ । मुक्षीयऊर्वोः ९ । माजान्वोः १० । अमृतात्पादयोः ११ ॥ इतिपदन्यासः ॥ (आअमृतादितिपदच्छेदःमदकालेएव )

ध्यानमाह ॥ हस्तेति ॥ अष्टहस्तविनियोगमाह ॥ अंकस्थकरयोःकुंभौदधतं तदूर्ध्वस्थकरयोःकुंभाभ्यांजलमुद्धृ
त्यकरद्वयेनस्वशिरोभिषिंचंतंकरयोर्मृगाक्षमालेचदधतमिति॥मूर्धनिस्थितोयश्चंद्रस्ततःस्रवतामृतेनोत्क्लिन्नातनुर्य
स्य ॥ उंदीक्लेदनेइत्यस्यनिष्ठायामुन्नेतिरूपम् ॥सगिरिजंभवानीयुतम्॥ त्रीण्यंबकानिनेत्राणियस्यतम् ॥ १९ ॥
मुद्राआह ॥ मुष्टीति ॥ मुष्टिंदक्षिणहस्तेनविधायोर्ध्वंसमुन्नयेत् ॥ मुद्रामुष्ट्यभिधाख्यातासर्वविघ्नविनाशिनीति
मुष्टिमुद्रालक्षणम् ॥ सारंगोमृगस्तन्मुद्रालक्षणं यथा—दक्षस्यानामिकांगुष्ठमध्यमाग्राणियोजयेत् ॥ शिष्टेद्वेउच्छ्रिते

हस्तांभोजयुगस्थकुंभयुगलादुद्धृत्यतोयंशिरः सिंचंतंकरयोर्युगेनदधतंस्वांकेसकुंभौकरौ ॥ अक्षस्र
ङ्मृगहस्तमंबुजगतंमूर्द्धस्थचंद्रस्रवत्पीयूषोन्नतनुंभजेसगिरिजंमृत्युंजयंत्र्यंबकम् ॥१९॥ मुष्टिसारंग
शक्त्याख्यालिंगपंचमुखाभिधाः॥मुद्राःप्रदर्श्यप्रजपेल्लक्षंतस्यदशांशतः ॥ २० ॥

कुर्यान्मृगमुद्रेयमीरितेति ॥ मुष्टीकरौविधायद्वौवामस्योपरिदक्षिणम् ॥ कृत्वाशिरसियुंजीतशक्तिमुद्रेयमीरितेति
शक्तिमुद्रालक्षणम् ॥ उच्छ्रितंदक्षिणांगुष्ठंवामांगुष्ठेनबंधयेत् ॥ वामांगुलीर्दक्षि णाभिरंगुलीभिश्चबंधयेत् ॥ लिङ्गमुद्रे
यमाख्याताशिवसांनिध्यकारिणीतिलिंगमुद्रा ॥ मणिबंधकरौयुक्तावंगुल्यग्राणिमेलयेत्॥ मुद्रापंचमुखाख्येयंदर्शि
ताशिवतोषिणीतिपंचमुखमुद्रालक्षणम् ॥ २० ॥

दशद्रव्याण्याह ॥ बिल्वेति ॥ २१ ॥ पीठशक्तीराह ॥ वामेति ॥ २२ ॥ २३ ॥ २४॥आसनमन्त्रमाह ॥ तारइति ॥ ॐनमोभगवतेसकलगुणात्मशक्तियुक्तायअनंताययोगपीठात्मनेनमइति ॥ २५ ॥ २६॥ आवरणपूजाप्रकारमाह ॥

दशद्रव्यैःप्रजुहुयात्तानिबिल्वफलंतिलाः ॥पायसंसार्पिषादुग्धंदधिदूर्वाचसप्तमी ॥ २१ ॥ वटात्पला
शात्खदिरात्समिधोमधुरप्लुताः॥वामादिशक्तिसंयुक्तेपीठेशैवेयजेच्छिवम् ॥ २२॥वामाज्येष्ठातथा
रौद्रीकालीप्रोक्ताचतुर्थिका॥कलादिकाविकरिणीबलाद्याविकरण्यपि ॥२३ ॥ बलप्रमथनीचान्या
सर्वभूतदमन्यपि ॥ मनोन्मनीतिशर्वस्यनवोक्ताःपीठशक्तयः ॥२४॥तारोनमोभगवतेसकलेतिपदं
ततः ॥ गुणात्मशक्तियुक्तायअनंतायवदेत्पदम्॥ २५ ॥योगपीठात्मनेपीठमंत्रःप्रोक्तोनमोंतिकः ॥
पीठेपुष्पांजलिंदत्त्वामूर्तिंमूलेनकल्पयेत् ॥ २६ ॥ पाद्यादिकुसुमांतोपचारांतेत्वावृतीर्यजेत्॥ ईशा
नंशंभुकोणेतुयजेदीशानमंत्रतः ॥ २७ ॥

पाद्यादीति ॥ पाद्यार्घ्याचमनीयस्नानवस्त्रोपवीतचंदनपुष्पाणिदत्त्वावरणपूजांकुर्यात ॥ तत्रेशानकोणेईशानःसर्व विद्यानामितितैत्तिरीयशाखोक्तंमंत्रंपठित्वेशानंयजेत् ॥ २७ ॥

तत्पुरुषायविद्महे अघोरेभ्योथघोरेभ्यः वामदेवायनमः सद्योजातंप्रपद्यामि इत्यादिभिश्चतुर्भिर्मंत्रैस्तत्पुरुषा
दीन्प्रागादिषुयजेत् ॥ तेषांसमीपेस्वनामाभिर्निवृत्त्याद्याःकलाद्वितीयावरणेंगानितृतीयेसूर्यादीनांमूर्तीः ॥ सूर्यमूर्त



तत्पुरुषमघोरंचवामदेवंतृतीयकम्॥सद्योजातंयजद्दिक्षुवेदोक्तस्वस्वमंत्रतः॥२८॥ ईशानादिसमीपे
षुनिवृत्त्याद्याःकलाःक्रमात्॥निवृत्तिश्चप्रतिष्ठाचविद्याशांतिश्चतुर्थ्यपि ॥ २९ ॥ शांत्यतीतापंचमी
तिततोंगानियजेच्चषट्॥ सूर्य्येंदुक्षितितोयाग्निपवनाकाशयज्वनाम् ॥ ३०॥ मूर्तयोऽष्टौक्रमात्पूज्या
स्तृतीयावरणस्थिताः ॥ रमाराकाप्रभाज्योत्स्नापूर्णोषापूरणीसुधा ॥ ३१ ॥ चतुर्थावरणपूज्याः
शक्तयोधवलप्रभाः॥विश्वावंद्यासिताप्रह्वासारासंध्याशिवानिशा ॥३२॥ पंचमावरणेभ्यर्च्याःश
क्तयःश्यामविग्रहाः ॥ आर्य्याप्रज्ञाप्रभामेधाशांतिःकांतिर्धृतिर्मतिः ॥ ३३ ॥ षष्ठावरणगाह्यष्टौ
संपूज्याअरुणप्रभाः ॥ धरोमापावनीपद्माशांतामोघाजयामला ॥ ३४ ॥

येनमइत्यादिप्रयोगः ॥ चतुर्थेरमादयः ॥ पंचमोविश्वादयः ॥ षष्ठेआर्यादयः ॥ सप्तमेधराद्याः ॥ अनंतादयोऽष्टमे
॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

॥ ८० ॥ ८१॥८२॥ कलाद्विकरणाभिधःकलविकरणः ॥८३॥ बलाद्विकरणोबलविकरणः ॥ तार्तीये तृतीयावरणे तत्त्वावरणेतत्त्वसंख्यांश्चतुर्विंशतिमितान् ॥ ८४ ॥ तानेवाह॥सिद्धयइति ॥ ताउक्ताः ॥ भवान् अष्टौ ॥ एवंनाग

इष्ट्वातंकर्णिकामध्येसद्योजातादिकान्यजेत् ॥ दिक्षुमध्येततोष्टारेनंद्यादीनष्टसेवकान् ॥ ८० ॥ नंदी महाकालसंज्ञोगणेशोवृषभस्तथा॥ततोभृंगीरिटिःस्कंदउमाचंडीश्वरोऽष्टमः ॥ ८१ ॥ ततस्तुषोडश दलेद्वितीयावरणेस्थिताः ॥ अनंतसूक्ष्मौचशिवएकपादेकरुद्रकः ॥ ८२ ॥ ततस्त्रिमूर्तिश्रीकंठौवाम देवोष्टमोमतः॥ ज्येष्ठःश्रेष्ठोरुद्रकालौकलाद्विकरणाभिधः ॥ ८३ ॥ बलोबलाद्विकरणोबलप्रमथन स्तथा॥ एतान्संपूज्यतार्तीयेतत्त्वसंख्यान्सुरान्यजेत् ॥ ८४ ॥ सिद्धयोष्टौमातरोष्टौभैरवाष्टकमि त्यमून्॥ततश्चतुर्थावरणेभवान्नागान्नृपान्गिरीन् ॥ ८५ ॥ भवःशर्वस्तथेशानःपशुपोरुद्रएवच ॥ उग्रोभीमोमहादेवःशिवाष्टकमुदाहृतम्॥ ८६ ॥अनंतोवासुकिश्चाथतक्षकश्चकुलीरकः ॥ कर्कोटकः शंखपालःकंबलाश्वतरावपि ॥ ८७ ॥इमेनागावैन्यपृथूहैहयोर्जुनसंज्ञकः ॥ शाकुंतलेयोभरतोनलो रामोनृपाष्टकम् ॥ ८८ ॥

नृपतीगिरयोपिप्रत्येकमष्टौ॥८५॥तानेवाह॥भवइति॥८६॥नागानाह॥अनन्तइति॥८७॥नृपानाह वैन्येति ॥ ८८ ॥

एवमिति ॥ इत्थंपंचांगन्यासंकृत्वाप्रणम्याष्टांगंनत्वात्मानंरुद्रस्वरूपंध्यायेत् ॥ नमस्कारश्चाष्टाभिर्मंत्रैर्विधेयः॥
मंत्रोयथा–हिरण्यगर्भः० १ ॥ यःप्राणतः० २ ॥ ब्रह्मजज्ञानं० ३ ॥ महीद्यौः० ४ ॥ उपश्वासय० ५ ॥ अग्ने
नय० ६ ॥ यातेअग्ने० ७ ॥ इमंयम० ८ ॥ इमाअष्टावृचःपठन्नष्टांगंनमस्कुर्यात् ॥ अष्टांगानियथा–उरसा

एवंन्यस्यप्रणम्याथध्यायेदात्मनिशंकरम् ॥ ७५ ॥ कैलासाचलसंनिभंत्रिनयनंपंचास्यमंबायुतंनी
लग्रीवमहीशभूषणधरंव्याघ्रत्वचाप्रावृतम्॥ अक्षस्रग्वरकुंडिकाभयकरंचांद्रींकलांबिभ्रतंगंगांभोविल
सज्जटंदशभुजंवंदेमहेशंपरम् ॥७६॥ दशलक्षजपेन्मंत्रमयुतपरमान्नकैः ॥ सघृतैर्जुहुयाद्यौपीठेपूर्वो
दितेयजेत् ॥ ७७ ॥ पूजामंत्रमथोवक्ष्येतथावरणदेवताः ॥ अष्टपत्रंषोडशारंचतुर्विंशतिपत्रकम् ॥
॥ ७८ ॥दंतपत्रंततःकुर्य्याच्चत्वारिंशद्दलंततः ॥ तद्बहिर्भूपुरंकुर्यात्तत्ररुद्रंप्रपूजयेत् ॥ ७९ ॥

शिरसादृष्ट्यामनसाश्रद्धयापिच ॥ पद्भ्यांकराभ्यांवाचाचप्रणामोऽष्टांगईरितइति ॥ ७५ ॥ ध्यानमाह ॥ कैला
सेति ॥ अहीशावासुक्यादयएवभूषणानियस्यतम् ॥ अक्षमालावरौदक्षयोः॥ कुंडिकाकमंडलुरभयंचवामयोः ॥
परमान्नकैःपायसैः ॥ ७६ ॥ ७७ ॥ ७८ ॥ दंतपत्रंद्वात्रिंशद्दलम् ॥ ७९ ॥

इतिसंपुटीकरणंतत्फलंचोक्त्वा चतुर्थन्यासमाह ॥ मनोजूति० गुह्ये ॥ अबोध्यग्निरुदरे ॥ ७१ ॥: मूर्धानं दिवो ० हृदि ॥ मर्माणितेवर्मभिश्छाद०मुखे ॥ जातवेदायदिवापावकोसि०शिरसि ॥ एवंपंचांगेषुन्यासश्चतुर्थः ॥ ४ ॥

नपराभवितुंशक्ताःपलायंतेतिदूरतः ॥मनोजूतिर्न्यसेद्गुह्येबोध्यग्निर्जठरानले ॥ ७१॥ मूर्द्धानंहृदये न्यस्येन्मुखेमर्माणितेकचम् ।जातवेदास्तुशिरसिन्यासःप्रोक्तश्चतुर्थकः ॥ ७२॥ हृदयंशिवसंकल्पं शिरःपुरुषसूक्तकम्॥शिखाद्भ्यःसंभृतइतिवर्मप्रतिरथंमतम् ॥ ७३ ॥ विभ्राडितिस्मृतंनेत्रमस्त्रंतुशतरुद्रियम् ॥ अयंतुपंचमोन्यासःकृतःसर्वेष्टसिद्धिदः ॥ ७४ ॥

॥ ७२ ॥ षडंगमाह ॥ हृदयमिति ॥॥यज्जाग्रतः०हृत् ॥ सहस्रशीर्षा०शिरः ॥ अद्भ्यःसंभृतः०शिखा ॥ आशुः शिशानः० कवचम् ॥ ७३ ॥ विभ्राट्०नेत्रम् ॥ नमस्तेरुद्रमन्यवे इत्यादिशतरुद्रियं अस्त्रम् ॥ इतिपञ्चमन्यासः ५ ॥ ७४ ॥

अक्षरन्यासमाह ॥ मूलेति ॥ ॐ नमःशिरसि—नंनमः नसोरित्यादि० ॥ इतिप्रथमोन्यासः १ ॥ ६३ ॥ ॐ शिर
सेनमः—नांनासिकायैनमः ॥ इतिद्वितीयोन्यासः २ ॥ सद्योजातंप्रपद्यामीत्यादिकंमंत्रपंचकंपादादिषुन्यस्येत् ॥
हंसहंसइतिवदेत् ॥ इतितृतीयोन्यासः ३ ॥ ६४ ॥ ६५ ॥ संपुटीकरणंकार्यमित्याह ॥ एवमिति॥संपुटं नाम त्राता

मूलवर्णास्ततोन्यस्येन्मस्तकेनसिचालिके॥मुखेकंठेहृदिपुनर्हस्तयोर्दक्षवामयोः ॥ ६३॥ नाभौप
दोरितिन्यासोदशांगेषुद्वितीयकः॥पादोरुहृन्मुखेमूर्ध्निसद्योजातमुखाऋचः ॥६४॥ विन्यस्यप्रत्यृ
चंप्रयाद्धंसहंसेतिसाधकः॥तृतीयन्यासइत्युक्तःकृतेयस्मिञ्छिवोभवेत् ॥६५॥ एवंन्यासत्रयंकृत्वा
संपुटंरचयेत्ततः॥दिक्षुवासवमुख्यानांन्यासःसंपुटउच्यते ॥ ६६ ॥ त्रातारमिंद्रमंत्रेणप्राच्यांन्यस्ये
द्विडौजसम् ॥ त्वन्नोअग्नेऋचावह्निंसुगंनइत्यृचायमम् ॥६७॥ असुन्वंतन्निर्ऋतिंचतत्त्वायामीतितो
यपम् ॥ आनोनियुद्भिर्वायुंचवयंसोमेत्यचाविधुम् ॥ ८ ॥ तमीशानमितीशानमाग्नेयादिषुविन्य
सेत् ॥ अस्मेरुद्राविधिंचोर्ध्वस्योनेतिपृथिवीमधः ॥ ६९ ॥ एवंयःसंपुटंकुर्य्यात्सस्यात्किल्बिषव
र्ज्जितः॥ तंदीप्यमानमीक्षंतेप्रेतचौराद्युपद्रवाः ॥ ७० ॥

रमिंद्रामित्यादिमंत्रैःपूर्वादिषुक्रमेणमुद्रितांजलिदर्शनंतेषांनतयोऽपिकार्याः॥एवंकृतेतेजस्वीभवतीत्यर्थः ॥६६-७०॥

गिरीनाह ॥ हिमवानिति ॥ ८९ ॥ वासवादयइति ॥ प्रत्येकमष्टौ ॥ ९० ॥ तानाह ॥ इन्द्रेति ॥ ९१ ॥ ९२ ॥

हिमवान्निषधोविंध्योमाल्यवान्पारियात्रकः । मलयोहेमकूटश्चगंधमादनइत्यपि॥८९॥गिर्य्यष्टकंपंचमेतुचत्वारिंशत्सुरान्यजेत्॥वासवादयइत्येषांशक्तयोह्यायुधान्यपि॥वाहनानिगजाश्चेतिचत्वारिंशत्सुराःस्मृताः॥९०॥इंद्राग्नियमरक्षांसिवरुणानिलभाधिपाः॥ईशानइतिदिक्पालाःशचीस्वाहावराहजा॥खड्गिनीवारुणीचापिवायवीचकुबेरजा॥९१ ॥ ईशानीशक्तयःप्रोक्ताःकुलिशंशक्तिदंडकौ ॥ खड्गंपाशोंकुशंचैवगदाशूलेचहेतयः ॥ ९२ ॥ ऐरावतोजमहिषौप्रेतमीनपृषन्नराः ॥ वृषभोवाहनानिस्युर्दिक्पालानांक्रमादमी ॥ ९३ ॥ ऐरावतःपुंडरीकोवामनःकुमुदोंजनः ॥ पुष्पदंतःसार्वभौमःसुप्रतीकश्चदिग्गजाः ॥९४॥ पञ्चाब्जान्येवमापूज्यभूगृहेदिक्षुदिक्पतीन् ॥ पुनरभ्यर्चयेद्धीमान्षष्ठमावरणंस्मृतम्॥९५ ॥ आग्नेय्यांभूगृहस्याथविरूपाक्षंप्रपूजयेत् ॥ विश्वरूपंयातुधानंवायव्यांतुपशोःपतिम् ॥ ९६ ॥ ऊर्द्ध्वलिंगमथैशान्यामथोभूसदनाद्बहिः ॥दिक्षुनागाष्टकंपूज्यमेवंसप्तावृतिर्यजिः ॥९७॥

॥ ९३ ॥ ९४ ॥ पंचाब्जानिपद्मानि ॥ ९५ ॥ ९६ ॥ यजिः पूजा सप्तावृतिःसप्तावरणयुता ॥ ९७ ॥

नागाष्टकमाह ॥ शेषाख्यइति ॥ अहयोनागाः ॥ ९८ ॥ तेषांवर्णानाह॥ श्वेतइति ॥ पीतौद्वौवासुकिशंखपालौ॥
कृष्णौमहापद्मकंबलौ ॥ ९९ ॥ जातीराह ॥ विप्रइति ॥ १०० ॥ फणसंख्यामाह ॥ दिगिति ॥ शेषः सहस्रफणः॥

शेषाख्यस्तक्षकोनंतोवासुकिःशंखपालकः॥ महापद्मःकंबलश्चकर्कोटकइमेऽहयः ॥ ९८ ॥ श्वेतोनी
लःकुंकुमाभःपीतःकृष्णावथोज्ज्वलः॥वर्णतःशेषमुख्याःस्युस्तेषांजातीःफणान्ब्रुवे ॥९९ ॥ विप्रोवै
श्यस्तथाविप्रःक्षत्रियोवैश्यशूद्रकौ॥शूद्रश्चक्रमतोज्ञेयाःशेषाद्याःपूजनेबुधैः॥ १००॥ दिग्बाणदशस
ताद्रिशरसंख्यानितुक्रमात्॥शतानित्रिंशत्रिंशच्चफणास्तेषांसमीरिताः ॥ १०१ ॥ एवमर्चन्महादेवं
पंचांगन्यासपूर्वकम्॥दशाक्षरजपासक्तोनसीदेत्स्वेष्टसाधने॥१०२॥मनोहराणिगेहानिसुंदर्य्योवाम
लोचनाः॥ धनमिच्छापूरणांतंलभतेशिवसेवनात् ॥ १०३ ॥ प्रयोगान्पूर्वमंत्रोक्तान्कुर्वीतात्रदशा
क्षरे ॥ दशाक्षरंभजन्विप्रोरुद्रजापीभवेत्सदा ॥ १०४ ॥

तक्षकःपंचशतफणः ॥ अनंतःसहस्रफणः ॥ वासुकिशंखपालौसप्तशतफणौ ॥ महापद्मःपंचशतफणः॥कंबलकर्को
टकौत्रिंशत्फणौ ॥ तथाचैवंप्रयोगः—श्वेतायविप्रवर्णायसहस्रफणायशेषायनमइत्यादिः ॥ १०१ ॥ एवमिति ॥
इत्थंपंचांगन्यासंकृत्वा ॥१०२॥ १०३ ॥ १०४ ॥

कुबेरमंत्रमाह ॥ यक्षायेति ॥ यथा-यक्षायकुबेरायवैश्रवणायधनधान्याधिपतयेधनधान्यसमृद्धिंमेदेहिदापयस्वाहेति ॥ बाणरामाक्षरःपंचत्रिंशदर्णः ॥१०५॥ १०६॥ १०७॥ षडंगमाह ॥ त्रीति ॥ यक्षायहृदयायनमइत्यादि॰॥

अथमंत्रंकुबेरस्यवक्ष्येसर्वसमृद्धिदम्॥यक्षायपदमुच्चार्यकुबेरायपदाच्चवै ॥ १०५ ॥ श्रवणायधनाणांतेधान्याधिपतयेधनम्॥धान्यशब्दात्समृद्धिंमेदेहिदापयठद्वयम् ॥ १०६ ॥ बाणरामाक्षरोमंत्रोविश्रवामुनिरस्यतु॥छंदस्तुबृहतीदेवःशिवमित्रंधनेश्वरः ॥१०७॥त्रिचतुःपंचवस्वष्टमुनिवर्णैर्मनूद्भवैः ॥ कृत्वाषडंगंधनदंचिंतयेदलकागतम् ॥ १०८ ॥मनुजवाह्यविमानवरस्थितंगरुडरत्ननिभंनिधिनायकम् ॥शिवसखंमुकुटादिविभूषितंवरगदेदधतंभजतुंदिलम्॥ १०९ ॥लक्षमेकंजपेन्मंत्रंदशांशंजुहुयात्तिलैः ॥ धर्मादिपीठेप्रयजेदंगलोकपहेतयः ॥ ११० ॥शिवालयेजपेन्मंत्रमयुतंधनवृद्धये॥बिल्वमूलोपविष्टेनजप्तोलक्षंधनर्द्धिदः ॥ १११ ॥

॥ १०८ ॥ ध्यानमाह ॥ मनुजेति ॥ गरुडरत्नंगारुडमणिः ॥ वरगदेदक्षवामयोः ॥ १०९ ॥ धर्मादयःपीठशक्तय उक्ताः ॥ ११० ॥ १११ ॥

---

१ अस्यकुबेरमंत्रस्यविश्रवाऋषिःबृहतीछंदः शिवमित्रंधनेश्वरोदेवताममाभीष्टसिद्ध्यर्थेजपेविनियोगः ।

मंत्रांतरमाह ॥ आदाविति ॥ सैवरमैव ॥ यथा–ॐश्रींॐह्रींश्रींह्रींक्लींश्रींक्लींवित्तेश्वरायनमइति ॥ ११२ ॥ षडंग
माह ॥ त्रीति ॥ ॐश्रींॐहृत् ह्रींश्रींशिरइत्यादि० ॥ ११३ ॥ गंगामंत्रमाह ॥ प्रणवइति ॥ शिवानारायणीतिपद
द्वयंङेंतम् ॥ दशहरागंगेतिपदद्वयमपिचतुर्थ्यंतम् ॥ वह्निजायास्वाहा ॥ यथा–ॐनमः शिवायैनारायण्यैदशहरा

आदौतारपुटालक्ष्मीस्ततोमायापुटारमा ॥ ततःकामपुटासैवङेंतोवित्तेश्वरोनमः ॥ ११२ ॥ षो
डशाक्षरमंत्रोयंसर्वदारिद्र्यनाशनः ॥ त्रिनेत्रनयनद्वीषुयुग्माणैरंगकंमनोः ॥ध्यानार्चनादिकंसर्वमस्य
पूर्ववदाचरेत् ॥ ११३ ॥ अथशंभोःशिरस्थायादेवसिंधोर्मनूंब्रुवे ॥ प्रणवोहृदयंङेंतेशिवानाराय
णीपदे॥तद्वद्दशहरागंगेवह्निजायानखाक्षरः ॥ ११४ ॥ मनुर्व्यासोमुनिश्छंदःकृतिर्गंगास्यदेवता ॥
त्रिवह्निवेदबाणाग्निनेत्रवर्णैःषडंगकम् ॥ ११५ ॥उत्फुल्लामलपुंडरीकरुचिराकृष्णेशविध्यात्मिकाकुं
भेष्टाभयतोयजानिदधतीश्वेतांबरालंकृता ॥ हृष्टास्याशशिशेखराखिलनदीशोणादिभिःसेविताध्ये
यापापविनाशिनीमकरगाभागीरथीसाधकैः ॥ ११६ ॥

यैगंगायैस्वाहेति नखाक्षरोविंशत्यर्णः ॥ ११४ ॥ ११५ ॥ ध्यानमाह ॥ उत्फुल्लेति ॥ इष्टोवरः ॥ वरपद्मेदक्षयोः ॥
कुंभाभयेवामयोः ॥ मकरगामकरवाहना ॥ ११६ ॥



अस्यगंगामंत्रस्यवेदव्यासऋषिःकृतिश्छंदः गंगादेवतामामाभीष्टसिद्ध्यर्थेजपेविनियोगः ।

जयादयः शक्तयउक्ताः ॥ ११७ ॥ ११८ ॥ ११९ ॥ १२० ॥ १२१ ॥ १२२ ॥ मंत्रांतरमाह ॥ तारइति ॥ वाक्ऐं॥ गगनंहः सदृकइयुतःहि ॥ क्रियालः ॥ तंद्री मः ॥ पिनाकीशो लः ॥ विषं मः ॥ लः स्वरूपं ॥ एतेसूक्ष्मसंता

लक्षंजपेद्दशांशेनजुहुयात्सघृतैस्तिलैः॥जयादिशक्तिभिर्युक्तेपीठेभागीरथींयजेत् ॥ ११७ ॥ प्रयजे त्केसरेष्वंगंदलेरुद्रंहरिंविधिम्॥ सूर्य्यंहिमाचलंमेनांभगीरथमपांपतिम्॥११८ ॥ दलाग्रतोमीनकूर्म मंडूकमकरानपि॥हंसान्कारंडवांश्चक्रवाकान्सारसकान्यजेत् ॥ ११९ ॥चतुरस्रेशक्रमुख्यानायुधैः संयुतान्यजेत्॥एवंसंसाधितोमंत्रोभीष्टंयच्छतिमंत्रिणाम् ॥ १२० ॥ ज्येष्ठशुक्लदशम्यांतांविशेषेण भजेद्बुधः ॥ दद्याद्दशभ्योविप्रेभ्योदशप्रस्थमितांस्तिलान् ॥ १२१ ॥ जप्त्वासहस्रंहुत्वाचोपोष्यतत्र विकल्मषः ॥ सर्वभोगसमायुक्तोजायतेमानवोभुवि।१२२।तारोनमोभगवतिवाक्सदृग्गगनंहिलि॥ क्रियातंद्रीपिनाकीशविषलाःसूक्ष्मसंयुताः॥ १२३ ॥गंगेमांपावयद्वंद्वंमंतेहुतवहांगना ॥ गिरिनेत्रा क्षरीविद्यास्मृतापातकसंघहृत् ॥ १२४ ॥

इयुताः ॥ तेनाहिलिहिलिमिलिमिलि ॥ हुतवहांगनास्वाहा ॥ गिरिनेत्राक्षरीसप्तविंशत्यर्णा ॥ यथा–ॐनमोभग वतिऐंहिलि २ मिलि २ गंगेमांपावय २ स्वाहेति ॥ १२३ ॥ १२४ ॥

षडंगमाह रामेति ॥ अंकानव ॥ इयमेवाविद्या ॥ आदिमाःप्रथमेयेसप्तार्णाः ॐनमोभगवतीतितद्भीनानखराक्ष
रीविंशतिवर्णा ॥ १२५ ॥ मंत्रांतरमाह ॥ तारइति ॥ ॐहिलि २ मिलि २ गंगेदेविनमइति ॥ १२६ ॥ तिथिवर्णः
पंचदशार्णः ॥ षडंगमाह ॥ अग्नीति ॥ मन्त्रान्तरमाह ॥ तारइति ॥ तारॐ ॥ मायाह्रीं ॥ रमाश्रीं ॥ हार्दंनमः
॥ १२७ ॥ स्मृतिर्गः ॥ अत्रिर्दः ॥ सदृग्वायुः इयुतोयः यि ॥ वर्मंहुं ॥ स्वरूपमन्यत् ॥ यथा–ॐह्रींश्रींनमोभगवति

रामवेदांगवह्न्यंकनेत्रार्णैरंगमीरितम् ॥ इयमादिमसप्तार्णत्यक्तोक्तानखराक्षरी ॥ १२५ ॥ बाणवे
दाग्निरामाग्निनेत्रार्णैरंगमीरितम् ॥ तारोहिलिमिलिद्वंद्वंगंगेदेविनमोमनुः ॥ १२६ ॥ तिथिवर्णो
यमस्याग्निनेत्राक्ष्यक्षियुगाक्षिभिः ॥ तारोमायारमाहार्दंततोभगवतीतिच ॥ १२७ ॥ गंस्मृत्येत्रिस
दृग्वायुस्तेनमोवर्मफड्मनुः॥ त्रिनेत्रवेदपंचाक्षियुग्मार्णैरंगमीरितम् ॥ १२८ ॥ एषांचतुर्णांमंत्राणामु
पास्तिःपूर्ववन्मता ॥ वाङ्मायाकमलाकामवेदाद्योविषमिंदुयुक् ॥ १२९ ॥

गंगेदायितेनमोहुंफट्इति अष्टादशार्णः ॥ षडंगमाह ॥ त्रीति ॥ १२८ ॥ उपास्तिःपूजा ॥ पूर्ववद्विंशत्यर्वणत ॥
मणिकर्णिकामंत्रमाह ॥ वागिति ॥ वाक्ऐं ॥ मायाह्रीं ॥ कमलाश्रीं ॥ कामःक्लीं ॥ वेदाद्यॐ ॥ इंदुयुक्तविषंसबिं
दुर्मः मं ॥ १२९ ॥

मणिकर्णिस्वरूपम् ॥ भगीब्रह्माक एयुतःके ॥ हृदयंनमः ध्रुवसंपुटआद्यंतप्रणवयुतः ॥ १३० ॥ षडगमाह ॥
चंद्रेति ॥ ॐहृत् ऐंह्रींशिरः श्रींक्लींशिखेत्यादि ॥ १३१ ॥ ध्यानमाह ॥ फुल्लेति ॥ असव्येदक्षकरेइंदीवरमालां

मणिकर्णिभगीब्रह्माहृदयंध्रुवसंपुटः॥मंत्रः[1]पंचदशार्णोऽस्यमुनिर्व्यासोतिशक्वरी ॥ १३० ॥ छंदःश्री
मणिकर्णीतुदेवतासुखपुत्रदा॥चंद्रनेत्राक्षिनेत्रेषुवह्निवर्णैःषडंगकम् ॥ १३१ ॥ फुल्लेंदीवरनिर्मितांकर
तलेमालामसव्येकरेबीजापूरफलंसितांबुजमयींमालांदधानांहृदि ॥श्वेतक्षौमवृताशरद्विधुनिभात्र्यक्षा
निबद्धांजलिर्ध्यातव्यामणिकर्णिकारविसमातोयेशकाष्ठामुखी ॥ १३२ ॥ लक्षत्रयंजपेन्मंत्रंजुहुयात्त
द्दशांशतः॥पुंडरीकैस्त्रिमध्वक्तैर्यजेत्तांगंगयासमम् ॥ १३३ ॥ अयंमनुर्जनैर्जप्तोमोक्षलक्ष्मींप्रयच्छ
ति ॥ सुखंसमस्तंसंतानंसौभाग्यंधनसंचयम् ॥ १३४ ॥

दधतीअपरेवामेबीजपूरम् ॥ शरच्चंद्रकांतिः ॥ तेजसारवितुल्या ॥ तोयेशकाष्ठामुखीपश्चिमाभिमुखी ॥ १३२ ॥
पुंडरीकैःसितांभोजैः गंगयासमंयजेत् गंगामंत्रैरेवावरणपूजांकुर्यात् ॥ १३३ ॥ १३४ ॥

१ ॐऐंह्रींश्रींक्लींॐमंमणिकर्णिकेनमःॐइतिपंचदशार्णः । अस्यश्रीमणिकर्णिकामंत्रस्यवेदव्यासऋषिरतिशक्वरीछंदः श्रीमणिकर्णिकादेवताममाभीष्ट
सिद्ध्यर्थेजपे विनियोगः ।

तस्या एव मंत्रांतरमाह ॥ प्रणव इति ॥ मोबिंदुयुक् ॥ मं ॥ यथा-मं मणिकर्णिके प्रणवात्मिकेनमः ॥ मनुवर्ण श्चतुर्दशार्णः ॥ अस्योपासनापञ्चदशार्णवद्विधेया ॥ मणिकर्णिकोपासकःकुदेशेमगधादौमृतोपिब्रह्मैवस्यात् ॥ ॥ १३५ ॥ १३६ ॥ इतिश्रीमंत्रम०व्याख्यायांनौकायांशिवादिमंत्रकथनंनामषोडशस्तरंगः ॥ १६ ॥ अथकार्तवीर्यार्जुनमंत्रान्वक्तुंप्रतिजानीते ॥ अथेति ॥ गोपितानन्यैराचार्यैःशंकराचार्यप्रभृतिभिरप्रकाशितान् ॥ १ ॥

प्रणवोबिंदुयुङ्मोंतेमण्यंतेकर्णिकेप्रण ॥वात्मिकेहृदयंमंत्रोमनुवर्णोऽस्यपूर्ववत् ॥ १३५ ॥ विधेयोपासनासर्वामणिकर्ण्याउपासकः ॥कुदेशेपिमृतोयातिब्रह्मैवामलमव्ययम् ॥ १३६ ॥ इति श्रीमंत्रमहोदधौशिवादिमंत्रकथनंनामषोडशस्तरंगः ॥१६ ॥ अथप्रदान्मनून्वक्ष्येकार्तवीर्यस्यगोपितान् ॥ यःसुदर्शनचक्रस्यावतारःक्षितिमंडले ॥ १ ॥वह्नितारयुतारौद्रीलक्ष्मीरग्नींदुशांतियुक् ॥ वेधाधरेंदुशांत्याढ्योनिद्राग्नीशाग्निबिंदुयुक् ॥ २ ॥

मंत्रराजमुद्धराति ॥ वह्नीति ॥ रौद्रीफः ॥ वह्नीरेफः तारओं ताभ्यांयुता ॥ तेनफ्रों ॥ लक्ष्मीःवःअग्नींदुशांतियुक्‌रबिंदुईयुता ॥ तेनव्रीं ॥ वेधाः कः धरेंदुशांत्याढ्यः लबिंदुईयुतः ॥ तेनक्लीं ॥ निद्रामः अग्नीशाग्निबिंदुयुक् ऊरबिंदुयुतः ॥ तेनभ्रूम् ॥ २ ॥

पाशम् ॥ आं ॥ मायाह्रीं ॥ अंकुशं क्रों ॥ पद्माश्रीं वर्महुं ॥ अस्त्रंफट् ॥ कार्तवीस्वरूपम् ॥ वाय्वासनोयyुतः अनंतोयांयुतोरेफः ॥ तेनर्या ॥ वह्निजौरेफजकारौ ॥ कर्णसंस्थितौउयुतौ ॥ तेनर्जु ॥ ३ ॥ मेषोनःसदीर्घःना ॥ पवनोयः ॥ हृदंतिकोनमोंतोमनुः कथितः ॥ प्रणवादिर्विंशत्यर्णः ४ ॥ ध्रुवॐ-बीजम् ॥ नमः शक्तिः ॥ ९ ॥

पाशोमायांकुशंपद्मवर्मास्त्रेकार्तवीपदम् ॥ रेफोवाय्वासनोनंतोवह्निजौकर्णसंस्थितौ ॥ ३ ॥ मेषःस दीर्घःपवनोमनुरक्तोहृदंतिकः ॥ ऊनविंशतिवर्णोयंतारादिर्नखवर्णकः ॥ ४ ॥ दत्तात्रेयोमुनिश्चास्य च्छंदोऽनुष्टुबुदाहृतम् ॥ कार्तवीर्य्यार्जुनोदेवोबीजंशक्तिर्ध्रुवश्चहृत् ॥ ५ ॥ शेषाद्यबीजयुग्मेनहृदयंवि न्यसेद्बुधः ॥ शांतियुक्तंचतुर्थेनकामाढ्येनशिरोंगकम् ॥ ६ ॥

षडंगमाह ॥ शेषोति ॥ शेषआ ॥ तद्युतेनाद्यबीजद्वयेनहृत् ॥ आकारयुतत्वादन्यस्वरानिवृत्तिः ॥ तेनआंफ्रोंव्रीं २ हृदयायनमः शांतीति ॥ ईयुतेनचतुर्थबीजेनकामबीजाढ्येनशिरः ॥ ईंक्लींभ्रूंशिरसेस्वाहा ॥ ६ ॥

---

१ ॐफ्रोंव्रींक्लींभ्रंआंह्रींक्रोंश्रींहुंफट्कार्तवीर्यार्जुनायनमः(२०)अस्यकार्तवीर्यार्जुनमन्त्रस्यदत्तात्रेयऋषिःअनुष्टुप्छन्दःकार्तवीर्यार्जुनोदेवता ॐ बीजंनमः शक्तिःममाभीष्ट० ।

इंद्राढ्येति ॥ साबिंदुर्वामकर्णऊकारस्तेनआढ्यो यस्या ईदृशा अर्घीशयुक्तयाऽयुतयामाययाशिखाम् ॥ हुं
शिखायैवषट् ॥ सवाग्भ्यामैंयुताभ्यामंकुशपद्माभ्यांवर्म ॥ क्रौंश्रींकवचायहुं ॥ ७ ॥ वर्मास्त्राभ्यामस्त्रम्॥हुं फट्
अस्त्रायफट् ॥ शेषार्णैः कार्तवीर्यार्जुनायनमइतिव्यापकम् ॥ वर्णन्यासमाह ॥ हृदयइति ॥ सक्थ्नोरूर्वोर्जान्वोर्जं

इंद्राढ्यवामकर्णाढ्यमाययार्थीशयुक्तया ॥शिखामंकुशपद्माभ्यांसवाग्भ्यांवर्मविन्यसेत् ॥७॥ वर्मा
स्त्राभ्यामस्त्रमुक्तंशेषार्णैर्व्यापकंचरेत्॥हृदयेजठरेनाभौजठरेगुह्यदेशके ॥ ८ ॥ दक्षपादेवामपादेसक्थि
जानुनिजंघयोः ॥ विन्यसेद्बीजदशकंप्रणवद्वयमध्यगम् ॥९ ॥ ताराद्यान्नवशेषार्णान्मस्तकेचलला
टके ॥ भ्रुवोःश्रुत्योस्तथैवाक्ष्णोर्नसिवक्त्रेगलेंसके ॥ १० ॥ सर्वमंत्रेणसर्वांगेकृत्वाव्यापकमद्वयः ॥
सर्वेष्टसिद्धयेध्यायेत्कार्तवीर्य्यंजनेश्वरम् ॥११॥

घयोरेकैकमेव प्रणवद्वयांतःस्थंबीजंन्यसेत् ॥ ॐफ्रोंॐहृदिॐव्रींॐजठरइत्यादि० ॥ ८ ॥ ९ ॥ ताराद्यानिति ॥
ॐकांमस्तके ॥ ॐतं०ललाटेइत्यादि० ॥ १० ॥ ११ ॥

ध्यानमाह ॥ उद्यदिति ॥ अखिलक्षोणीधवैः सर्वपार्थिवैर्नतः ॥ तावताहस्तशतपंचकेनेषून्बाणान्दधत् ॥ हाटकमा
लयास्वर्णस्रजास्यंदनगोरथस्थितः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ दिक्षुचोरमदविभंजनादींश्चतुरः ॥ विदिक्षुदुःख

उद्यत्सूर्य्यसहस्रकांतिरखिलक्षोणीधवैर्वंदितोहस्तानांशतपंचकेनचदधच्चापानिषूंस्तावता ॥ कंठेहाट
कमालयापरिवृतश्चक्रावतारोहरेःपायात्स्यंदनगोरुणाभवसनःश्रीकार्तवीर्य्योनृपः ॥ १२ ॥ लक्षमेकंज
पेन्मंत्रंदशांशंजुहुयात्तिलैः ॥ सतंडुलैःपायसेनविष्णुपीठेयजेत्ततम् ॥ १३ ॥ वक्ष्यमाणेदशदलेवृत्तभूपु
रसंयुते ॥ संपूज्यवैष्णवीःशक्तीस्तत्रावाह्यार्चयेन्नृपम् ॥ १४ ॥ मध्येग्नीशासुरमरुत्कोणेषुहृदयादि
कान् ॥ चतुरंगंचसंपूज्यसर्वतोस्त्रंततोयजेत् ॥ १५ ॥ खड्गचर्मधराध्येयाश्चंद्राभाअंगमूर्तयः ॥ षट्को
णेषुषडंगानिततोदिक्षुविदिक्षुच ॥ १६ ॥ चोरमदविभंजनंमारीमदविभंजनम् ॥ अरिमदविभंजनंदै
त्यमदविभंजनम् ॥ १७ ॥ दुःखनाशंदुष्टनाशंदुरितामयनाशकौ ॥ दिक्ष्वष्टशक्तयःपूज्याःप्राच्यादिषु
सितप्रभाः ॥ १८ ॥ क्षेमंकरीवश्यकरीश्रीकरीचयशस्करी ॥ आयुष्करीतथाप्रज्ञाकरीविद्याकरीपुनः
॥ १९ ॥ धनकर्य्यंष्टमीपश्चाल्लोकेशाअस्त्रसंयुताः ॥ एवंसंसाधितोमंत्रःप्रयोगार्हःप्रजायते ॥ २० ॥

नाशादीन् ॥ १६ ॥ १७ ॥ दुरितामयनाशकौ दुरितनाशकोरोगनाशकश्च ॥ १८ ॥ १९ ॥ २० ॥

॥ २१ ॥ यंत्रमाह ॥ दिक्पत्रमिति ॥ दशदलंविलिख्यकर्णिकायांस्वबीजमदनश्रुत्यादिवाचोलिखेत् ॥ स्वबीजं क्रों ॥ मदनः क्लीं ॥ श्रुत्यादिः ॐ ॥ वाक् ऐं ॥ स्वबीजानिवागंतंलिखेत् ॥ वर्मांतानिप्रणवादीनिदशबीजानिदलेषु यस्यतत् ॥ तथाशेषार्णाःफट्कार्तवीर्यार्जुनायनमइतिदशपत्रांतरेषुयस्यतत् ॥ ऊष्माणःशषसहास्तैराढ्याःस्वराः केसरेषुयस्यतत् ॥ प्रतिकेसरंद्वौद्वौ ॥ शेषैःकादिभिरूष्महीनैर्वेष्टितम् ॥ स्वकोणेषूल्लसंतोभूतार्णाः पंचभूतवर्णाः

कार्तवीर्य्यार्जुनस्याथपूजार्थंमंत्रउच्यते ॥२१॥ दिक्पत्रंविलिखेत्स्वबीजमदनश्रुत्यादिवाक्कर्णिकं वर्मांतप्रणवादिबीजदशकंशेषार्णपत्रांतरम् ॥ ऊष्माढ्यस्वरकेसरंपरिवृतंशेषैःस्वकोणोल्लसद्भूतार्णक्षितिमंदिरावृतमिदंयंत्रंधराधीशितुः ॥ २२ ॥

यत्रतादृशंयत्क्षितिमंदिरंचतुष्कोणंतेनावृतम् ॥ तृतीयवर्गगाः कर्णवोललाः १॥ कर्णौउऊ ॥ ॐललापार्थिवामता इत्यादि० ॥ भूतानांवर्णास्त्रयोविंशेतरंगेवक्ष्यंते ॥ तत्रस्तंभनेभूतवर्णालेख्याः ॥ शांतावाद्याः ॥ वश्येतजसाः ॥ उच्चाटनेवायवीयाः ॥ विद्वेषणेतामसाः ॥ मारणेपितैजसाः ॥ जलस्यमंडलंप्रोक्तंप्रशस्तंशांतिकर्मणिइत्यादिवक्ष्यमाणत्वात् ॥ इदंधराधीशितुःकार्तवीर्यस्ययंत्रम् ॥ २२ ॥

१ कर्णिकांतंलिखेदित्यर्थः ।

अभिषेकमाह ॥ शुद्धेति ॥ अष्टगंधैः चंदनागुरुवालककुष्ठकुंकुमकर्पूररोचनाजटामांसीभिः ॥ तत्रयंत्रेतत्रकुंभे ॥ २३ ॥ २४ ॥ स्वजनरंजनंजनवश्यताम् ॥सुदृशोनारीः ॥ २५ ॥ पुटभेदनेनगरे ॥ २६ ॥ अरिष्टानि फेनिलफ

शुद्धभूमावष्टगंधैर्लिखित्वायंत्रमादरात् ॥ तत्रकुंभंप्रतिष्ठाप्यतत्रावाह्यार्चयेन्नृपम् ॥२३॥स्पृष्ट्वाकुंभंजपेन्मंत्रसहस्रंविजितेंद्रियः॥अभिषिंचेत्तदंभोभिःप्रियंसर्वेष्टसिद्धये॥ २४ ॥पुत्रान्यशोरोगनाशमायुःस्वजनरंजनम्॥वाक्सिद्धिंसुदृशःकुंभाभिषिक्तोलभतेनरः ॥२५ ॥ शत्रूपद्रवमापन्नेग्रामेवापुटभेदने॥ संस्थापयेदिदंयंत्रमारिभीतिनिवृत्तये॥२६ ॥सर्षपारिष्टलशुनकार्पासैर्मार्यतेरिपुः ॥ धत्तूरैःस्तभ्यतेनिंबैर्द्वेष्यतेवश्यतेंबुजैः॥ २७॥ उच्चाट्यतेविभीतस्यसमिद्भिःखदिरस्यच।कटुतैलमाहिष्याज्यैर्होमद्व्यांजनैस्मृतम्॥२८॥ यवैर्हुतैःश्रियःप्राप्तिस्तिलैराज्यैरघक्षयः॥ तिलतंडुलसिद्धार्थलाजैर्वश्योनृपोभवेत्॥२९॥ अपामार्गार्कदूर्वाणांहोमोलक्ष्मीप्रदोऽघनुत्॥ स्त्रीवश्यकृत्प्रियंगूणांपुराणांभूतशांतिदः ॥ ३० ॥ अश्वत्थोदुंबरप्लक्षवटबिल्वसमुद्भवाः ॥ समिधोलभतेहुत्वापुत्रानायुर्धनंसुखम् ॥ ३१ ॥

लानि ॥ पद्मैर्वश्यतेवशीक्रियते ॥ हुतैरितिसर्वत्रान्वयः ॥ २७ ॥ २८ ॥ २९ ॥ पुराणांगुग्गुलूनाम् ॥ ३० ॥ ३१॥

निर्मोकः सर्पकंचुकः ॥ हेमधत्तूरः ॥ ३२ ॥ कार्यगौरवलाघवात् ॥ अधिककार्ये होमबाहुल्यमल्पेऽल्पम् ॥ ३३ ॥
मंत्रभेदानाह ॥ कार्तेति ॥ दशस्वपिमंत्रेषुङेंतंहृदंतंचतुर्थीनमोंतंकार्तवीर्यार्जुनंयोजयेत् ॥ ३४ ॥ आद्योदशवर्णः॥
अन्येनवैकादशवर्णाः ॥ तानाह ॥ स्वेति ॥ फ्रोंकार्तवीर्यार्जुनायनमः इतिप्रथमः ॥ द्वितीयमाह ॥ आद्येति ॥

निर्मोकहेमसिद्धार्थलवणैश्चोरनाशनम् ॥ रोचनागोमयैःस्तंभोभूप्राप्तिःशालिभिर्हुतैः ॥ ३२ ॥ होमसंख्यातुसर्वत्रसहस्रादयुतावधि ॥ प्रकल्पनीयामंत्रज्ञैःकार्य्यगौरवलाघवात् ॥ ३३ ॥ कार्तवीर्य्यस्य मंत्राणामुच्यंतेसिद्धिदाभिदाः॥ कार्तवीर्य्यार्जुनंङेंतमंतेचनमसान्वितम् ॥ ३४ ॥ स्वबीजाढ्योदशार्णोसावन्येनवशिवाक्षराः॥ आद्यबीजद्वयेनाऽसौद्वितीयोमंत्रईरितः ॥ ३५ ॥ स्वकामाभ्यांतृतीयोसौस्वभूभ्यांतुचतुर्थकः ॥ स्वपाशाभ्यांपंचमोसौषष्ठःस्वेनचमायया ॥ ३६ ॥ स्वांकुशाभ्यांसप्तमःस्यात्स्वरमाभ्यामथाष्टमः॥ स्ववाग्भवाभ्यांनवमोवर्मास्त्राभ्यांतथांतिमः ॥ ३७ ॥

फ्रांव्रीं कार्तवी० द्वितीयः ॥ ३५ ॥ फ्रोंक्लींकार्त० इतितृतीयः ॥ फ्रोंभ्रूंकार्त० इतिचतुर्थः ॥ फ्रोंआंकार्त० इतिपंचमः॥
फ्रोंह्रींकार्त० इतिषष्ठः ॥ ३६ ॥ फ्रोंफ्रोंका० इतिसप्तमः ॥ फ्रोंश्रींकार्त० इत्यष्टमः ॥ फ्रोंऐंकार्त० इतिनवमः ॥ हुंफट्
कार्त० इतिदशमः ॥ ३७ ॥

इमेदशमंत्रायदाप्रणवाद्यास्तदाऽऽद्यएकादशार्णःअन्येपि द्वादशार्णाः ॥३८ ॥ ३९ ॥ ४० ॥ पूर्ववत् मंत्रराजवत् ॥ यजनंमतम् ॥ ४१ ॥ तेषांषडंगमाह ॥ दीर्घेति ॥ प्रांहृत् प्रींशिरइत्यादि० ॥ चतुर्दशार्णमाह ॥ तारइति ॥ ॐ

द्वितीयादिनवांतेतुबीजयोःस्याद्व्यतिक्रमः ॥मंत्रेतुदशमेवर्णानववर्मास्त्रमध्यगाः ॥ ३८ ॥एतेषुमंत्र वर्य्येषुस्वानुकूलंमनुंभजेत् ॥एषामाद्येविराट्छन्दोन्येषुत्रिष्टुबुदाहृतम् ॥ ३९ ॥ दशमंत्राइमेप्रोक्ताः प्रणवादिपदानिच ॥तदादिमःशिवार्णःस्यादन्येतुद्वादशाक्षराः ॥ ४० ॥ एवंविंशतिमंत्राणांयजनं पूर्ववन्मतम् ॥ त्रिष्टुप्छन्दस्तदाद्यस्यादन्येषुजगतीमता॥४१ ॥ दीर्घाढ्यमूलबीजेनकुर्य्यादेषांषडं गकम् ॥ तारोहृत्कार्तवीर्य्यार्जुनायवर्मास्त्रठद्वयम्॥ चतुर्दशार्णोमंत्रोयमस्येज्यापूर्ववन्मता ॥४२॥ भूनेत्रसप्तनेत्राक्षिवर्णैरस्यांगपंचकम् ।।तारोहृद्भगवान्ङेंतःकार्तवीर्य्यार्जुनस्तथा ॥४३॥ वर्मास्त्राग्नि प्रियामंत्रःप्रोक्तोष्टादशवर्णवान्॥त्रिवेदसप्तयुग्माक्षिवर्णैःपंचांगकंमनोः ॥ ४४ ॥

नमःकार्तवीर्यार्जुनायहुंफट्स्वाहेति ॥ इज्यापूजा ॥ ॥ ४२ ॥ पंचांगमाह ॥ भूनेत्रेति॥अष्टादशार्णमाह॥तारइति हृतनमः ॥ कार्तवीर्यार्जुनस्तथेति ॥ ङेंतः ॥ ॐनमोभगवतेकार्तवीर्यार्जुनायहुंफट्स्वाहाइति ॥ ४३ ॥ ४४ ॥

मंत्रांतरमाह ॥ नमइति ॥ यथा-नमोभगवतेश्रीकार्तवीर्यार्जुनायसर्वदुष्टांतकायतपोबलपराक्रमपरिपालितसप्तद्वीपायसर्वराजन्यचूडामणयेमहाशक्तिमतेसहस्रबाहवेहुंफट्इति ॥ ४५ ॥ ४६ ॥ ४७ ॥ अस्यषडंगमाह ॥ राजन्येति ॥ ङेंतैश्चतुर्थ्यंतैःपदैःषडंगंस्यात् ॥ यथा-राजन्यचक्रवर्तिनेहृत् ॥ वीरायशिरः ॥ शूरायशिखा ॥ माहिष्म

नमोभगवतेश्रीतिकार्त्तवीर्य्यार्जुनायच ॥सर्वदुष्टांतकायेतितपोबलपराक्रम ॥ ४५ ॥ परिपालितसप्तांतेद्वीपायसर्वरापदम् ॥जन्यचूडामणांतेयेसर्वशक्तिमतेततः ॥४६ ॥ सहस्रबाहवेप्रांतेवर्मास्त्रांतोमहामनुः ॥ त्रिषष्टिवर्णवान्प्रोक्तःस्मरणात्सर्वविघ्नहृत् ॥ ४७ ॥ राजन्यचक्रवर्तीचवीरःशूरस्तृतीयकः ॥माहिष्मतीपतिःपश्चाच्चतुर्थःसमुदीरितः ॥ ४८ ॥ रेवांबुपरितृप्तश्चकारागेहप्रबाधितः ॥दशास्यश्चेतिषड्भिःस्यात्पदैर्ङेंतैःषडंगकम् ॥ ४९ ॥ सिंच्यमानंयुवतिभिःक्रीडंतंनर्मदाजले ॥ हस्तैर्जलौघैरुन्धंतंध्यायेन्मत्तंनृपोत्तमम् ॥५०॥ एवंध्यात्वायुतंमंत्रंजपेदन्यत्तुपूर्ववत् ॥पूर्ववत्सर्वमेतस्यसमाराधनमीरितम् ॥५१ ॥

तीपतयेवर्म ॥ ४८ ॥ रेवांबुपरितृप्तायनेत्रम् ॥ कारागेहप्रबाधितदशास्यायास्त्रम् ॥ ४९ ॥ ५०॥स्मरन्नयुतंजपेत् ॥ अन्यत्प्रयोगादिकं ॥ पूर्ववच्चतुर्दशाष्टादशार्णवत् ॥ ५१ ॥

आनुष्टुभंमंत्रांतरमाह ॥ कार्तेति ॥ कार्तवीर्यार्जुनोनामराजाबाहुसहस्रवान् ॥ तस्यसंस्मरणादेवहृतंनष्टंचलभ्यते इति ॥५२॥५३॥ गायत्रीमाह कार्तवीर्यायविद्महेमहावीर्यायधीमहि ॥ तन्नोर्जुनःप्रचोदयादिति ॥५४॥ ५५ ॥

कार्तवीर्य्यार्जुनोवर्णान्नामराजापदंततः॥उक्त्वाबाहुसहस्रांतेवान्पदंतस्यसंततः ॥ ५२ ॥ स्मरणा
देववर्णांतेहृतंनष्टंचसंपठेत्॥लभ्यतेमंत्रवर्य्योयंद्वात्रिंशद्वर्णसंज्ञकः ॥ ५३॥ पादैःसर्वेणपंचांगंध्यान
योगादिपूर्ववत्॥कार्तवीर्य्यायशब्दांतेविद्महेपदमीरयेत् ॥ ५४ ॥महावीर्य्यायवर्णांतेधीमहीतिपदं
वदेत्॥ तन्नोर्जुनःप्रवर्णांतेचोदयात्पदमीरयेत्॥ ५५॥ गायत्र्येषार्जुनस्योक्ताप्रयोगादौजपेत्तुताम्॥
अनुष्टुभंमनुंरात्रौजपतांचौरसंचयाः॥ ५६ ॥ पलायंतेगृहाद्दूरंतर्पणाद्धवनादपि ॥ अथोदीपविधिं
वक्ष्येकार्तवीर्य्यप्रियंकरम् ॥ ५७ ॥ वैशाखेश्रावणेमार्गेकार्तिकाश्विनपौषतः ॥ माघफाल्गुनयो
र्मासेदीपारंभःप्रशस्यते ॥ ५८ ॥ तिथौरिक्ताविहीनायांवारेशनिकुजौविना ॥ हस्तोत्तराश्विरौद्रेषु
पुष्यवैष्णववायुभे ॥ ५९ ॥

॥ ५६ ॥ दीपविधानमाह ॥ अथोइति ॥ ५७ ॥ आरंभमासानाह ॥ वैशाखइति ॥ ५८ ॥ रिक्ताश्चतुर्थीनवमीचतुर्दश्यस्ताद्भिन्नातिथौ ॥ नक्षत्राण्याह ॥ हस्तोत्तरेति ॥ रौद्रमार्द्रा ॥ वैष्णवंश्रवणं ॥ वायुभंस्वाती ॥ ५९ ॥

द्विदैवतंविशाखा ॥ योगानाह ॥ चरमइति ॥ चरमे वैधृतौ ॥ ६० ॥ ६१ ॥ रात्रावाखिलायांपूर्वाह्णेच ॥ ६२ ॥
॥ ६३ ॥ विधिमाह ॥ आद्यइति ॥ कौभूमौ ॥ ६४ ॥ ६५ ॥ स्मरंक्लीं ॥ ६६ ॥ षड्वर्णान्ॐक्रोंव्रींभ्रूंआंह्रीमिति

द्विदैवतेचरोहिण्यांदीपारंभःप्रशस्यते॥चरमेचव्यतीपातेधृतौवृद्धौसुकर्मणि ॥ ६० ॥प्रीतौहर्षेचसौभाग्येशोभनायुष्मतोरपि ॥ करणेविष्टिरहितेग्रहणेद्धोदयादिषु॥ ६१ ॥ एषुयोगेषुपूर्वाह्णेदीपारंभःकृतःशुभः॥कार्तिकेशुक्लसप्तम्यांनिशीथेतीवशोभनः ॥ ६२ ॥ यदितत्ररवेर्वारःश्रवणंभंतुदुर्लभम् ॥ अत्यावश्यककार्येषुमासादीनांनशोधनम् ॥ ६३ ॥आद्येह्न्युपोष्यनियतोब्रह्मचारीशयीतकौ॥प्रातःस्नात्वाशुद्धभूमौलिप्तायांगोमयोदकैः॥६४॥प्राणानायम्यसंकल्प्यन्यासान्पूर्वोदितांश्चरेत्॥षट्कोणंरचयेद्भूमौरक्तचंदनतंडुलैः ॥ ६५ ॥ अतःस्मरंसमालिख्यषट्कोणेषुसमालिखेत्॥मंत्रराजस्यषड्वर्णान्कामबीजविवर्जितान् ॥६६॥ सृणिपद्मांवमंचास्त्रपूर्वाद्याशासुसंलिखेत्॥नवार्णैर्वेष्टयेत्तच्चत्रिकोणंतद्बहिःपुनः ॥६७॥ एवंविलिखितेयंत्रेनिदध्याद्दीपभाजनम्॥स्वर्णजंरजतोत्थंवाताम्रजंतदभावतः ॥६८॥ कांस्यपात्रंमृन्मयंचकनिष्ठंलोहजंमृतौ॥शांतयेमुद्गचूर्णोत्थंसंधौगोधूमचूर्णजम्॥६९॥

षट्कोणेषुस्वाग्रमारभ्यालिखेत् ॥ क्रोंश्रींहुंफडितिदिक्षु ॥शेषैर्नवाक्षरैर्वेष्टयेत् ॥ ६७ ॥ ६८ ॥ ६९ ॥

पात्रमानमाह ॥ बुध्नइति ॥ बुध्नेमूले ॥ ऊर्ध्वंचपात्रंकुर्यात् ॥ कियत्तत्राह ॥ अर्कैति ॥ मूलेऊर्ध्वंचद्वादशादिमानै रंगुलैःकार्यम् ॥ ७०॥ ७१ ॥ शरार्कपलभाजनं पंचविंशत्युत्तरशतपलमितपात्रम् ॥ ७२ ॥ द्वीति ॥ सहस्रद्वयमिते

बुध्नेपूर्ध्वंसमानंतुपात्रंकुर्य्यात्प्रयत्नतः ॥अर्कदिग्वसुषट्पंचचतुराभांगुलैर्मितम्॥७०॥आज्यंपलसहस्रंतुपात्रंशतपलैःकृतम्॥आज्येयुतपलेपात्रंपलपंचशतीकृतम् ॥ ७१ ॥ पंचसप्ततिसंख्येतुपात्रंषष्टिपलंमतम् ॥ त्रिसहस्रेघृतपलेशरार्कपलभाजनम् ॥ ७२ ॥ द्विसहस्रेशरशिवंशतार्द्धंत्रिशतामतम्॥ शतेक्षिशरसंख्यांतमेवमन्यत्रकल्पयेत् ॥ ७३ ॥ नित्यदीपेवह्निपलंपात्रमाज्यंपलंस्मृतम् ॥ एवंपात्रंप्रतिष्ठाप्यवर्तीःसूत्रोत्थिताःक्षिपेत् ॥ ७४ ॥ एकातिस्त्रोथवापंचसप्ताद्याविषमाअपि ॥ तिथिमानाद्यासहस्रांतंतुसंख्याविनिर्मिताः॥ ७५ ॥ गोघृतंप्रक्षिपेत्तत्रशुद्धवस्त्रविशोधितम्॥सहस्रपलसंख्यादिदशांतंकार्य्यंगौरवात् ॥७६ ॥

घृतेशरशिवंपंचदशोत्तरशतपलंताम्रपात्रम् ॥ अक्षिशरसंख्यातं द्विपंचाशत्पलमितम् ॥ अन्यत्रैवमेवघृतानुसारेण पात्रंकल्प्यम् ॥ ॥ ७३ ॥ वह्निपलंत्रिपलम् ॥ ७४ ॥ विषमवर्तिकाएकाद्याएकोत्तरशतान्ताज्ञेयाः॥ तिथीति ॥पंचदशादिसहस्रपर्यंतंयातंतुसंख्यातयाविनिर्मिताः कृताः ॥ ७५ ॥ ७६ ॥

तदर्धामष्टांगुलांतदर्धांचतुरंगुलाम् ॥ ७७ ॥ पात्राद्दक्षिणेचतुरंगुलभूमिंत्यक्त्वाछुरिकांभूमौनिःक्षिपेत् ॥ ७८ ॥अधो ग्रंयस्यास्तांदक्षिणस्यांधारायस्यास्ताम् ॥ ७९ ॥ ८० ॥ ८१ ॥ द्वीषुभूमितोद्विपंचाशदुत्तरशताक्षरो दीपसंकल्पे

सुवर्णादिकृतांरम्यांशलाकांषोडशांगुलाम् ॥ तदर्द्धांवातदर्द्धांवासूक्ष्माग्रांस्थूलमूलकाम् ॥ ७७॥वि मुंचेद्दक्षिणेभागेपात्रमध्येकृताग्रकाम् ॥ पात्राद्दक्षिणदिग्देशेमुक्त्वांगुलचतुष्टयम् ॥ ७८ ॥ अधोग्रांद क्षिणाधारांनिखनेच्छुरिकांशुभाम् ॥ दीपंप्रज्वालयेत्तत्रगणेशस्मृतिपूर्वकम् ॥ ७९ ॥ दीपात्पूर्वेतुदि ग्भागेसर्वतोभद्रमंडले॥तंडुलाष्टदलेवापिविधिवत्स्थापयेद्घटम् ॥ ८०॥ तत्रावाह्यनृपाधीशंपूर्ववत्पू जयेत्सुधीः॥ जलाक्षताःसमादायदीपंसंकल्पयेत्ततः ॥ ८१ ॥ दीपसंकल्पमंत्रोऽथकथ्यतेद्वीषुभूमि तः ॥प्रणवःपाशमायेचशिखाभर्ताशराणिच ॥ ८२ ॥ वीर्य्यार्जुनायमाहिष्मतीनाथायसहस्रच ॥ बाहवेइतिवर्णान्तेसहस्रपदमुच्चरेत् ॥८३॥ क्रतुदीक्षितहस्तायदत्तात्रेयप्रियायच ॥ आत्रेयायानुसू यांतेगर्भरत्नायतत्परम् ॥ ८४ ॥

मन्त्रः ॥ तमाह ॥ प्रणवइति ॥ पाशआं ॥ मायाह्रीं ॥ शिखावषट् ॥ ८२ ॥ ८३ ॥ ८४ ॥

वामकर्णेंदुस्थितौनभोग्नीऊबिंदुयुतौहरौ ॥ तेनह्रं ॥ पाशआँ ॥ अमुकमितिपदस्थानेसाध्यनामोच्चार्यम् ॥ ८५ ॥
मायाह्रीं ॥ तारॐ ॥ स्वंबीजक्रों ॥ आत्मभूःक्लीं ॥ ८६ ॥ ८७ ॥ आकाशद्वयंहद्वयम् ॥ वामनेत्रचंद्रयुतंइबिं
दुयुतंह्रींह्रीं ॥ शिवाह्रीं ॥ वेदादिकामचामुंडाः ॐक्लींब्रीं ॥ तुःपुः तवर्गपवर्गौ॥ ८८ ॥ नेत्रबाणधराक्षरोद्विपंचाश
दुत्तरशतार्णः ॥यथा–ॐआंह्रींवषट्कार्तवीर्यार्जुनायमाहिष्मतीनाथायसहस्रबाहवेसहस्रक्रतुदीक्षितहस्तायदत्तात्रे

नभोग्नीवामकर्णेंदुस्थितौपाशइमंततः॥दीपंगृहाणत्वमुकंरक्षरक्षपदंपुनः॥८५॥दुष्टान्नाशययुग्मंस्यात्त
थापातयघातय॥शत्रूञ्जहिद्वयंमायातारःस्वंबीजमात्मभूः ॥८६॥ वह्निजायाअनेनाथदीपवर्येणपश्चि
मा॥भिमुखेनामुकंरक्षअमुकांतेवरप्रदा॥८७॥नायाकाशद्वयंवामनेत्रचंद्रयुतंशिवा॥वेदादिकामचामुंडा
स्वाहातुःपुःसबिंदुकौ॥८८॥प्रणवोग्निप्रियामंत्रोनेत्रबाणधराक्षरः॥दत्तात्रेयोमुनिर्मालामंत्रस्यपरिकी
र्तितः॥८९॥छंदोमितंकार्तवीर्य्यार्जुनोदेवःशुभावहः॥चामुंडयाषडंगानिचरेत्षड्दीर्घयुक्तया॥९०॥

यप्रियायआत्रेयायानुसूयागर्भरत्नायह्रूंआंइमंदीपंगृहाणअमुकंरक्ष २ दुष्टान्नाशय २ पातय २ घातय २ शत्रूञ्जहि
२ ह्रींॐक्रोंक्लींस्वाहाअनेनदीपवर्येणपश्चिमाभिमुखेनअमुकंरक्ष अमुकवरप्रदानाय ह्रींह्रींह्रींॐक्लींब्रींस्वाहा तंथं
दंधंनंपंफंबंभंमंॐस्वाहा ( १५२ ) इतिमंत्रः ॥ चामुंडयाब्रीमितिबीजेनब्रांब्रींब्रूंब्रैंब्रौंब्रः इतिषडंगम्॥ ८९ ॥९० ॥

१ अस्यकार्तवीर्यमालामंत्रस्यदत्तात्रेयऋषिःअमितंछंदःकार्तवीर्यार्जुनोदेवताममाभीष्टसिद्ध्यर्थेजपेविनियोगः ।

ध्यात्वापूर्वोक्तविधिना ॥ ११ ॥ नवाक्षरमाह ॥ तारइति ॥ तारॐ ॥ अनंतोबिंदुयुतःआं ॥ मायाह्रीं ॥ स्वं वामनेत्रयुक्क्रीं ॥ कूर्माग्नीवरौशांतिचंद्राढ्यौईंबिंदुयुतौ ॥ तेनव्रीं ॥ वह्निनारीस्वाहा ॥ अंकुशंक्रों ॥ ध्रुवॐ

ध्यात्वादेवंततोमंत्रंपठित्वांतेक्षिपेज्जलम् ॥ ततोनवाक्षरंमंत्रंसहस्रंतत्पुरोजपेत् ॥ ११ ॥तारोऽनंतो
बिंदुयुक्तोमायास्वंवामनेत्रयुक्॥ कूर्माग्नीशांतिचन्द्राढ्यौवह्निनार्य्यंकुशंध्रुवः ॥ १२ ॥ ऋषिःपूर्वः
स्मृतोनुष्टुप्छन्दोह्यन्यत्तुपूर्ववत्॥सहस्रंमंत्रराजंचजपित्वाकवचंपठेत् ॥ १३ ॥ एवंदीपप्रदानस्यक
र्तिप्रोत्यखिलेप्सितम् ॥ दीपप्रबोधकालेतुवर्जयेदशुभांगिरम् ॥ १४ ॥ विप्रस्यदर्शनंतत्रशुभदंपरि
कीर्तितम् ॥ शूद्राणांमध्यमंप्रोक्तंम्लेच्छस्यवधबंधदम् ॥ १५ ॥ आखोत्वोर्दर्शनंदुष्टंगवाश्वस्यसु
खावहम्॥दीपज्वालासमासिद्धैचैवक्रानाशविधायिनी ॥ १६ ॥

॥ १२ ॥ पूर्वोदत्तात्रेयः ॥ अन्यत्षडङ्गादिकम् ॥ कवचं ॥ हुंडामरोक्तम् ॥ १३ ॥ दीपप्रारंभेशकुनमाह ॥ दीपप्रबोधेत्यादि ॥ १४ ॥ १५ ॥ आखोत्वोर्मूषकमार्जारयोः ॥ १६ ॥ 

१ अस्यनवाक्षरकार्तवीर्यमंत्रस्यदत्तात्रेयऋषिः अनुष्टुप्छंदःकार्तवीर्यार्जुनोदेवता ममाभीष्टसिद्ध्यर्थेजपेविनियोगः ।

॥ ९७ ॥ ९८ ॥ ९९ ॥१०० ॥ वसुपलैरष्टपलैः ॥ अंतरायतोविघ्नेभ्यः ॥ १०१ ॥ भूशयंभूमिशयनम् ॥ १०२ ॥

सशब्दाभयदाकर्तुरुज्ज्वलासुखदामता ॥ कृष्णातुशत्रुभयदावमंतीपशुनाशिनी ॥ ९७ ॥ कृतेदी
पेयदापात्रभंग्नंदृश्येतदैवतः ॥ पक्षादर्वाक्तदागच्छेद्यजमानोयमालयम् ॥ ९८ ॥ वत्र्यंतरंयदाकु
र्य्यात्कार्यसिद्ध्येद्विलंबतः ॥ नेत्रहीनोभवेत्कर्तातस्मिन्दीपांतरेकृते॥९९॥ अशुचिस्पर्शनेत्वाधि
र्दीपनाशेतुचौरभीः॥ श्वमार्जाराखुसंस्पर्शेभवेद्भूपतितोभयम्॥१००॥यात्रारंभेवसुपलैः कृतोदीपो
ऽखिलेष्टदः ॥ तस्माद्दीपः प्रयत्नेनरक्षणीयोंतरायतः ॥ १०१ ॥आसमाप्ते प्रकुर्वीतब्रह्मचर्य्यंचभूश
यम् ॥ स्त्रीशूद्रपतितादीनांसंभाषामपिवर्जयेत् ॥ १०२ ॥ जपेत्सहस्रंप्रत्येकंमंत्रराजंनवाक्षरम् ॥
स्तोत्रपाठंप्रतेदिनंनिशीथिन्यांविशेषतः ॥ १०३ ॥ एकपादेनदीपाग्रेस्थित्वायोमंत्रनायकम् ॥
सहस्रंप्रजपेद्रात्रौसोभीष्टंक्षिप्रमाप्नुयात्॥१०४॥समाप्यशोभनेघस्रेसंभोज्यद्विजनायकान् ॥ कुंभो
दकेनकर्तारमभिषिंचेन्मनुंस्मरन् ॥ १०५ ॥ कर्तातुदक्षिणांदद्यात्पुष्कलांतोषहेतवे ॥ गुरौतुष्टेददा
तीष्टंकृतवीर्य्यसुतोनृपः ॥ १०६ ॥

निशीथिन्यांरात्रौ ॥ १०३ ॥ १०४ ॥ १०५ ॥ १०६ ॥

रत्नादिदानेनगुरुंवृत्वाधरापतेःकार्तवीर्यस्यदीपदानंकारयेदित्यन्वयः ॥१०७॥ १०८॥१०९॥ अजादिघृतंकनीयोऽधमम् ॥११०॥१११॥११२॥११३॥११४॥यथाकथंचिदिति॥ अनेननित्यदीपेपूर्वोक्तस्यपात्रघृतनियमस्यानावश्यक

गुर्वाज्ञयास्वयंकुर्य्याद्यदिवाकारयेद्गुरुम् ॥कृत्वारत्नादिदानेनदीपदानंधरापतेः ॥१०७॥गुर्वाज्ञामंतराकुर्य्याद्योदीपंस्वेष्टसिद्धये॥प्रत्युतानुभवत्येषहानिमेवपदेपदे ॥ १०८ ॥ दीपदानविधिंब्रूयात्कृतघ्नादिषुनोगुरुः ॥ दुष्टेभ्यःकथितोमंत्रोवक्तुदुःखावहोभवेत् ॥ १०९॥उत्तमंगोघृतं प्रोक्तंमध्यमंमहिषीभवम् ॥ तिलतैलंतुतादृक्स्यात्कनीयोजादिजंघृतम्॥ ११०॥ आस्यारोगेसुगंधेनदद्यात्तैलेनदीपकम् ॥ सिद्धार्थसंभवेनाथद्विषतांनाशहेतवे ॥ १११ ॥ पलैर्दशशतैर्दीपेविहितेचेन्नदृश्यते ॥ कार्य्यसिद्धिस्तदात्रिस्तुदीपःकार्य्योयथाविधि ॥११२॥ तदासुदुर्लभंकार्य्यंसिद्ध्यत्येवनसंशयः ॥ यथा कथंचिद्यः कुर्य्याद्दीपदानंस्ववेश्मनि॥११३॥ विघ्नाःसर्वारिभिःसाकंतस्यनश्यंतिदूरतः॥सर्वदाजयमाप्नोतिपुत्रान्पौत्रान्धनंयशः ॥ ११४ ॥ यथाकथंचिद्योदीपंनित्यंगेहेसमाचरेत् ॥कार्तवीर्यार्जुनप्रीत्यैसोऽभीष्टंलभतेनरः ॥ ११५ ॥

तांदर्शयति ॥ त्रिपलमितेपात्रे एकपलघृतेननित्यंदीपोदेयः॥यथाकथंचिद्वा ॥ सर्वथादातव्य एवेतिभावः ॥११५॥

दीपदानप्रियोऽर्जुनः ॥ तत्प्रसंगादन्यदेवानांयद्ददातिप्रियंतदाह ॥ दीपेति ॥ मार्तंडःसूर्योनमस्काराप्रियः॥ ११६ ॥ दुर्गासुंदरी ॥११७॥ इतिमंत्रमहोदधिटीकायांनौकायांकार्तवीर्यार्जुनमंत्रनिरूपणंनामसप्तदशस्तरंगः॥ ११७ ॥अथ कालरात्रिमंत्रमाह ॥ तारेति ॥ तारॐ ॥ वाक्ऐं ॥ शक्तिःह्रीं ॥ कंदर्पःक्लीं ॥ रमाश्रीं॥ अग्रेस्वरूपम् ॥ यथा–ॐ

दीपप्रियःकार्तवीर्य्योमार्तंडोनतिवल्लभः ॥ स्तुतिप्रियोमहाविष्णुर्गणेशस्तर्पणप्रियः ॥११६॥दुर्गा ऽर्चनप्रियानूनमभिषेकप्रियःशिवः ॥ तस्मात्तेषांप्रतोषायविदध्यात्तत्तदादृतः ॥११७ ॥इतिमंत्रम होदधौकार्तवीर्य्यमंत्रकथनंनामसप्तदशस्तरंगः ॥ १७ ॥ कालरात्रिमथोवक्ष्येसपत्नगणसूदनीम् ॥ तारवाक्छक्तिकंदर्परमाःकाह्लेश्वरीतिच ॥ १ ॥सर्वजनमनोवर्णाहारिसर्वमुखांततः ॥ स्तंभन्यंतेसर्व राजवशंकारिपदंततः ॥ २ ॥ सर्वदुष्टनिर्दलनिसर्वस्त्रीपुरुषार्णकाः॥कार्षिणीतिततोबंदीशृंखलास्त्रोट यद्वयम् ॥ ३ ॥ सर्वशत्रून्भंजयद्विर्द्वेष्टृन्निर्दलयद्वयम् ॥सर्वस्तंभययुग्मंस्यान्मोहनास्त्रेणतत्परम्॥४॥

ऐंह्रींक्लींश्रींकाह्लेश्वरिसर्वजनमनोहारिसर्वमुखस्तंभनिसर्वराजवशंकारि सर्वदुष्टनिर्दलनि सर्वस्त्रीपुरुषाकर्षिणि बंदी शृंखलास्त्रोटय २ सर्वशत्रून्भंजय २ द्वेष्टृन्निर्दलय २ सर्वस्तंभय २ मोहनास्त्रेणद्वेषिणउच्चाटय २ सर्ववशं कुरु२ स्वा हादेहि २ सर्वकालरात्रिकामिनिगणेश्वरिनमइति ॥ गुणरामधराशरात्रयस्त्रिदशत्तरशतार्णा ॥१ ॥२ ॥ ३ ॥ ४ ॥

५॥४॥ कालिकाबीजंक्रीं ॥७॥८॥ वेदनेत्रार्णैश्चतुर्विंशतिवर्णैः ॥ बाणाक्षित्रर्णकः पंचविंशतिवर्णैः ॥ ९॥ नंदचंद्राक्ष रैरेकोनविंशत्यर्णैः ॥ १० ॥ ध्यानमाह उद्यदिति ॥ दंडवरौ दक्षयोः ॥ लिङ्गभुवने वामयोः ॥ भुवनंब्रह्मांडम् ॥

द्वेषिणःपदमुच्चार्य्यंततउच्चाटयद्द्वयम् ॥ सर्ववशंकुरुद्वंद्वंस्वाहादेहियुगंपुनः ॥५ ॥ सर्वंनकालरात्रीति कामिनीतिगणेश्वरी ॥ नमोंतेयंमहाविद्यागुणरामधराक्षरा ॥ ६ ॥ ऋषिर्दक्षोतिजगतीछंदोलर्कनिवा सिनी ॥ देवताकालरात्रिःस्यात्कालिकाबीजमीरितम् ॥ ७ ॥ मायाराज्ञीतिशक्तिःस्यान्नियोगःस्वे ष्टसिद्धये ॥ पंचांगुलिषुताराद्यंविन्यसेद्बीजपंचकम् ॥८ ॥ हृदयंवेदनेत्रार्णैःशिरोबाणाक्षिवर्णकैः॥ प्रोक्ताशिखैकविंशत्यावर्माष्टादशभिःस्मृतम् ॥ ९ ॥ षड्विंशत्यानेत्रमस्त्रंनंदचंद्राक्षरैर्मतम्॥ विधायैव षडंगानिध्यायेद्विश्वविमोहिनीम् ॥१०॥ उद्यन्मार्तंडकांतिंविगलितकबरींकृष्णवस्त्रावृतांगींदंडलिं गंकराब्जैर्वरमथभुवनंसंदधानांत्रिनेत्राम्॥ नानाकल्पौघभासांस्मितमुखकमलांसेवितांदेवसंघैर्मायां राज्ञींमनोभूशरविकलतनूमाश्रयेकालरात्रिम् ॥ ११ ॥ अयुतंप्रजपेन्मंत्रंदशांशंजुहुयात्तिलैः॥पयोरु हैर्वाविप्रेंद्रान्संतर्प्यश्रेयआप्नुयात् ॥ १२ ॥

नानाकल्पौघभासांविविधाभरणसमूहशोभिताम् ॥ मनोभूशरविकलतनूंकामबाणव्याकुलशरीराम् ॥११॥१२॥

अस्यकालरात्रिमंत्रस्यदक्षऋषिः जगतीछंदः अर्कनिवासिनीकालरात्रिर्देवताक्रींबीजंमायाराज्ञीतिशक्तिःममाभीष्ट० ।

कालिकापीठेजयादिशक्तियुते ॥ पूजायंत्रमाह ॥ बिंद्विति ॥ १३ ॥ कलापत्रंषोडशदलम् ॥ तिस्त्रोरेखायस्यतत्
धरणीगृहंचतुष्कोणम् ॥ १४ ॥ कामनाभेदाल्लेखनभेदमाह ॥ तद्यन्त्रमिति॥ क्षीरद्रोःक्षीरवृक्षस्याश्वत्थोदुंबरप्लक्षव

तांयजेत्कालिकापीठेपूजार्थंयंत्रमुच्यते ॥बिंदुत्रिकोणषट्कोणवृत्ताष्टदलवृत्तकम् ॥१३॥ कलापत्रंपु
नर्वृत्तंत्रिरेखंधरणीगृहम् ॥चतुर्द्वारयुतंकृत्वाबिंदौदेवीमथार्चयेत् ॥१४॥ तद्यंत्रंविलिखेद्भूर्जेक्षीरद्रोः
फलकेपिवा ॥शांतयेत्यष्टगंधेनलेखिन्याचंपकोत्थया ॥१५॥ कर्चूरागुरुकर्पूररोचनारक्तचंदनम् ॥
कुंकुमंचंदनंचापिकस्तूरीत्वष्टगंधकम् ॥१६॥ सिंदूरहिंगुलाभ्यांचवश्यायविलिखेत्सुधीः॥सारसोद्भ
वलेखिन्यास्तंभनेकोकिलच्छदैः॥१७हरितालहरिद्राभ्यांमारणेवायसच्छदैः॥धत्तूरभानुनिर्गुंडीखरा
श्वमहिषासृजा॥१८एवंविलिखितेयंत्रेकुर्य्यादावरणार्चनम्॥त्रिकोणेदेवतास्तिस्त्रोवामावर्तेनपूजयेत्
॥१९॥संमोहिनींमोहिनींचतृतीयांचविमोहिनीम्॥षट्सुकोणेषुहृदयादिषडंगानिततोयजेत्॥२०॥

टान्यतमस्य ॥ १५ ॥ १६ ॥ स्तंभनेकोकिलपक्षैः ॥ १७ ॥ हरितालहरिद्राभ्यामित्यन्वयः ॥ मारणेवायसच्छदैः
धत्तूररसादिभिर्लिखेत् इत्यस्यान्वयः ॥ भानुरर्करसः ॥ खरादीनामसृजारक्तेन ॥ १८ ॥ १९ ॥ २० ॥

स्वराअंनमइत्यादयः ॥ हलोव्यंजनानिकंनमइत्यादीनि ॥ कलादेलषोडशपत्रे ॥ २१ ॥ मंजुघोषयासह घृताची ॥ २२ ॥ २३ ॥ मंत्रादिमामिति ॥ मंत्रादौवर्तमानंबीजपंचकंस्वदेवतायुतंयजेत् ॥ यथा–ॐपरमात्मनेनमः॥ ऐंस

वृत्तेस्वराःसमभ्यर्च्यामातरोष्टौवसुच्छदे ॥ कादिक्षांताहलोवृत्तेउर्वश्याद्याःकलादले ॥२१॥ उर्वशी मेनकारंभाघृताचीमंजुघोषया ॥सहजन्यासुकेशीस्यादष्टमीतुतिलोत्तमा ॥ २२ ॥ गंधर्वीसिद्धकन्याचकिन्नरीनागकन्यका ॥विद्याधरीकिंपुरुषायक्षिणीतिपिशाचिका ॥ २३ ॥ पुनर्वृत्तेयजेन्मंत्री देवतादशकंयथा॥मंत्रादिंमंपंचबीजंस्वस्वदेवतयायुतम्॥२४॥पंचबाणान्स्वबीजाद्यानित्युक्त्वादशदेवताः ॥भूगृहांतःसमभ्यर्च्याअणिमाद्यष्टसिद्धयः ॥२५॥ भूगृहस्यत्रिरेखासुसंपूज्यानवदेवताः॥ इच्छाशक्तिःक्रियाशक्तिर्ज्ञानशक्तिरितित्रयम् ॥ २६ ॥ आद्यरेखागतंपूज्यंद्वितीयायांशिवाजकाः॥ तृतीयायांतुरेखायांसत्त्वमुख्यंगुणत्रयम् ॥ २७ ॥ पूर्वादिषुचतुर्द्वार्षुगणेशंक्षेत्रपालकम् ॥ बटुकंयोगिनीश्चापियजेदिंद्रादिकानपि ॥ २८ ॥

रस्वत्यैनमः ॥ ह्रींगौर्यै० ॥ क्लींकामायै० ॥ श्रींरमायै० इति ॥ २४ ॥ पंचेति ॥ स्वबीजाद्यान् ॥ पंचबाणान्द्रांद्रावणबाणायनमःइत्यादिपूर्वोक्तान् ॥ अणिमादयउक्ताः ॥ २५ ॥ २६ ॥ शिवाजकारुद्रविष्णुब्रह्माणः ॥ सत्त्वमुख्यं सत्त्वरजस्तमांसि ॥ २७ ॥ २८ ॥

॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ वशीकरणमाह ॥ शनिवारइत्यादिहरिद्राक्षतपुष्पैश्चमन्त्रेणानेनपूजयेदित्यंतेन ॥

एवंबाह्यार्चनंकृत्वादेवीपार्श्वगताःपुनः॥देव्योद्वादशसंपूज्याःप्रतिदिक्त्रितयंत्रयम् ॥ २९ ॥ माया वाकालरात्रिश्चतृतीयावटवासिनी॥गणेश्वरीचकाह्नाख्याव्यापिकालार्कवासिनी ॥ ३० ॥मायारा ज्ञीचमदनप्रियास्याद्दशमीरतिः॥लक्ष्मीःकाह्नेश्वरीचेतिदेव्योद्वादशकीर्तिताः ॥ ३१ ॥ नैवेद्यांतार्च नंकृत्वादद्यान्मद्यादिनाबलिम्॥ एवंसंपूजितास्वेष्टंकालरात्रिःप्रयच्छति ॥ ३२ ॥ शनिवारेतुसंध्या यांगच्छेद्रम्यंसरोवरम्॥हरिद्राऽक्षतपुष्पैस्तन्मंत्रेणानेनपूजयेत् ॥ ३३ ॥ तारोनमोजलौकायैद्वितयं सर्वतःपरम्॥जनंवशंकुरुद्वंद्वंहुमंतोमनुरीरितः ॥ ३४ ॥ गृहमागत्यगोत्रायांस्वप्याद्देवींस्मरन्निशि ॥ प्रातस्तत्रैवगत्वाथजलौकाद्वितयंततः॥ ३५ ॥ गृहीत्वातत्प्रशोष्याथच्छायायांचूर्णयेत्पुनः ॥ जलौ काचूर्णयुक्तेनकृष्णकार्पाससूत्रतः ॥ ३६ ॥ वर्तिंविधायमुंचेतभाजनेनिर्मितेमृदा॥ कुलालचक्रोत्थि तयातत्रतैलंपुनःक्षिपेत्॥३७तैलंयंत्रात्समानीतंभ्रमतोनिर्मलंशुचि॥वारस्त्रीसदनाद्वह्निमानीयज्वाल येत्तुतम्॥३८॥ दारुभिःकोकिलाक्षस्यप्रकुर्य्यात्तत्रदीपकम्॥वह्नेःपुरद्वयंक्षोणीपुरयंत्रेनिधापनम्॥३९

स्पष्टारिति शेषः ॥ ३३ ॥ ३४ ॥ गोत्रायांभूमौ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ कोकिलाक्षस्यकुचिलावृक्षस्य ॥ वह्नेः पुरंत्रिकोणम् ॥ तद्द्वयंषट्कोणम् ॥ क्षोणीपुरंचतुरस्त्रम् ॥ ३९ ॥

॥ भूमिःग्लौं ॥ वसुसायकवर्णौष्टपंचाशदर्णः॥ प्रयोगोयथा–साधकःशनिवासरेसंध्याकालेतडागंगत्वा ॐनमोज
लूकायैजलूकायैसर्वंजनंवशंकुरु २ हुंमितिमंत्रेणहरिद्राक्ताक्षतपुष्पैर्जलंपूज्यगृहंगत्वादेवींस्मरन्निशिभूमौशयीत
प्रातस्तस्मात्सरसोजलौकाद्वयमादायच्छायाशुष्कंकृत्वासंचूर्ण्यतच्चूर्णयुक्तेनकृष्णकार्पाससूत्रेण वर्तिकांकृत्वाकुला
लचक्रानीतमृन्निर्मितेपात्रे तां निधायभ्रमतस्तैलयंत्रात्तिलतैलमादायतत्रानिःक्षिपेत् ॥ वेश्यागृहाद्वह्निमानीयकुचि

निशारसेनरचितेमध्येलाजासमन्विते॥कालरात्रिंततोदीपेसमावाह्यप्रपूजयेत् ॥ ४० ॥ युक्तामावर
णैःपश्चान्नवीनंखर्परंन्यसेत्॥दीपोत्थपात्रपतितमादद्यात्कज्जलंसुधीः॥ ४१ ॥ पश्चिमाभिमुखोमंत्री
कज्जलंतत्तुमंत्रयेत्॥वक्ष्यमाणेनमनुनाशतत्रितयसंमितम् ॥ ४२ ॥ तारोवाङ्मदनोमायारमाभूमिर्ब
लूंहूसौः॥ नमःकाद्धेश्वरिपदंसर्वान्मोहयमोहय ॥ ४३ ॥ कृष्णेतेकृष्णवर्णेचकृष्णांबरसमन्विते ॥
सर्वानाकर्षयद्वंद्वंशीघ्रंवशंकुरुद्वयम् ॥ ४४ ॥

लाइतिकान्यकुब्जभाषाप्रसिद्धतरोःकाष्ठैस्तंप्रज्वाल्य तेनतत्पात्रेदीपंकृत्वाहरिद्रारसकृतेत्रिकोणषट्कोणचतुष्को
णात्मकेयंत्रेमध्येलाजान्प्रक्षिप्यतदुपरिदीपपात्रंस्थापयित्वादीपेकालरात्रिमावाह्यसावरणामिष्ट्वाखर्परंदीपोपरिधृत्वा
जनंपातयेत् ॥ तदंजनमादायपश्चिमाभिमुखः शतत्रयमनेनमंत्रेणमंत्रयेत् ॥ ४० ॥ ४१ ॥ ४२ ॥ ॥१५९॥
मंत्रोयथा–ॐऐंक्लीं ह्रींश्रींग्लौंब्लूंहूसौःनमः काद्धेश्वरिसर्वान्मोहय २ कृष्णेकृष्णवर्णेकृष्णांबरसमन्विते सर्वा

नाकर्षय २ शीघ्रंवशंकुरु २ ऐंह्रींक्लींश्रींइति ॥ ४३ ॥ ४४ ॥ ४५ ॥ ततोदीपादेवीमात्मनिसंयोज्यतत्कज्जलंभौमवारेनवनीतमर्दितंपात्रेसंस्थाप्यतदग्रेवह्निंसंस्थाप्यसंस्कृत्यमधूकपुष्पैरष्टोत्तरशतंमूलेनहुत्वाकुमारीबटुकास्त्रियोभो

वाग्भवागिरिजाकामश्रीबीजांतोमहामनुः ॥ वसुसायकवर्णोयमंजनस्याभिमंत्रणे ॥ ४५॥ दीपादा
त्मनिसंयोज्यदेवतामंजनंपुनः ॥भौमवारेसमभ्यर्च्यनवनीतेनमर्दयेत् ॥ ४६ ॥ मूलेनाष्टोत्तरशतंपु
नर्होमंसमाचरेत्॥ मधूककुसुमैःसाष्टशतंवह्नौसुसंस्कृते ॥ ४७ ॥ कुमारींबटुकंनारींभोजयेन्मधुरा
न्वितम् ॥ तेनांजनेनरचिततिलकोमंत्रिसत्तमः ॥४८॥ दर्शनादेववशयेन्नरनारीनरेश्वरान् ॥ दुग्धे
नादौप्रदत्तंतन्नराणांवशकारकम् ॥ ४९ ॥ तेनस्पृष्टोनरोनूनंदासःस्यात्सुभवेत्सदा॥वशीकरणमाख्या
तंस्तंभनंप्रोच्यतेऽधुना ॥ ५० ॥ हरिद्रारंजितेवस्त्रेलिखेद्यंत्रमिदंशुभम्॥ निशागोरोचनाकुष्ठांजनै
र्गोमूत्रमर्दितैः॥ ५१ ॥

जयेत् ॥ तदंजनकृततिलकोजगद्वशयेदित्यादिफलंस्पष्टम् ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ स्तंभनमाह ॥ हरिद्रेति ॥ ५१ ॥

गगनक्षोण्यौहलौ ॥ चंद्रोबिंदुः ॥ तेनह्रांह्रींह्रूंइति ॥ अंतिमःक्षः भगीण्युतःक्षे॥ यथा-रवौहरिद्रारोचनाकुंतद्व
रैगोमूत्रपिष्टैर्हरिद्रारंजितेवस्त्रेऽष्टदलंकृत्वामुकंस्तंभयेतिमध्ये ॐ ॐग्लौंग्लौंचटचटेतिवर्णान्दलेषुचालिखेत् ॥
स्वंपीतवस्त्रं सूत्रेणसंवेष्ट्यकोकिलतरोःसप्तकंटकैर्विद्ध्वार्कपत्रैः संवेष्ट्यवल्मीकरंध्रेप्रक्षिप्यमेषमूत्रमुपरिसिक्त्वा रंध्रोप

लिखेदष्टदलंपद्मंरिपुनामाढ्यकार्णिकम् ॥ दलेषुविलिखेत्तारद्वयंभूबीजयुग्मकम् ॥५२॥ चटद्वयंत
तोयंत्रंपीतसूत्रेणवेष्टयेत् ॥कोकिलाख्यतरोःसप्तकंटकैःपरिकीलितम् ॥५३॥ भानुवृक्षदलैःसम्यग्वे
ष्टितंनिःक्षिपेत्पुनः ॥वाल्मीकरंध्रेमेषस्यमूत्रेणोपरिपूरयेत्॥५४॥ अश्मानंरंध्रवदनेनिधायाश्मस्थि
तःसुधीः॥सहस्रंप्रजपेन्मंत्रंनिशाचरदिशामुखः॥५५॥ निशयानिर्मितैरक्षैःसमंत्रःप्रोच्यतेधुना॥प्रण
वोगगनक्षोण्यौचंद्रदीर्घत्रयान्वितौ॥५६॥कामाक्षिमायावर्णांतेरूपिणीतिपदंततः।सर्वान्तेचमनोहारि
ण्यंतेस्तंभययुग्मकम्॥५७॥रोधयद्वितयंपश्चान्मोहयद्वितयंपुनः॥दीर्घत्रयाढ्यकामस्यबीजंकामोंति
मोभगी॥५८॥काह्लेश्वरिततोवर्मत्रयंपंचाशदक्षरः ॥प्रोक्तोमंत्रःप्रजप्तेस्मिञ्छत्रूणांस्तंभनंभवेत् ॥५९॥

रिशिलांसंस्थाप्यतत्रस्थितोऽमुंमंत्रंहरिद्रामाणिभिःसहस्रंजपेन्नैर्ऋत्याभिमुखः ॥ मंत्रोयथा-ॐह्रांह्रींह्रूं कामाक्षिमा
यारूपिणिसर्वमनोहारिणिस्तंभय २ रोधय २ मोहय २ क्लांक्लींक्लूंकामाक्षेकाह्लेश्वरिहुंहुंहुंइति ॥ एवंकृते

रिपुस्तंभः ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ मोहनमाह ॥
रवाविति ॥ अर्कमन्मथैर्द्वादशकामबीजैः ॥ यथा–रविवारेहरिद्रांनारीदुग्धेनपिष्ट्वातद्रसेनभूर्जपत्रमध्येकामबी

रवौहरिद्रामानीयपिष्ट्वादुग्धेनयोषितः॥तद्रसेनलिखेद्भूर्जेवृत्तमंतःस्मरान्वितम् ॥ ६० ॥ तद्वृत्तंवेष्टये
त्कामबीजैर्दशभिरादरात् ॥ पुनर्वृत्तंप्रकल्प्याथवेष्टयेदर्कमन्मथैः ॥ ६१ ॥ विरच्याथपुनर्वृत्तंवेष्टये
त्षोडशस्मरैः ॥ तस्योपरिष्टात्षट्कोणंकोणेषुमदनान्वितम् ॥ ६२ ॥ वाग्बीजमध्येतत्सर्वंयंत्रंमो
हनकारकम् ॥ उपविश्याथतद्यंत्रेदशवर्णमनुंजपेत् ॥ ६३ ॥

जयुतंवृत्तंकृत्वादशकामबीजैः संवेष्ट्यपुनर्वृत्तंकृत्वाद्वादशकामबीजैः संवेष्ट्यपुनर्वृत्तंकृत्वाषोडशकामबीजैः संवे
ष्ट्योपरिकामबीजयुक्षट्कोणंकृत्वासर्ववाग्बीजमध्यस्थंकुर्यात् ॥ तद्यंत्रोपरिस्थित्वापंचादिनंप्रत्यहंसहस्रंदशाक्षरंज

पेत् ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ मंत्रोयथा-ॐकामायक्लींक्लीं कामिन्यैक्लीमिति ॥ जपदशांशेनतिल तैलेनैवजुहुयात् ॥ तद्भस्मनातिलकेनतद्यंत्रधारणेनचविश्वंमोहयेत् ॥ ६४ ॥ ६५ ॥ ६६ ॥ आकर्षणमाह ॥

ङेंतःकामःकामबीजंकामिन्यैकामसंपुटः ॥ताराद्योदशवर्णोयंमनुर्लोकविमोहनः ॥ ६४ ॥ पंचाहंप्र जपेन्मंत्रंप्रत्यहंक्रुद्धमानसः ॥ तद्दशांशंप्रजुहुयात्तिलैराज्यपरिप्लुतैः ॥ ६५ ॥ होमोत्थभस्मनाकुर्व स्तिलकंनरसत्तमः ॥ मोहयेदखिलंविश्वंतद्यंत्रस्यापिधारणात् ॥ ६६ ॥ उक्तंमोहनमाकर्षंवक्ष्येकृ ष्णाष्टमीदिने ॥ भूतेवाभूमिजन्मार्कयुक्तेप्रातर्जलांतरे ॥६७॥ नाभिदघ्नेस्थितोमूलंसहस्रंमशतंजपे त् ॥ ततोगृहंसमागत्यतैलाभ्यक्तकलेवरः ॥ ६८ ॥ पीठादावंजनैःकृत्वारुयाकारंवानराकृतिम् ॥ इष्ट्वालज्जावतीपत्रैःप्रोक्षेत्तन्मूलजैरसैः ॥ ६९ ॥ तदग्रेप्रजपेच्चत्वारिंशदक्षरकंमनुम् ॥तारोनमःकालि कायैसर्वाकर्षपदंततः ॥ ७० ॥ रतिवायूभौतिकस्थावमुकीमितिवर्णतः ॥ आकर्षयद्वयंशीघ्रमानय द्वितयंततः ॥ ७१ ॥

उक्तमिति ॥ लज्जावतीलज्जालुः ॥ स्पर्शमात्रेणयत्पत्राणिसंकुचंतिसालज्जालुः ॥ रतिवायूणयौभौतिकस्थौ ऐयुतौ ॥ तेनण्यै ॥ आकर्षणमनुश्चत्वारिंशद्वर्णः ॥ प्रयोगश्च-कृष्णाष्टम्यांकृष्णचतुर्दश्यांवाकुजरव्यन्यतरयु

त्कायांप्रातर्नाभिमात्रेजलेस्थित्वा मूलमेकादशशतंप्रजप्य गृहमागत्यशरीरंतैलेनाभ्यज्यपीठेंजनैर्न (ाकारंयोषिदा
कारंवाविलिख्यलज्जावतीपत्रैस्तंसंपूज्यलज्जावतीमूलरसेनसंप्रोक्ष्यतदग्रेऽमुंमंत्रंषष्ट्याधिकशतंजपेत् ॥ मन्त्रो यथा-
ॐनमः कालिकायैसर्वाकर्षण्यैअमुकीमाकर्षय २ शीघ्रमानय २ आंह्रींक्रोंभद्रकाल्यैनमःइति ॥ त १:पञ्चाशत्कर

पाशोमायांकुशंभद्रकाल्यैहृदयमंततः ॥ चत्वारिंशल्लिपिर्मंत्रःप्रोक्तआकर्षणक्षमः ॥ ७२ ॥ शतंष
ष्ट्याधिकंजप्त्वालोहितैःकरवीरजैः ॥पंचाशत्प्रमितैर्मंत्रीपूजयेल्लिखिताकृतिम् ॥७३॥ मातृकावर्ण
मेकैकंतन्नामाकर्षयद्वयम् ॥ नमइत्यभिसंजप्यपुष्पमेकैकमर्पयेत्॥७४॥धूपदीपनिवेद्यानिकृत्वाहो
मंसमाचरेत् ॥ चणकैराज्यसंमिश्रैराकर्षमनुनाशतम् ॥ ७५ ॥ कृष्णकार्पाससूत्रस्यकुमारीनिर्मित
स्यच ॥ गुणंदेहमितंकृत्वाअष्टाविंशतितंतुभिः ॥ ७६ ॥ आकर्षमनुनादद्याद्ग्रंथीनष्टोत्तरंशतम् ॥
तद्दोरकेधृतेशीघ्रमायातिस्त्रीनरोपिवा ॥ ७७ ॥

वीरपुष्पैःअंअमुकीम् आकर्षय २ नमःआंअमुकीमित्यादिपंचाशद्वर्णपूर्वकमेतज्जपंस्तमाकारंपूजयेत् ॥ ६७ ॥
॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ धूपदीपनैवेद्यंकृत्वातदग्रेऽग्निंप्रतिष्ठाप्यतत्राज्याक्तचणकैःशत
मधुनोक्तमनुनाहुत्वाकुमारीकर्त्तितेनकृष्णकार्पाससूत्रेणाष्टाविंशतितंतुनिर्मितंस्वदेहमितंदोरकंकृत्वा कर्षमंत्रेणा

ष्टोत्तरशतंग्रंथीन्दत्त्वातद्धारणान्नरंनारींचाकर्षतीति ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ उच्चाटनमाह ॥ शून्यात ॥
कुक्कुटासनलक्षणमंतेवक्तव्यम् ॥ ७९ ॥ ८० ॥ मंत्रांतरमाह ॥ तारइति ॥ भूधरोवः ॥ भृगुःसः ॥अर्कोमः ॥ संव

त्रिरात्राद्ग्राममध्यस्थोन्यदेश्योनवरात्रतः ॥उक्तमाकर्षणमिदमुच्चाटनमथोच्यते ॥ ७८ ॥शून्यागारे
चतुर्दश्यांकृष्णायांकुक्कुटासनः ॥यमाशावदनोमुक्तकचोनीलांबरावृतः॥७९॥ग्रंथिसंयुतयामौंज्या
रज्ज्वामंत्रमिमंजपेत् ॥सहस्रद्वयसंख्यातंशवय्योर्देवतांस्मरन् ॥८० ॥ तारोभूधरभृग्वर्कसंवर्ताःक्रि
ययान्विताः॥ प्रत्येकंदीपिकाचंद्रयुक्ताबीजचतुष्टयम्॥८१॥कालिरात्रिमहाध्वांक्षिपदांतेमुकमुच्चरेत्
आशूच्चाटययुग्मंतुछिंधिभिंधिशुचिप्रिया ॥८२॥ प्रासादबीजंकामाक्षिसृण्यंतोमनुरीरितः॥ षट्त्रिं
शद्वर्णसंयुक्तःशीघ्रमुच्चाटकोरिपोः ॥ ८३ ॥

र्तक्षः ॥ एतेचत्वारःप्रत्येकंक्रिययालकारेणयुतास्तथादीपिकाचंद्रयुताऊबिंदुयुताश्चत्वारिबीजानि ॥ तेनव्लूंस्लूंम्लूं
क्ष्लूं ॥ ८१ ॥ शुचिप्रियास्वाहा ॥ ८२ ॥ प्रासादबीजंह्रौं ॥ सृणिःक्रों ॥ ८३ ॥

प्रयोगोयथा-कृष्णचतुर्दश्यांशून्यगृहेनीलवस्त्रावृतोमुक्तकच्छामुक्तशिखोदक्षिणामुखःकुक्कुटासनेनोपविश्यग्रंथियुक्त
यामुंजरज्ज्वानिशिसहस्रद्वयममुंमंत्रंजपेत् ॥ मंत्रोयथा-ॐब्लूंस्लूंम्लूंक्ष्लूंकालरात्रिमहाध्वांक्षिअमुकमाशूच्चाटय२
छिंधि २ भिंधिस्वाहाहौंकामाक्षिक्रोमिति ॥ ततःशतद्वयमनेनैवमंत्रेणसर्षपैर्हुत्वातैलोदकयुतेनसर्षपपिण्याकेन
तेनमनुनाबलिंदद्यात् ॥ ८४ ॥ एवंसप्ताहंकृतेउच्चाटनसिद्धिः ॥८५॥ विद्वेषणमाह ॥ ययोरिति ॥ जन्मतरुजोजन्म

जपांतेतद्दशांशेनसर्षपैर्जुहुयान्निशि ॥ ततःसर्षपपिण्याकैस्तत्तैलोदकसंयुतैः ॥ ८४ ॥ बलिंप्रदद्यात्ते
नैवंमनुनाविशिखोभुवि ॥एवंकृतेसप्तरात्रंदेशाद्दूरंव्रजेदरिः॥८५॥ययोर्विद्वेषमन्विच्छेत्तयोर्जन्मत
रूद्भवम् ॥ फलकद्वितयंकृत्वातत्राकारौतयोर्लिखेत् ॥८६॥विषाष्टकेनवालेयीदुग्धाक्तेनाभिधान्वि
तम्।'तत्स्पृष्ट्वाप्रजपेन्मंत्रंसहस्रमधियामिनि ॥८७॥वियत्पावकमन्विंदुयुग्लौंखंमनुहंसयुक्॥निद्राभि
मनुबिंदुस्थाभगवत्यन्तेतिदंडधा ॥ ८८ ॥

वृक्षाः ॥ तेउक्ताः ॥ ८६ ॥ विषाष्टकमंतेवक्ष्यति ॥ वालेयीरासभी ॥ अधियामिनिरात्रौ ॥ ८७ ॥ मंत्रमाह ॥वि
यदिति ॥ पावकमन्विंदुयुक् रऔबिंदुयुतंवियतहः ह्रौं ॥ ग्लौं ॥ इंदुयुक्मनुरौंहंसःसःतैर्युक्तंखंहं ह्सौं ॥ अभि
नुबिंदुस्था निद्राभःभ्रौं ॥ ८८ ॥

रमाश्रीं ॥ ८९ ॥ कवचंहुं ॥ ९० ॥ सौरिभोमहिषः ॥ गन्धर्वोऽश्वः ९१ ॥ प्रयोगः प्रीतिमतोर्द्वयोर्जन्मवृक्षोत्थेफलकद्वयेतत्ररासभीक्षीरमर्दितेनाविषाष्टकेनोपरिनामयुक्तमाकारद्वयंविलिख्यतत्स्पृष्ट्वानिशि सहस्रममुंमंत्रंजपेत् ॥ मंत्रो यथा-ॐह्रींग्लौंहूंसौंक्रौंभगवतिदंडधारिणिअमुकममुकंशीघ्रंविद्वेषय २ रोधय २ भंजय २ श्रींह्रींराज्यैॐहुंहुंहुं

रिण्यन्तेऽमुकममुकंशीघ्रंविद्वेषयद्वयम् ॥ रोधयद्वितयंपश्चाद्भंजयद्वितयंरमा ॥ ८९ ॥ मायाराज्ञीचतुर्थ्यंताप्रणवंकवचत्रयम् ॥ पंचाशदक्षरोमंत्रस्तारादिःसर्वसिद्धिदः ॥ ९० ॥ जपांतेफलकद्वंद्वंबद्ध्वारज्ज्वापरस्परम् ॥ खरसैरिभगंधर्वपुच्छरोमसमुत्थया ॥ ९१ ॥ वल्मीकरंध्रेनिखनेत्पुनस्तावज्जपेन्नरः ॥ सप्ताहाज्जायतेवैरंतयोःप्रीतिमतोरपि ॥ ९२ ॥ मारणंतुप्रकुर्वीतब्राह्मणेतरविद्विषि ॥ तच्छुद्धयर्थंजपेन्मूलमंत्रमष्टोत्तरंशतम् ॥ ९३ ॥ कृष्णांगारंचतुर्दश्यांगोपुराद्वाचतुष्पथात् ॥ श्मशानाद्वासमानीय मृदंतत्रविनिःक्षिपेत् ॥ ९४ ॥

इति ॥ ततःखरमाहिषाश्वपुच्छरोमकृतयारज्ज्वातत् फलकद्वयंमिथोबद्ध्वा वल्मीकरंध्रेनिखायपुनर्मंत्रंसहस्रंजपेत् ॥ एवंविद्वेषणासिद्धिः ॥ ९२ ॥ मारणमाह ॥ मारणमिति ॥ तद्विप्रेनिषिद्धम् ॥ ९३ ॥ ९४ ॥

विडंगंकृमिघ्नम् ॥ हयारिः करवीरः ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ मारणमन्त्रमाह ॥ दीर्घेति ॥ तंद्रीमःदीर्घत्रय
म् अग्निः रात्रीशो बिंदुस्तैर्युक्तः ॥ तेनम्रांम्रींम्रूं सृणिःक्रों ॥ ९९ ॥ ध्रुवादिःप्रणवादिः ॥ १०० ॥ उग्रावचा

विडंगानिहयार्य्यर्कंकुसुमान्यपिमंत्रवित्॥तन्मृदापुत्तलींकुर्य्याच्छ्मशानेनिर्जनालये ॥ ९५ ॥ उपवि
श्यशिखामुक्तोनीलवस्त्रावृतोनिशि ॥तद्वक्षसिरिपोर्नामलिखित्वास्थापयेदसून् ॥ ९६ ॥ श्मशान
वाससाच्छाद्यतैलाभ्यक्तामथार्चयेत्॥स्नापयेत्पुत्तलींतांतुखराश्वमहिषासृजा ॥ ९७ ॥ रक्तचंदनध
त्तूरकुसुमान्यर्पयेत्ततः॥मारणाख्येनमनुनाकुर्य्याद्धोमंचपूजनम्॥ ९८ ॥ दीर्घत्रयाग्निरात्रीशयुक्तांतं
द्रीमृतीश्वरि ॥क्रूंकृत्यंतेऽमुकंशीघ्रंमारयद्वितयंसृणिः ॥ ९९ ॥ त्रयोविंशत्यक्षराढ्योध्रुवादिर्मारणे
मनुः॥अनेनमनुनापूजांकृत्वाहोमंसमाचरेत् ॥ १०० ॥ उग्रासर्षपभल्लातोन्मत्तबीजैःसुमिश्रितैः ॥
श्मशानाग्नौशतंसाग्रंच्छित्वातत्प्रतिमाशिरः ॥ १०१ ॥ तदग्नौप्रदहेन्मंत्रीपूर्णाहुतिमथाचरेत्॥ एवं
कृतेत्रिसप्ताहाद्रिपुःस्यात्सूर्यजातिथिः ॥ १०२ ॥

उन्मत्तोधत्तूरः ॥ सूर्यजातिथिर्यमाऽतिथिःस्यात् ॥ म्रियतेइत्यर्थः ॥ १०१ ॥ १०२ ॥

प्रयोगश्च–कुजवारयुतायांकृष्णचतुर्दश्यांपुरद्वारचतुष्पथश्मशानान्यतमस्मान्मृदमानीयविडंगकरवीरार्कपुष्पयुतांकृत्वाश्मशानस्थोविशिखोनीलवस्त्रोनिशितयामृदापुत्तलींहृदितन्नामयुतांकृत्वाप्राणान्प्रतिष्ठाप्यश्मशानवस्त्रेणाच्छाद्यतैलेनाभ्यज्यखराश्वमहिषरुधिरेणसंस्नाप्यरक्तचंदनेनविलिप्यधत्तूरपुष्पैः संपूज्यतदग्रेश्मशानाग्निंसंस्थाप्यतदग्नौवचासर्षपभल्लातकधत्तूरबीजमिश्रितैरष्टोत्तरशतंजुहुयान्मंत्रेण ॥ यथाॐम्रांम्रींम्रूंमृतीश्वारिकृंकृत्येअमुकंशीघ्रंमा

कर्मस्वेवंविधेष्वादौभैरवायबलिंदिशेत्॥माषान्नपलमद्याद्यैरेवंसिद्धिर्भवेद्ध्रुवम् ॥ १०३ ॥योमंत्री
विदधातीदृक्कर्मतेनप्रयत्नतः ॥ आत्मावनायसंसेव्योनरसिंहोहरोपिवा ॥ १०४ ॥ अथचंडीविधा
नम्॥अथोनवाक्षरंमंत्रंवक्ष्येचंडीप्रवृत्तये ॥वाङ्मायामदनोदीर्घालक्ष्मीस्तंद्रीश्रुतींदुयुक्॥॥ १०५ ॥
डायैसदृग्जलंकूर्मद्वयंझिंटीशसंयुतम्॥नवाक्षरोस्यऋषयोब्रह्मविष्णुमहेश्वराः ॥ १०६ ॥

रय २ क्रोंइति ॥ ततःपुत्तलीशिरश्छित्त्वाऽग्नौहुत्वापूर्णाहुतिंकुर्यात् ॥ एवमेकविंशतिरात्र्यंतेरिपुर्म्रियतइति ॥ ततःप्रायश्चित्तंकुर्यात् ॥ १०३ ॥ १०४ ॥ सप्तशतीपाठांगभूतंचंडीमन्त्रमाह ॥ वागिति ॥ वाक्ऐं ॥ मायाह्रीं॥मदनःक्लीं ॥ दीर्घालक्ष्मीश्च ॥ तंद्रीमः श्रुतींदुयुग् उबिंदुयुक्तः मुं ॥ १०५ ॥ डायैस्वरूपम् ॥ सदृग्जलंवि ॥ कूर्मद्वयं चयुग्मंझिंटीशसंयुतंएयुतं च्चे ॥ १०६ ॥

महाकालीमहालक्ष्मीमहासरस्वत्योदेवताः ॥ १०७ ॥ १०८ ॥ भगःसूर्यः ॥ १०९ ॥ ११० ॥ एकादशन्यासा
नाह ॥ ततइति ॥ पूर्वोक्तमार्गतःप्रथमपटलोक्तविधिना ॥ १११ ॥ सारस्वतन्यासमाह ॥ अथेति ॥ ११२ ॥

छंदांस्युक्तानिमुनिभिर्गायत्र्युष्णिगनुष्टुभः ॥ देव्यःप्रोक्तामहापूर्वाःकालीलक्ष्मीःसरस्वती ॥१०७॥
नंदाशाकंभरीभीमाःशक्तयोस्यमनोःस्मृताः ॥ स्याद्रक्तदंतिकादुर्गाभ्रामर्य्योबीजसंचयः ॥१०८॥
अग्निर्वायुर्भगस्तत्त्वंफलंवेदत्रयोद्भवम् ॥ सर्वाभीष्टप्रसिद्ध्यर्थंविनियोगउदाहृतः ॥ १०९ ॥ ऋषि
श्छंदोदैवतानिशिरोमुखहृदिन्यसेत् ॥ शक्तिबीजानिस्तनयोस्तत्त्वानिहृदयेपुनः ॥११०॥ ततएका
दशन्यासान्कुर्वीतेष्टफलप्रदान् ॥ प्रथमोमातृकान्यासःकार्य्यःपूर्वोक्तमार्गतः १११ ॥ कृतेनयेनदेव
स्यसारूप्यंयातिमानवः ॥ अथद्वितीयंकुर्वीतन्यासंसारस्वताभिधम् ॥ ११२ ॥ बीजत्रयंतुमंत्राद्यं
तारादिहृदयांतिकम् ॥ क्रमादंगुलिषुन्यस्यकनिष्ठाद्यासुपंचसु ॥ ११३ ॥ करयोर्मध्यतःपृष्ठेमणि
बंधेचकूर्परे ॥ हृदयादिषडंगेषुविन्यसेज्जातिसंयुतम् ॥ ११४ ॥

बीजेति ॥ मन्त्रादिमंबीजत्रयंप्रणवादिनमोंतंकनिष्ठादिनवस्थानेषुन्यस्यहृदयादिषुजातियुक्तंन्यसेत ॥ यथा-ॐऐं
ह्रींक्लींनमःकनिष्ठिकायामित्यादि० ॥ ॐऐंह्रींक्लींहृदयायनमइत्याद्यंगेष्वपि ॥ ११३ ॥ ११४ ॥

फलमाह ॥ अस्मिन्निति ॥ ११५ ॥ मायेति ॥ ह्रींब्राह्मीपूर्वतोमांपातुइत्यादि० ॥ ११६ ॥ ११७ ॥ ११८ ॥ एत

अस्मिन्सारस्वतेन्यासेकृतेजाड्यंविनश्यति ॥ ततस्तृतीयंकुर्वीतन्यासंमातृगणान्वितम् ॥११५॥ मायाबीजादिकाब्राह्मीपूर्वतःपातुमांसदा ॥ माहेश्वरीतथाग्नेय्यांकौमारीदक्षिणेऽवतु ॥ ११६ ॥ वैष्णवीपातुनैर्ऋत्येवाराहीपश्चिमेऽवतु ॥ इंद्राणीपावकेकोणेचामुंडाचोत्तरेऽवतु॥११७॥ ऐशानेतु महालक्ष्मीरूर्ध्वंव्योमेश्वरीतथा॥सप्तद्वीपेश्वरीभूमौरक्षेत्कामेश्वरीतले॥ ११८॥तृतीयेस्मिन्कृतेन्यासे त्रैलोक्यविजयीभवेत् ॥ न्यासंचतुर्थंकुर्वीतनंदजादिसमन्वितम् ॥११९॥ नंदजापातुपूर्वांगंकमलां कुशमंडिता ॥ खड्गपात्रकरापातुदक्षिणेरक्तदंतिका ॥ १२० ॥ पृष्ठेशाकंभरीपातुपुष्पपल्लवसंयुता॥ धनुर्बाणकरादुर्गावामेपातुसदैवमाम् ॥ १२१ ॥ शिरःपात्रकराभीमामस्तकाच्चरणावधि ॥पादा दिमस्तकंयावद्भ्रामरीचित्रकांतिभृत् ॥१२२॥ तुर्य्यंन्यासंनरःकुर्य्याज्जरामृत्यूव्यपोहति ॥ अथकु र्वीतब्रह्माख्यंन्यासंपंचममुत्तमम् ॥१२३॥ पादादिनाभिपर्य्यंतंब्रह्मापातुसनातनः ॥ नाभेर्विशुद्धिप र्य्यंतंपातुनित्यंजनार्दनः ॥ १२४ ॥

त्फलमाह॥ तृतीयेइति ॥ चतुर्थंन्यासमाह ॥ नंदजेति॥ ११९ ॥ १२० ॥ १२१ ॥ १२२ ॥ फलमाह ॥ तुर्य्यमि ति ॥ पञ्चमंन्यासमाह ॥ अथेति ॥ १२३ ॥ १२४ ॥

॥ १२५ ॥ १२६ ॥ फलमाह ॥ कृतेस्मिन्निति ॥ १२७ ॥ षष्ठमाह ॥ मध्यमिति ॥ अष्टादशभुजामहालक्ष्मीर्ममध्यंपा
त्वित्यादिप्रयोगः ॥ १२८ ॥ १२९ ॥ १३० ॥ सप्तमन्यासमाह ॥ मूलेति ॥ ॐऐंनमःब्रह्मरंध्रेइत्यादिप्रयोगः ॥ १३१ ॥

विशुद्धेब्रह्मरंध्रांतंपातुरुद्रस्त्रिलोचनः ॥ हंसःपातुपदद्वंद्वंवैनतेयःकरद्वयम् ॥ १२५ ॥ चक्षुषीवृषभःपातुस
र्वांगानिगजाननः ॥ परापरौदेहभागौपात्वानंदमयोहरिः ॥ १२६ ॥ कृतेऽस्मिन्पंचमेन्यासेसर्वान्कामा
न्वाप्नुयात् ॥ षष्ठंन्यासंततःकुर्य्यान्महालक्ष्म्यादिसंयुतम् ॥ १२७ ॥ मध्यंपातुमहालक्ष्मीरष्टादशभुजा
न्विता ॥ ऊर्द्ध्वंसरस्वतीपातुभुजैरष्टाभिरूर्जिता ॥ १२८ ॥ अधःपातुमहाकालीदशबाहुसमन्विता ॥
सिंहोहस्तद्वयंपातुपरंहंसोक्षियुग्मकम् ॥ १२९ ॥ महिषंदिव्यमारूढोयमःपातुपदद्वयम् ॥ महेशश्चंडिका
युक्तःसर्वांगानिममावतु ॥ १३० ॥ षष्ठेस्मिन्विहितेन्यासेसद्गतिंप्राप्नुयान्नरः ॥ मूलाक्षरन्यासरूपंन्यासं
कुर्वीतसप्तमम् ॥ १३१ ॥ ब्रह्मरंध्रेनेत्रयुग्मेश्रुत्योर्नासिकयोर्मुखे ॥ पायौमूलमनोर्वर्णांस्ताराद्यान्नमसान्वि
तान् ॥ १३२ ॥ विन्यसेत्सप्तमेन्यासेकृतेरोगक्षयोभवेत् ॥ पायुतोब्रह्मरंध्रांतंपुनस्तानेवविन्यसेत् ॥ १३३ ॥
कृतेस्मिन्नष्टमेन्यासेसर्वंदुःखंविनश्यति ॥ कुर्वीतनवमंन्यासंमंत्रव्याप्तिस्वरूपकम् ॥ १३४ ॥

॥ १३२ ॥ एतन्न्यासफलंरोगक्षयः ॥ पायुमारभ्यब्रह्मरंध्रांतंवर्णन्यासोष्टमः ॥ १३३ ॥ एतत्फलंदुःखनाशः ॥ १३४ ॥

नवममाह ॥ मस्तकेति ॥ १३५ ॥ शिरसः पादांतमष्टवारं मूलं विन्यसेत् ॥ एवं पादाच्छिरोंतमष्टशः एवं पुरो दक्षिण भागे पृष्ठे वामभागेप्येवं प्रत्यहमष्टशो मूलं न्यसेत् ॥ एतत्फलं देवत्वप्राप्तिः ॥ १३६ ॥ दशममाह ॥ मूलेति ॥ मूलं हृद

मस्तकाच्चरणं यावच्चरणान्मस्तकावधि ॥ पुरो दक्षे पृष्ठदेशे वामभागेष्टशो न्यसेत् ॥ १३५ ॥ मूलमंत्रकृतो न्यासो नवमो देवतात्मिकृत् ॥ ततः कुर्वीत दशमं षडंगन्यासमुत्तमम् ॥ १३६ ॥ मूलमंत्रं जातियुक्तं हृदयादिषु विन्यसेत् ॥ कृतेस्मिन्दशमे न्यासे त्रैलोक्यं वशगं भवेत् ॥ १३७ ॥ दशन्यासोक्तफलदं कुर्य्यादेकादशं ततः ॥ खड्गिनी शूलिनीत्यादि पठित्वा श्लोकपंचकम् ॥ १३८ ॥ आद्यं कृष्णतरं बीजं ध्यात्वा सर्वांगके न्यसेत् ॥ शूलेन पाहि नो देवीत्यादि श्लोकचतुष्टयम् ॥ १३९ ॥ पठित्वा सूर्य्यसदृशं द्वितीयं सर्वतो न्यसेत् ॥ सर्वस्वरूपे सर्वेश इत्यादि श्लोकपंचकम् १४० पठित्वा स्फटिकाभासं तृतीयं स्वतनौ न्यसेत् ॥ ततः षडंगं कुर्वीत विभक्तैर्मूलवर्णकैः ॥ १४१ ॥ एकेनैकेन चैकेन चतुर्भिर्युगलेन च ॥ समस्तेन च मंत्रेण कुर्य्यादंगानि षट् सुधीः ॥ १४२ ॥ शिखायां नेत्रयोः श्रुत्योर्नसोर्वक्त्रे गुदे न्यसेत् ॥ मंत्रवर्णान्समस्तेन व्यापकं त्वष्टशश्चरेत् ॥ १४३ ॥

यायनमः इत्यादिकं जातियुक्तं षडंगेषु न्यसेत् ॥ एतत्फलं जगद्वश्यत्वम् ॥ १३७ ॥ एकादशमाह ॥ खड्गिनीति ॥ १३८ ॥ १३९ ॥ १४० ॥ १४१ ॥ षडंगमाह ॥ एकेनैकेनेति ॥ १४२ ॥ वर्णन्यासमाह ॥ शिखायामिति ॥ नेत्रश्रुतिनासामुद्रौ अष्टशोऽष्टवारम् ॥ १४३ ॥

महाकालीध्यानमाह ॥ खड्गमिति ॥ खड्गचक्रबाणशिरःशंखान्दक्षेषुदधतीम् ॥ इतराणिवामेषु ॥ आस्यपाद दशकांदशवक्त्रां दशपादांदशभुजांत्रिंशन्नेत्रामित्यर्थः ॥हरौसुप्तेकमलासनोब्रह्मामधुकैटभौहंतुंयामस्तौत् तुष्टाव ॥ हरेर्निद्रावैष्णवीमायेत्यर्थः ॥ तदुक्तम् ॥ ययात्वयाजगत्स्रष्टाजगत्पात्यत्तियोजगत् ॥ सोपिनिद्रावशंनीतइति ॥ ॥ १४४ ॥ महालक्ष्मीध्यानमाह ॥ अक्षस्रगिति ॥ कुंडिकांकमंडलुम् ॥ जलजंशंखम् ॥ अक्षमालापद्मबाण

खड्गंचक्रगदेषुचापपरिघाञ्छूलंभुशुंडीशिरः शंखंसंदधतींकरैस्त्रिनयनांसर्वांगभूषावृताम्॥यामस्तौ
त्स्वपितेहरौकमलजोहंतुंमधुंकैटभंनीलाश्मद्युतिमास्यपाददशकांसेवेमहाकालिकाम्॥ १४४ ॥अक्षस्र
क्परशूंगदेषुकुलिशंपद्मंधनुःकुंडिकांदंडंशक्तिमसिंचचर्मजलजंघंटांसुराभाजनम्॥शूलपाशसुदर्शनेच
दधतींहस्तैःप्रवालप्रभांसेवेसैरिभमर्दिनीमिहमहालक्ष्मींसरोजस्थिताम्॥ १४५॥ घंटाशूलहलानिशं
खमुसलेचक्रंधनुःसायकंहस्ताब्जैर्दधतींघनांतविलसच्छीतांशुतुल्यप्रभाम् ॥ गौरीदेहसमुद्भवांत्रिजग
तामाधारभूतांमहापूर्वामत्रसरस्वतीमनुभजेशुंभादिदैत्यार्दिनीम् ॥ १४६ ॥

खड्गवज्रगदाचक्रकमंडलुशंखादक्षेषु ॥ अन्येवामेषु ॥ सैरिभमर्दिनींमहिषासुरघातिनीं सरोजोद्भवांदेवदेहानि र्गततेजःसमुद्भवाम् ॥ १४५ ॥ महासरस्वतीध्यानमाह ॥ घंटेति ॥ शंखमुसलचक्रबाणादक्षेषु ॥ घंटाशूलहलधनूंषिवामेषु ॥ घनांतेति ॥ शरच्चंद्रसमप्रभाम् ॥ १४६ ॥

हेमरेतसिवह्नौ ॥ १४७ ॥ १३५ ॥
एवं कृत्वा मनुं ... ॥ १४८ ॥ १४९ ॥ १५० ॥ १५१ ॥ सबिंद्विति॥ ॐनंनंदजायैनमइत्यादिरूपावक्ष्यमाणाः



...ध्यात्वाजपेल्लक्षचतुष्कंतद्दशांशतः ॥पायसान्नेनजुहुयात्पूजितेहेमरेतसि ॥१४७॥ जयादिशक्तिभिर्युक्तेपीठेदेवींयजेत्ततः ॥तत्त्वपत्रावृतत्र्यस्रषट्कोणाष्टदलान्विते ॥ १४८ ॥त्रिकोणमध्येसंपूज्य ध्यात्वातांमूलमंत्रतः॥पूर्वकोणेविधातारंसुरयासहपूजयेत्॥१४९॥विष्णुंश्रियाचनैर्ऋत्येवायव्येतूमयाशिवम्॥उदग्दक्षिणयोःसिंहंमहिषंचक्रमाद्यजेत्॥१५०॥षट्सुकोणेषुपूर्वादिनंदजांरक्तदंतिकाम्। शाकंभरींतथादुर्गांभीमांचभ्रामरींयजेत्॥१५१॥सबिंदुनादाद्यर्णाद्यास्ताराद्याश्चनमोंतिकाः ॥ नंदजाद्यायजेच्छक्तीर्वक्ष्यमाणाअपीदृशीः ॥ १५२ ॥ अष्टपत्रेषुब्रह्माणीपूज्यामाहेश्वरीपरा॥कौमारीवैष्णवीचाथवाराहीनारसिंह्यपि॥१५३॥पश्चादैन्द्रीचचामुंडातथातत्त्वदलेष्विमाः ॥ विष्णुमायाचेतनाचबुद्धिर्निद्राक्षुधाततः ॥ १५४ ॥ छायाशक्तिःपरातृष्णाक्षांतिर्जातिश्चलज्जया ॥ शांतिःश्रद्धाकांतिलक्ष्म्यौधृतिर्वृत्तिःश्रुतिःस्मृतिः ॥ १५५ ॥



अपीदृशीःसबिंदुनादाद्यर्णाद्यास्ताराद्यानमोंतायजेत् ॥ ॐब्रह्माण्यैनमइत्यादि० ॥ १५२ ॥ १५३ ॥ तत्त्वदलेषुचतुर्विंशतिपत्रेषु विष्णुमायाद्याः ॥ १५४ ॥ १५५ ॥

॥ १५६ ॥ १५७ ॥ १५८॥ अग्नितिथिंप्रतिपदम् ॥ १५९ ॥ १६० ॥ चंडीस्तवस्यमार्कंडेयपुराणोक्तस्यऋष्यादीनाह

तुष्टिः पुष्टिर्दयामाताभ्रांतिःशक्तिरितिक्रमात् ॥बहिर्भूगृहकोणेषुगणेशःक्षेत्रपालकः ॥ १५६॥ बटुक श्चापियोगिन्यःपूज्याइंद्रादिकाअपि ॥एवंसिद्धमनौमंत्रीभवेत्सौभाग्यभाजनम् ॥१५७॥ मार्कण्डे यपुराणोक्तंनित्यंचंडीस्तवंपठन्॥पुटितंमूलमंत्रेणजपन्प्राप्नोतिवांछितम् ॥ १५८ ॥ आश्विनस्यासि तेपक्षेआरभ्याग्नितिथिंसुधीः॥अष्टम्यंतंजपेल्लक्षंदशांशंहोममाचरेत् ॥१५९॥ प्रत्यहंपूजयेद्देवींपठे त्सप्तशतीमपि ॥ विप्रानाराध्यमंत्रीस्वमिष्टार्थंलभतेऽचिरात् ॥१६०॥ सप्तशत्याश्चरित्रेतुप्रथमेब्र ह्ममुनि[1]ः॥ छंदोगायत्रमुदितंमहाकालीतुदेवता१६१॥वाग्बीजंपावकस्तत्त्वंधर्मार्थेविनियोजनम्॥ मध्यमेतुचरित्रेऽत्रमुनिर्विष्णु[2]रुदाहृता॥१६२॥ उष्णिक्छंदोमहालक्ष्मीर्देवताबीजमद्रिजा ॥ वायु स्तत्त्वंधनप्राप्त्यैविनियोगउदाहृतः ॥ १६३ ॥

सप्तशत्याइति ॥ प्रथमंचरित्रंमधुकैटभवधः ॥ १६१ ॥ मध्यमं महिषासुरवधः ॥ १६२ ॥ अद्रिजाह्रीं ॥ १६३ ॥

१ अस्यश्रीप्रथमचरित्रस्यब्रह्माऋषिः गायत्रीछंदः महाकालीदेवताऐंबीजमाग्निस्तत्त्वंधर्मार्थेजपेवि० ।

२ अस्यश्रीमध्यमचरित्रस्यविष्णुऋषिःउष्णिक्छंदःमहालक्ष्मीर्देवताह्रींबीजंवायुस्तत्त्वंधनप्राप्त्यैजपेवि० ।

उत्तरंशुंभनिशुंभवधः ॥ १६४ ॥ कामःक्लीं ॥ १६५ ॥ सार्थस्मृतिअर्थस्मरणपूर्वकम् ॥ १६६ ॥ १६७ ॥ यशश्र्यैः

उत्तरस्यचरित्रस्यऋषिःशंकरईरितः॥ त्रिष्टुप्छन्दोदेवतास्यप्रोक्तामहासरस्वती॥१६४॥ कामोबीजंरविस्तत्त्वंकामाप्त्यैविनियोजनम् ॥एवंसंस्मृत्यऋष्यादीन्ध्यात्वापूर्वोक्तमार्गतः ॥१६५॥ सार्थस्मृतिपठेच्चंडीस्तवंस्पष्टपदाक्षरम् ॥ समाप्तौतुमहालक्ष्मींध्यात्वाकृत्वाषडंगकम् ॥१६६॥जपेदष्टशतंमूलंदेवतायैनिवेदयेत् ॥एवंयःकुरुतेस्तोत्रंनावसीदतिजातुचित् ॥१६७॥ चंडिकांप्रभजन्मर्त्योधनैर्धान्यैर्यशश्र्यैः ॥पुत्रैःपौत्रैरुतारोग्यैर्युक्तोजीवेद्बहूःसमाः ॥ १६८ ॥ अथशतचंडीविधानम् ॥ शतचंडीविधानंतुप्रवक्ष्येप्रीतयेनृणाम्॥नृपोपद्रवआपन्नेदुर्भिक्षेभूमिकंपने ॥ १६९ ॥ अतिवृष्ट्यामनावृष्टौपरचक्रभयेक्षये ॥सर्वेविघ्नाविनश्यंतिशतचंडीविधौकृते ॥१७० ॥ रोगाणांवैरिणांनाशोधनपुत्रसमृद्धयः ॥शंकरस्यभवान्यावाप्रासादान्निकटेशुभम् ॥ १७१ ॥ मंडपद्वारवद्यावत्कुर्यात्सध्वजतोरणम् ॥ तत्रकुंडंप्रकुर्वीतप्रतीच्यांमध्यतोपिवा ॥१७२ ॥

कीर्तिसमूहैः ॥ समावर्षाणि॥१६८॥शतचंडीविधानमाह॥शतेति॥तत्रनिमित्तान्याह॥नृपोपद्रवइति १६९-१७२

१ अस्यश्रीमदुत्तरचरित्रस्यरुद्रऋषिस्त्रिष्टुप्छंदःमहासरस्वतीदेवताक्लींबीजंसूर्यस्तत्त्वंकामाप्त्यैजपेवि० ।

अथप्रयोगः—शास्त्रोक्तविधिनाशंकरालयेभवान्यालयेवा मण्डपंवेदिमध्येनिर्माय प्रतीच्यांकुंडंमध्येवाकृत्वाकृतानि त्याक्रियोमुकककामःशतचंडीविधानमहंकरिष्यइतिसंकल्पंविधायमातृस्थापनंनांदीश्राद्धंविधायस्वस्तिवाचनंकृत्वा उक्तलक्षणान्दशविप्रान्मधुपर्कवस्त्रहेमदानादिनावृणुयात्॥तेचयजमानदत्तासनेषुदत्तमालाभिःसमाहिताःसुमनसो भगवतींस्मरंतःसप्तशतीमूलमंत्रेणवेद्यांकुंभंस्थापयित्वातत्रदुर्गामावाह्यषोडशोपचारैःसंपूज्यतदग्रेप्रत्येकंदशकृत्वाः सप्तशतीमयुतंचनवार्णंजपेयुः॥हविष्यभोजनब्रह्मचर्यभूशयनास्पृश्यास्पर्शादिनियमांश्चचरेयुः॥यजमानश्चद्विवर्षा

स्नात्वानित्यकृतिंवृणुयाद्दशवाडवान्। जितेंद्रियान्सदाचारान्कुलीनान्सत्यवादिनः ॥ १७३ ॥
व्युत्पन्नांश्चंडिकापाठरतांल्लज्जादयावतः ॥ मधुपर्कविधानेनवस्त्रस्वर्णादिदानतः॥१७४॥जपार्थमा
सनंमालांदद्यात्तेभ्योपिभोजनम्॥ तेहविष्यान्नमश्नंतोमंत्रार्थगतमानसाः ॥१७५॥ भूमौशयानाः
प्रत्येकंजपेयुश्चंडिकास्तवम्॥ मार्कंडेयपुराणोक्तंदशकृत्वःसुचेतसः ॥ १७६ ॥

द्याउक्तलक्षणाअधिकांगीमित्यादिदुर्लक्षणरहिताः कुमारीत्रिमूर्तिकल्याणादिनाम्नीर्दशकन्या भोजनवस्त्रहेमदा नादिनामंत्राक्षरमयीमित्यादिमन्त्रेणावाह्यजगत्पूज्येत्यादिस्वस्वमन्त्रैःपूजयेत्॥एवंचत्वारिदिनानिजपंकुमारीपूजां चसमाप्यपंचमेह्निकुंडेआगमोक्तपूर्वविधिनावह्निंसंस्थाप्यपायसान्नादिभिरुक्तैर्द्रव्यैर्जुहुयुः ॥ सप्तशत्याःप्रतिश्लोकं दशवारंनवार्णेनायुतंचहोमसंख्या॥ एकैकोद्विजःसकृत् सप्तशतीप्रतिश्लोकंसहस्रंमूलेनचजुहुयादित्यर्थः ॥ १७३ ॥ ॥ १७४ ॥ १७५ ॥ १७६ ॥

॥ १७७ ॥ १७८ ॥ १७९ ॥ १८० ॥ १८१ ॥ १८२ ॥ १८३ ॥ १८४ ॥ १८५ ॥ १८६ ॥ १८७ ॥ १८८ ॥

नवार्णंचंडिकामंत्रंजपेयुश्चायुतंपृथक् ॥ यजमानः पूजयेच्चकन्यानांदशकंशुभम्॥१७७॥द्विवर्षाद्या दशाब्दांताःकुमारीःपरिपूजयेत् ॥नाधिकांगींनहीनांगींकुष्ठिनींचव्रणांकिताम् ॥ १७८ ॥ अंधांकाणांकेकरांचकुरूपांरोमयुक्ततनुम्॥ दासीजातांरोगयुक्तांदुष्टांकन्यांनपूजयेत्॥ १७९ ॥ विप्रासर्वेष्टसंसिद्ध्यैयशसेक्षत्त्रियोद्भवाम् ॥ वैश्यानांधनलाभायपुत्राप्त्यैशूद्रजांयजेत् ॥ १८० ॥ द्विवर्षासाकुमार्युक्तात्रिमूर्तिर्हायनत्रिका॥चतुरब्दातुकल्याणीपंचवर्षातुरोहिणी ॥१८१॥ षडब्दाकालिकाप्रोक्ताचंडिकासप्तहायनी॥ अष्टवर्षाशांभवीस्याद्दुर्गाचनवहायनी॥१८२॥सुभद्रादशवर्षोक्तास्तामंत्रैःपरिपूजयेत् ॥एकाब्दायाःप्रीत्यभावोरुद्राब्दास्तुविवर्जिताः॥ १८३ ॥ तासामावाहनेमंत्राःप्रोच्यंतेशंकरोदिताः॥मंत्राक्षरमयींलक्ष्मींमातॄणांरूपधारिणीम्॥१८४॥नवदुर्गात्मिकांसाक्षात्कन्यामावाहयाम्यहम् ॥ कुमारिकादिकन्यानांपूजामंत्रान्ब्रुवेऽधुना ॥ १८५ ॥ जगत्पूज्येजगद्वंद्येसर्वदेवस्वरूपिणि ॥ पूजांगृहाणकौमारीजगन्मातर्नमोस्तुते ॥१८६॥ त्रिपुरांत्रिपुराधारांत्रिवर्गज्ञानरूपिणीम्॥ त्रैलोक्यवंदितांदेवींत्रिमूर्तिंपूजयाम्यहम् ॥१८७॥ कालात्मिकांकलातीतांकारुण्यहृदयांशिवाम् ॥ कल्याणजननींदेवींकल्याणींपूजयाम्यहम् ॥ १८८ ॥

॥ १८९ ॥ १९० ॥ १९१ ॥ १९२ ॥ १९३ ॥ १९४ ॥ १९५ ॥ १९६ ॥ १९७ ॥ १९८ ॥ १९९ ॥ २०० ॥

अणिमादिगुणाधारामकाराद्यक्षरात्मिकाम् ॥ अनंतशक्तिकांलक्ष्मींरोहिणींपूजयाम्यहम् ॥१८९॥
कामचारांशुभांकांतांकालचक्रस्वरूपिणीम् ॥ कामदांकरुणोदारांकालिकांपूजयाम्यहम् ॥१९० ॥
चंडवीरांचंडमायांचंडमुंडप्रभंजनीम् ॥ पूजयामिमहादेवींचंडिकांचंडविक्रमाम् ॥ १९१ ॥ सदानं
दकरींशांतांसर्वदेवनमस्कृताम् ॥ सर्वभूतात्मिकांदेवींशांभवींपूजयाम्यहम्॥१९२॥ दुर्गमेदुस्तरेका
र्ये भवार्णवविनाशिनि॥पूजयामिसदाभक्त्यादुर्गांदुर्गार्तिनाशिनीम्॥१९३॥सुंदरींस्वर्णवर्णाभांसु
खसौभाग्यदायिनीम्॥सुभद्रजननींदेवींसुभद्रांपूजयाम्यहम्॥१९४॥ एतैर्मंत्रैःपुराणोक्तैःस्नातांकन्यां
प्रपूजयेत्॥ गंधैःपुष्पैर्भक्ष्यभोज्यैर्वस्त्रैराभरणैरपि ॥१९५ ॥ वेद्यांविरचितेरम्येसर्वतोभद्रमंडले॥घटं
संस्थाप्यविधिवत्तत्रावाह्यार्चयेच्छिवाम् ॥१९६ ॥ तदग्रेकन्यकाश्चापिपूजयेद्ब्राह्मणानपि॥ उपचारै
स्तुविविधैःपूर्वोक्तावरणान्यपि॥१९७॥एवंचतुर्दिनंकृत्वापंचमेहोममाचरेत् ॥पायसान्नैस्त्रिमध्वक्तै
र्द्राक्षारंभाफलैरपि॥१९८॥मातुलिंगैरिक्षुखंडैर्नारिकेलैःपुरैस्तिलैः॥जातीफलैराम्रफलैरन्यैर्मधुरवस्तु
भिः॥१९९॥सप्तशत्यादशावृत्याप्रतिश्लोकहुतंचरेत्॥अयुतंचनवार्णेनस्थापिताग्नौविधानतः२००

ततः आवरणदेवतानांनाममंत्रैस्तारादिस्वाहांतैरेकैकामाहुतिंहुत्वापूर्णाहुतिंकृत्वादेवींकुंभस्थांसंपूज्यबलिदानंवि
धायऋत्विग्भ्यःप्रत्येकंनिष्कमशक्तौसुवर्णमितंसुवर्णंदद्यात् ॥ २०१ ॥ २०२ ॥ ततोविप्राःकलशोदकेनयजमानंनि
गमपुराणोक्तमंत्रैरभिषिंचेयुराशिषश्चदद्युः ॥ ततःशतंविप्रान्नानाविधान्नैर्भोजयेत् ॥ तेभ्योपि यथाशक्तिदक्षिणांद

कृत्वावरणदेवानांहोमंतन्नाममंत्रतः ॥ कृत्वापूर्णाहुतिंसम्यग्देवमग्निंविसर्ज्यच ॥ २०१॥ अभिषिंचे
च्चयष्टारंविप्रौघःकलशोदकैः ॥ निष्कंसुवर्णमथवाप्रत्येकंदक्षिणांदिशेत् ॥२०२॥ भोजयेच्चशतंवि
प्रान्भक्ष्यभोज्यैःपृथग्विधैः ॥ तेभ्योपिदक्षिणांदत्वागृह्णीयादाशिषस्ततः ॥२०३ ॥ एवंकृतेजगद्व
श्यंसर्वेनश्यंत्युपद्रवाः ॥ राज्यंधनंयशःपुत्रानिष्टमन्यल्लभेतसः॥२०४॥ एतद्दशगुणंकुर्य्याच्चंडीसा
हस्रजंविधिम् ॥ विद्यामतःसदाचारान्ब्राह्मणान्वृणुयाच्छतम्॥२०५॥ प्रत्येकंचंडिकापाठान्विदध्यु
स्तेदिशामितान् ॥ अयुतंप्रजपेयुस्तेप्रत्येकंनववर्णकम् ॥ २०६ ॥

द्यात् ॥ इतिशतचंडीविधिः ॥ २०३ ॥ शतचंडीविधेःफलमाह ॥ एवंकृतइति ॥ २०४ ॥ सहस्रचंडीविधानमाह
एतद्दशगुणमिति ॥ शतचंडीविधानदशगुणंसहस्रचंडीविधानमित्यर्थः ॥ शतंविप्रवरणम् ॥ २०५ ॥तेशतंविप्राःप्र
त्येकंदशदशसप्तशतीपाठान्कुर्युः—अयुतमयुतंनवार्णजपंचकुर्युः ॥ २०६ ॥

शतकन्याश्चभोज्याः ॥ एवंदशादिनेषुसंपाद्यएकादशेऽह्निसप्तशतीशतावृत्त्याप्रतिश्लोकंतल्लक्षसंख्यंनवार्णेनचहोमः ॥ २०७ ॥ २०८ ॥ ऋत्विग्भ्योपिदशदशनिष्कमितंसुवर्णंदक्षिणांप्रत्येकंदद्यात्॥ शेषंपूर्वोक्तवत् ॥इति सहस्रचण्डीविधिः ॥ २०९ ॥ एतत्फलमाह ॥एवंसहस्रसंख्याकइति ॥ एतदयुतचंडीविधानलक्षचंडीविधानयोरुपलक्षणम्॥

पूर्वोक्ताःकन्यकाःपूज्याःपूर्वमंत्रैःशतंशुभाः॥एवंदशाहंसंपाद्यहोमंकुर्य्युःप्रयत्नतः ॥ २०७ ॥ सप्तशत्याःशतावृत्त्याप्रतिश्लोकंविधानतः ॥लक्षसंख्यंनवार्णेनपूर्वोक्तैर्द्रव्यसंचयैः ॥ २०८ ॥ होतृभ्योदक्षिणांदत्त्वापूर्वोक्तान्भोजयेद्द्विजान्॥सहस्रसंमितान्साधून्देव्याराधनतत्परान् ॥ २०९ ॥ एवंसहस्रसंख्याकेकृतेचंडीविधौनृणाम्॥सिद्धत्यभीप्सितंसर्वंदुःखौघश्चविनश्यति ॥ २१० ॥ मारीदुर्भिक्षरोगाद्यानश्यंतिव्यसनोच्चयाः॥नेमंविधिंवदेद्दुष्टेखलेचौरेगुरुद्रुहि ॥ २११ ॥ साधौजितेंद्रियेदांतेवदेद्विधिमिमंपरम् ॥ एवंसाचंडिकातुष्टावक्तृश्रोतृंश्चरक्षति ॥ २१२ ॥ इतिमंत्रमहोदधौकालरात्रिचंडीमंत्रशतचण्ड्यादिनिरूपणंनामाष्टादशस्तरंगः ॥ १८ ॥

सहस्रचंडीदशगुणोऽयुतचंडीविधिः ॥ सदशगुणोलक्षचंडीविधिः ॥ जपेहोमेदक्षिणायां कन्यासुविप्रभोजनेचदशगुणत्वम् ॥ २१० ॥ २११ ॥ २१२ ॥ इतिमन्त्रमहोदधिव्याख्यायांनौकायामष्टादशस्तरंगः॥ १८ ॥

कुक्कुटमंत्रंवक्तुंप्रतिजानीते ॥ चरणेति ॥ १ ॥ मन्त्रमुद्धरति ॥ तीक्ष्णइति ॥ तीक्ष्णःयकारः अर्घीशेंदुयुक्तः ऊबिंदुयुतः ॥ तेनयूम् ॥ विधिःकः सद्योजातयुतओयुतः को ॥ पिनाकीलः सूक्ष्मयुक्इयुतःलि एतद्वर्णत्रयंपुनर्वारद्वयम् ॥ यूंकोलियूंकोलीति ॥ २ ॥ उत्कारी वकारः दीर्घआ ॥ तेनसंयुक्ता वा ॥ मायाबीजंह्रीं ॥ पूर्वोदितंतथावारद्वयं

चरणायुधमंत्रस्यविधानमभिधीयते॥मंत्रीयद्विधिनाकृत्वासाधयेत्स्वमनोरथान् ॥ १ ॥ तीक्ष्णोर्घीशेंदुसंयुक्तःसद्योजातयुतोविधिः ॥पिनाकीसूक्ष्मयुग्वर्णत्रयमेतत्पुनःपठेत् ॥ २॥ उत्कारीदीर्घसंयुक्तामायाबीजंततोवदेत् ॥ द्विरभ्यस्तंपुनर्वर्णत्रयंपूर्वोदितंपुनः ॥३॥ कूर्मःसकर्णोवोदीर्घोमंत्रोयंसमुदीरितः ॥ पाशाद्योंकुशबीजांतोष्टादशाक्षरसंयुतः ॥४॥महारुद्रोमुनिश्चास्यच्छंदोतिजगतीरितम् ॥ मायाबीजंसृणिःशक्तिर्देवताचरणायुधः ॥५॥ वेदरामाक्षिरामाग्निवह्निवर्णैःषडंगकम्॥कृत्वावर्णान्न्यसेन्मूर्ध्निभालेभ्रुवोर्द्वयोः ॥ ६ ॥

द्विरभ्यस्तंपुनर्वदेदित्यन्वयः ॥ ३ ॥ कूर्मःचः सकर्णउयुतःचु ॥ दीर्घो वोवा ॥पाशाद्यः आंआद्यः ॥ अंकुशबीजांतः क्रोंअंतः ॥ यथा–आंयूंकोलियूंकोलिवाह्रींयूंकोलियूंकोलिचुवाक्रोंइति ॥ ४ ॥ ५ ॥ षडंगमाह ॥ वेदेति॥आंयूंकोलिहृदयायनमइत्यादि० ॥ वर्णन्यासमाह ॥ मूर्ध्नीति ॥ भ्रुवोराक्षिश्रुतिनासासुचद्वंद्वे ॥ अन्यत्रैकैकम् ॥ ६ ॥

अस्यचरणायुधमंत्रस्यमहारुद्रऋषिः अतिजगतीछंदः ह्रींबीजंक्रोंशक्तिःचरणायुधोदेवताममाभीष्टसिद्ध्यर्थे० ।

॥ ७ ॥ ध्यानमाह ॥ सर्वेति ॥ सर्वालंकारैर्दीप्तः कंठश्चरणौ च यस्य निजान्सेवकान्पायाद्रक्षतु ॥ ८ ॥ ९ ॥ शैवपीठे

अक्ष्णोः श्रुत्योर्नसोर्वक्त्रे कण्ठे कुक्षौ च नाभितः ॥ लिंगे गुदे जानुपादे न्यस्य एवं संस्मरेत्प्रभुम् ॥ ७ ॥ सर्वालं
कृतिदीप्तकंठचरणो हेमाभदेहद्युतिः पक्षद्वंद्वविधूनने ऽतिकुशलः सर्वामराभ्यर्चितः ॥ गौरीहस्तसरोजगो
रुणशिखः सर्वार्थसिद्धिप्रदो रक्तं चंचुपुटं दधच्चलपदः पायान्निजान्कुक्कुटान् ॥ ८ ॥ एवं ध्यात्वा समासीनः
शैलाग्रे सरितस्तटे ॥ वृषशून्ये पश्चिमस्थे यद्वा शंकरसद्मनि ॥ ९ ॥ लक्षं जपेद्दशांशेन तिलैर्हवनमाचरेत् ॥
शैवे पीठे यजेत्ताम्रचूडं गौरीकरस्थितम् ॥ १० ॥ आदावंगानि संपूज्य जलेशप्रमुखं यजेद्दिशान् ॥ शंभुं गौरीं ग
णपतिं कार्तिकेयं ततः परम् ॥ ११ ॥ मंदारं पारिजातं च महाकालं च बर्हिगम् ॥ दलाग्रे सुराधीशप्रमुखा
नायुधान्वितान् ॥ १२ ॥ एवं कृते प्रयोगार्हो जायते मन्त्रनायकः ॥ प्रयोगादौ प्रजप्यो सावयुतं द्विशताधि
कम् ॥ १३ ॥ दध्नाक्षीरेण मधुना चंद्रेण सितयान्वितैः ॥ दद्याद्बलिं सतांबूलैः पायसैर्बलिमंत्रतः ॥ १४ ॥
भोजनादौ भोजनांते लक्ष्मीसंप्राप्तये सुधीः ॥ बलिमेतत्प्रदत्त्वाथ कुबेरो धननाथताम् ॥ १५ ॥ शांतौ
पुष्टावपि बलिमेतमेव प्रदापयेत् ॥ उक्तस्य वक्ष्यमाणस्य बलेर्मंत्रोऽथ कथ्यते ॥ १६ ॥

वामादिशक्तियुते ॥ १० ॥ ११ ॥ सुराधीशप्रमुखानिंद्रादीन् ॥ १२ ॥ १३ ॥ चंद्रेण कर्पूरेण ॥ १४ ॥ १५ ॥ १६ ॥

बलियंत्रमाह ॥ वामेति ॥ वामकर्णेंदुयुक्छ्रः ऊबिंदुयुतः यः यूं ॥ चरमः क्षः सबिंदुः क्षं ॥ अद्रिजाह्रीं ॥ १७ ॥
वायुः यः सचंद्रः सबिंदुः यं ॥ ॥ कर्णेंदुयुक्चक्री ऊबिंदुयुतः कः कुं ॥ गिरिनंदिनी ह्रीं॥ १८॥ स्वरूपमन्यत्॥ यथा-यूंक्षंह्रीं

वामकर्णेन्दुयुक्छूरः सबिंदुश्चरमेद्रिजा ॥ कुक्कुटद्वितयंपश्चादेह्येहीमंबलिंवदेत् ॥१७॥ गृह्णयुग्मंगृह्णा
पयसर्वान्कामांश्चदेहिच ॥ वायुःसचंद्रःकर्णेंदुयुक्चक्रीगिरिनंदिनी ॥ १८ ॥ यूंनमःकुक्कुटायेति
मंत्रोव्योमयुगाक्षरः॥ बलिंदद्यादनेनोक्तंवक्ष्यमाणंचसाधकः॥ १९ ॥ लाजैस्त्रिमधुरोपेतैर्दद्यान्मंत्री
बलिंनिशि॥वशयेदखिलंविश्वंत्रिदिनंवौदनैर्नृपम् ॥ २० ॥ दुग्धमिश्रितगोधूमपिष्टैःकुर्य्यादपूप
कम् ॥ आज्यकर्पूरयुक्तेनतेनदद्याद्बलिंनिशि ॥ २१ ॥ त्र्यहमेवंबलौदत्तेसुखीस्याद्वशयेज्जगत् ॥
करवीरैर्बिल्वपत्रैःपीतपुष्पैःसुगंधिभिः ॥ २२ ॥ सहस्रसंख्यैः प्रत्येकंपूजयित्वाजपेन्मनुम् ॥ सहस्रं
निशिसप्ताहंयमुद्दिश्यजनंसुधीः ॥ २३ ॥

कुक्कुट २ एह्येहिइमंबलिंगृह्ण २ गृह्णापयसर्वान्कामान्देहियंकुंह्रींयूंनमःकुक्कुटायेतिव्योमयुगाक्षरश्चत्वारिंशद्वर्णः॥
अनेनमंत्रेणपूर्वोक्तंबलिंवक्ष्यमाणंचदद्यात् ॥१९ ॥ओदनैस्त्रिदिनंबलिंदत्त्वानृपंवशयेत् ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥

॥ २४ ॥ २५ ॥ २६ ॥ वसुघस्रांतमष्टदिनपर्यंतम् ॥ अधियामिनिरात्रौ ॥ २७ ॥ २८ ॥ २९ ॥ प्रयोगांतरमाह ॥ कर्मारेति ॥ लोहकारकगृहाद्वह्निमानीय ॥ लोहपात्रेसंस्थाप्य करवीरकाष्ठैःसंदीप्य तत्रसर्षपतैलाक्तानिविषचूर्णं

सयातिदासतांतस्यमनोवचनकर्मभिः॥छागलावकयोर्मांसैःसप्ताहंवितरेद्बलिम्॥ २४ ॥ सहस्रप्रत्य हंजस्वावशयेदखिलंजगत्॥नृपोत्थितेसपत्नोत्थेभयेजातेचसंकटे ॥ २५ ॥ आपद्यपितथान्यस्यां बलिंदद्यात्सुखाप्तये॥गोपनीयोविधिरयंबलेःकथ्योनदुर्मतौ ॥ २६ ॥ मुक्तकेशउदावक्त्रोजपेद्मानु सहस्रकम्॥ प्रत्यहंवसुघस्रांतंयमुद्दिश्याधियामिनि ॥ २७ ॥ तमाकर्षतिदूरस्थमपिकिंनिकटस्थि तम् ॥ जातीफलैलाःसंचूर्ण्यकर्पूरमध्यतःक्षिपेत् ॥ २८ ॥ अभिमंत्र्यार्कसाहस्रंसिंदूररजसायुतम्॥ उष्णीकृत्याग्नितापेनक्लेदयेद्गांगपाथसा ॥ २९ ॥ स्थापयेदायसेपात्रेतत्स्पृष्टःस्तंभितोभवेत्॥कर्मा रसद्मनोवह्निमानीयायसभाजने ॥३० ॥ स्थापयित्वैधयेत्काष्ठैःकरवीरसमुद्भवैः ॥ जुहुयात्तत्रधत्तूर बीजानिशतसंख्यया ॥ ३१ ॥ सिद्धार्थतैललिप्तानिविषकर्णयुतानिच ॥ सप्ताहएवंकृत्वारिंस्था नादुच्चाटयेद्ध्रुवम् ॥ ३२ ॥

युतानिधत्तूरबीजानि शतंशतंसप्ताहंहुत्वाशत्रुमुच्चाटयेत् ॥ ३० ॥ ३१ ॥ ३२ ॥

एवंपक्षंकृत्वा तं देशांतरंनयेत् ॥ मासंकृत्वामारयेत्॥प्रयोगांतरमाह ॥ तालेति॥ नराकारंतालपत्रंकृत्वातत्रशत्रोः प्राणान्संस्थाप्यभल्लातकतैलेनविलिप्यअष्टाधिकंसहस्रमभिमंत्र्यतस्यपंचाशत्खंडानिकृत्वाधत्तूरकाष्ठदीप्तेश्मशानाग्नौत्रिदिनंहुत्वारिंमारयेन्मोहयेच्च ॥ ३३ ॥ ३४ ॥३५ ॥ प्रयोगांतरमाह ॥ साध्येति ॥ नक्षत्रवृक्षाउक्ताः ॥ चिता

पक्षंदेशांतरगतंमासंसंप्रापयेन्मृतिम् ॥ तालपत्रेनराकारंकृत्वात्रस्थापयेदसून् ॥ ३३ ॥जपेदष्टसहस्रं तत्तीक्ष्णतैलविलेपितम्॥नस्यखंडानिपंचाशत्कृत्वापितृवनोत्थिते ॥ ३४ ॥ उन्मत्ततरुसंदीप्तेजुहुयाज्जातवेदसि॥एवंप्रकुर्वंस्त्रिदिनंमारयेन्मोहयेदरिम् ॥ ३५ ॥ साध्यर्क्षतरुकाष्ठेनकृत्वापुत्तलिकां शुभाम्॥तस्यामसून्प्रतिष्ठाप्यसहस्रंप्रजपेन्मनुम् ॥३६॥ चिताकाष्ठस्यकीलेनतांस्पृष्ट्वापितृकानने॥ छिंद्याद्यदंगंशस्त्रेणतदंगंतस्यनश्यति॥३७॥वैरिमूत्रयुतांमृत्स्नांतत्पादरजसासह। कुलालमृद्युतांकृत्वा पुत्तलींरचयेत्तथा॥३८ ॥ तस्यांहृदिपदेमूर्ध्निनामकर्मान्वितंमनुम्॥[1] लिखेच्छ्मशानजांगारैरसून्संस्थापयेत्ततः॥३९॥जप्त्वासहस्रमंत्रेणतीक्ष्णतैलविलेपिताम्॥शस्त्रेणशतधाकृत्वाजुहुयात्पितृभूवसौ ॥४०॥

काष्ठकीलेनतांपुत्तलींस्पृष्ट्वामनुंजपेदितिपूर्वेणसंबंधः ॥ ३६॥ तस्याःप्रतिमायायदंगंशस्त्रेणच्छिंद्यात्तदंगंतस्यशत्रोर्नश्यति ॥ ३७ ॥ प्रयोगांतरमाह ॥ वैरीति ॥ ३८ ॥ ३९ ॥ पितृभूवसौश्मशानाग्नौ ॥ ४० ॥

१ हृदिपदेमूर्ध्निचअमुकस्यामुकंकुरु इति योजयित्वामूलमंत्रंलिखेत् ।

यमाशावदनोदक्षिणदिङ्मुखः ॥ निधनतारा जन्मनक्षत्रात्सप्तमनक्षत्रंषोडशंपंचविंशंच ॥ ४१ ॥ प्रयोगांतरमाह निधायेति ॥ गोमयेनशत्रोःप्रतिमांकृत्वानामविदर्भितंमंत्रंतालपत्रेविलिख्यतत्तालपत्रंगोमयप्रतिमाहृदिनिक्षिप्यप्रतिमोपरिरूप्यताम्रमृदामन्यतमनिर्मितंघटंसंस्थाप्यगोमयोदकाभ्यामापूर्यतत्रापिनामाविदर्भितमंत्रलेखयुतंतालपत्रंनिक्षिप्यतत्रशत्रोःप्राणस्थापनंकृत्वाप्रत्यहंत्रिसंध्यंशतंमंत्रंकुंभंस्पृष्ट्वाजपेत्॥ यावत् शत्रोःप्रतिबिंबंघटेदृश्यतेतावत्का

विभीतकाष्ठसंदीप्तेयमाशावदनोनिशि॥शत्रोर्निधनतारायांकृत्वैवंमारयेदरिम्॥४१॥निधायगोमयंभूमौप्रकुर्य्यात्प्रतिमांरिपोः॥तालपत्रेसमालिख्यमनुंनाम्नाविदर्भितम्॥४२॥तत्पत्रंनिक्षिपेत्तस्याहृदितत्प्रतिमोपरि॥मृज्जंवाराजतंकुंभंगोमयोदकपूरितम्॥४३॥मनुनामयुतंतालपत्रेणाढ्यंनिधापयेत्॥तदसून्स्थापयेत्कुंभेत्रिसंध्यंप्रजपेन्मनुम्॥४४॥ प्रत्यहंशतसंख्याकंछायायावद्भवेद्रिपोः॥गोमयांभसिदृष्टायांतच्छायायांतुसाधकः॥४५॥अधस्थायाःप्रतिकृतेश्छिद्यादंगमभीप्सितम्॥शत्रोरंगस्यनाशायमृतयेहृदयंगलम्॥४६॥प्रविद्धेकंटकैर्मूर्ध्निशिरोरोगोभवेद्रिपोः॥आधयोहृदयेविद्धेपदोःपादव्यथाभवेत्॥४७

लंजपेत् ॥ ४२ ॥ ४३ ॥ ४४ ॥ घटोदकेशत्रुप्रतिबिंबेदृष्टेघटाधःस्थायागोमयप्रतिमायायदंगंछिद्यतेतद्रिपोर्नश्यातिहृदिगलेचछिन्नेतन्मृतिः ॥ ४५ ॥ प्रतिमामूर्ध्नि कंटकैर्विद्धेशिरोरोगः हृदिविद्धेमनःपीडापादयुग्मेकंटकाविद्धेपादरोगइत्यादि० ॥ ४६ ॥ ४७ ॥

दारुणेत्यारंभ्यहर्यक्षंकारिणोयथेत्यंतमेकःप्रयोगः ॥ ४८ ॥ ४९ ॥ ५० ॥ हर्यक्षःकेसरी ॥ ५१ ॥ ५२॥ चंदनादिभि रित्यादिशब्दात् कुंकुमकस्तूरीकर्पूरगजमदाः ॥ ५३ ॥ शास्तृमंत्रमाह॥ अथेति ॥ शास्ताशंभोर्गणविशेषः॥अग्निः

दारुणाकुक्कुटंकृत्वातत्रास्यस्थापयेदसून्॥तंस्पृष्ट्वापूर्ववद्ध्यात्वाजपेद्द्विसहस्रकम्॥४८॥उपचारैः

समभ्यर्च्यच्छादयेद्रक्तवाससा ॥रथेसंस्थाप्यतद्देवंदिक्षुयोधान्निधापयेत् ॥ ४९॥ चतुरोवर्मसंवीता

नश्वारूढानुदायुधान् ॥तत्संयुतोरणेगच्छेज्जेतुंबलवतोरिपून् ॥ ५०॥वीराढ्यंकुक्कुटंदृष्ट्वापलायंते

रणेऽरयः ॥ भीतादशदिशःसर्वेहर्य्यक्षंकारिणोयथा ॥५१॥ताम्रचूडस्यमंत्रेणमोदकाद्यभिमंत्रितम् ॥

यस्मैदद्दीतभक्षायसवशोमंत्रिणोभवेत् ॥५२॥अष्टोत्तरंशतंजप्त्वारोचनाचन्दनादिभिः॥विदधत्तिल

कंभालेदर्शनाद्वशयेज्जनान् ॥५३॥अथवक्ष्येशास्तृमंत्रमुपासकसमृद्धिदम्॥शास्तारंमृगयेत्युक्त्वा

श्रांतमश्वाग्निहृयुतः।५४॥ढंगणावृतमित्युक्त्वापानीयार्थंवनाचदेत्यशाक्रेततोरैवतेनमोमंत्रईरितः

॥५५॥द्वात्रिंशद्वर्णोस्यऋषीरैवतःपरिकीर्तितः॥पंक्तिश्छन्दोदेवतातुमहाशास्ताखिलेष्टदः॥ ५६ ॥

रेफःउयुतःरु ॥ ५४ ॥ यथा-शास्तारंमृगयाश्रांतमश्वारूढंगणावृतम् ॥ पानीयार्थंवनादेत्यशाक्रेतेरैवतेनमइतिश्लो करूपोमंत्रः ॥५५॥ ५६ ॥

१ अस्यशास्तृमंत्रस्यरैवतऋषिःपंक्तिश्छंदःमहाशास्तादेवताममाभीष्ट० ।

॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ गायत्र्या भूताधिपायेत्यादिकया ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ पार्थिवलिंग

पादैःसर्वेणपंचांगंकृत्वात्मनिविभुंस्मरेत् ॥साध्यंस्वपाशेनविबन्ध्यगाढंनिपातयंतंखलुसाधकस्य॥
पादाब्जयोर्दंडधरंत्रिनेत्रंभजेतशास्तारमभीष्टसिद्धयै ॥५७॥ लक्षमेकंजपेन्मंत्रंदशांशंजुहुयात्तिलैः॥
शैवेपीठेयजेद्देवमादावंगानिपूजयेत् ॥५८॥ दलेष्वष्टसुगोप्तारंपिंगलाक्षंततःपरम्॥ वीरसेनंशांभवंच
त्रिनेत्रंशूलिनंतथा ॥५९॥ दक्षंचभीमरूपंचदिक्पालानस्त्रसंयुतान् ॥ एवंसिद्धोमनुःसर्वमभीष्टंमंत्रि
णेऽर्पयेत् ॥६०॥ मध्याह्नेंजलिनातस्मैजलंदत्त्वाजलार्थिने ॥ गोप्त्रादिभ्यस्तद्गणेभ्योदद्यादष्टौ
जलांजलीन् ॥६१॥ जलसंतर्पितःशास्तासगणोऽभीष्टदोभवेत् ॥ निशितस्मैबलिंदद्याद्गायत्र्याचा
भिमंत्रितम् ॥ ६२ ॥ तदग्रेप्रजपेन्मूलमष्टोत्तरशतंसुधीः ॥ भूताधिपायशब्दांतेविद्महेपदमीरयेत्॥
॥६३॥ महादेवायचततोधीमहीतिपदंवदेत् ॥ तन्नःशास्ताप्रचोवर्णाद्यादितिचकीर्तयेत् ॥ ६४॥
गायत्र्येषोदिताशास्तुःसर्वाभीष्टप्रदानृणाम् ॥ अथपार्थिवलिंगस्यविधानमभिधीयते॥६५॥स्नातो
नित्यंविधायादौगत्वाशुद्धांभुवंसुधीः ॥ उपरिष्टामपाकृत्यषडर्णेनाधिमंत्रयेत् ॥ ६६ ॥

विधानमाह ॥ स्नातइत्यादि ॥ ६६ ॥

---

१ ॐ भूताधिपायविद्महे महादेवायधीमहि । तन्नःशास्ताप्रचोदयात् ।

षडर्णमाह ॥ आकाशइति ॥ आकाशोहःपृथिवीशेषस्थितः लआयुतः बिंदुयुतश्च ह्लां ॥ चतुर्थ्यंतापृथिवीपृथिव्यै इति॥ ६७॥६८॥ गणेश्वरकुमारयोर्मंत्रौवक्ष्यमाणौ ॥ हराद्यांश्चसप्तमंत्रान्वक्ष्यमाणान् ॥ ६९ ॥ विवस्वतेसूर्यायार्घ्यं

आकाशःपृथिवीशेषस्थितोबिंदुसमन्वितः॥पृथिवीतुचतुर्थ्यंतानमोंतःस्यात्षडर्णकः॥६७॥ततोमृद मुपादायकृत्वानिःशर्करांततः॥पात्रेनिदध्यात्संशुद्धेप्रत्यहंपूजनायताम्॥६८॥शुदिनेसद्गुरोर्मंत्रौगणेश्व रकुमारयोः॥हराद्यांश्चमनून्सप्तगृह्णीयाद्यागसिद्धये॥६९ ॥ अथार्चनंशुभेघस्रेआरभेतेष्टसिद्धये॥कृत नित्यक्रियःशुद्धःप्रदायार्घ्यंविवस्वते॥७०॥मृदमादायतोयेनसुधयामंत्रितेनच॥आसिच्यपिंडयेत्स्वे ष्टमानांपात्रेनिधापयेत् ॥ ७१ ॥ ततःकालमनुस्मृत्यकामनामपिहृद्गताम्॥ लिंगानिपार्थिवानीह पूजयेऽमुकसंख्यया॥७२॥ संकल्प्यैवंमृदःपिंडादादायाल्पांमृदंसुधीः ॥ एकादशार्णमंत्रेणकुर्य्याद्बा लगणेश्वरम् ॥ ७३॥ मायागणेशभूबीजैर्ङेन्तोगणपतिःपुटः ॥ एकादशार्णमंत्रोयंस्मृतोबालगणेशि तुः ॥७४॥ वराभयलसत्पाणिपद्मंबालगणेश्वरम् ॥ निर्माय्यस्थापयेत्पीठेलिंगानिरचयेत्ततः ॥७५॥

पूर्वोक्तम् ॥ ७० ॥ सुधया वमितिबीजमंत्रितजलेनमृदमासिंच्येत्यन्वयः ॥ ७१ ॥ ७२ ॥ ७३ ॥ बालगणेश्वरमंत्र माह ॥मायेति ॥ मायाह्रीं ॥ गणेशःगम् ॥ भूबीजंग्लौं ॥ ह्रींगंग्लौंगणपतयेग्लौंगंह्रीमिति ॥ ७४ ॥ ७५ ॥

१ ह्रींगंग्लौंगणपतयेग्लौंगंह्रीं ।

हरमंत्रेण ॐनमोहरायेति ॥ अक्षंबिभीतकफलम् ॥ ॐनमोमहेश्वरायेतिमंत्रेणलिंगंकुर्यात् ॥७६॥ लिंगमानमाह॥
अंगुष्ठेति ॥ अंगुष्ठादिद्वादशांगुलांतंयथेष्टंकुर्यात् ॥ ७७ ॥ ॐ नमःशूलपाणयेइतिमंत्रेणपीठेलिंगंस्थापयेत् ॥ ७८ ॥

हरमन्त्रेणगृह्णीयादक्षमात्राधिकांमृदम् ॥ माहेश्वरस्यमंत्रेणलिंगंकुर्य्यात्तयाशुभम् ॥ ७६ ॥ अंगुष्ठमा
नादधिकंवितस्त्यवधिसुंदरम् ॥ पार्थिवंरचयेल्लिंगंनन्यूनंनाधिकंचतत् ॥७७॥ शूलपाणेस्तुमंत्रेण
लिंगंपीठेनिधापयेत् ॥ एवमन्यानिकुर्वीतयथासंकल्पमादरात् ॥७८॥अवशिष्टमृदाकुर्य्यात्कुमारं
तस्यमंत्रतः॥स्थापयेल्लिंगपंक्त्यंतेस्वमंत्रेणार्च्चयेच्चतम्॥७९॥वाग्वर्मकर्णबिंद्वाढ्यश्चरमोमीनकेत
नः ॥ कुमारायनमोंतोयंगुहमंत्रोदशाक्षरः ॥ ८० ॥ मंत्रेणावाहयेद्देवंप्रतिलिंगंपिनाकिनः॥ततोलि
ङ्गस्थितंध्यायेत्सुप्रसन्नंमहेश्वरम् ॥ ८१ ॥

॥ ७९ ॥ कुमारमंत्रमाह ॥ वागिति ॥ वाक्ऐं ॥ वर्महुम् ॥ कर्णबिंद्वाढ्यःउबिंदुयुतःचरमःक्षःक्षुम् ॥ मीनकेतनः
क्लीं ॥ स्पष्टमन्यत् ॥ ८० ॥ ॐनमःपिनाकिनेइतिलिंगेशिवमावाहयेत् ॥ ८१ ॥

१ ऐं हुंक्षुंक्लींकुमारायनमः ।

ध्यानमाह ॥ दक्षेति ॥ दक्षदोष्णादक्षिणबाहुना दक्षिणोत्संगस्थंगणेशंप्रामृशन् ॥ अपरेणवामबाहुनावामोरुस्थि तायाअगपतितनयायाःपार्वत्याउत्संगेवर्तमानंगुहंकुमारंचप्रामृशन् ॥ इष्टाभीतीवराभयेकराभ्यांदक्षवामाभ्यांधा रयन् ॥ ८२ ॥ ॐनमःपशुपतयेइतिमंत्रेणस्नापयेत् ॥ ॐनमःशिवायेतिमंत्रेणवाह्निरेतसेशंकरायगंधपुष्पधूपदीपनैवे द्यान्यर्पयेत् ॥ ८३ ॥ आवरणार्चनमाह ॥ प्रागादीति ॥ क्षित्यादिमूर्तिकान्शर्वादीन् प्रागादिषुचवामावर्तेनपूज

दक्षांकस्थंगजपतिमुखंप्रामृशन्दक्षदोष्णावामोरुस्थागपतितनयांकेगुहंचापरेण ॥ इष्टाभीतीपरकरयु
गेधारयन्निंदुकांतिःसोव्यादस्मांस्त्रिभुवननतोनीलकंठस्त्रिनेत्रः ॥८२॥एवंध्यात्वापशुपतेर्मंत्रेणस्नापये
च्छिवम्।शिवमंत्रेणगंधादीनर्पयेद्वसुरेतसे॥८३॥प्रागादिवामावर्तेनदिक्ष्वष्टौपरिपूजयेत्।शर्वंभवंरुद्रमु
ग्रंभीमंपशुपतिंतथा८४महादेवमथेशानंक्रमात्क्षित्यादिमूर्तिकान्॥क्षित्यप्तेजोक्षिलाकाशयजमानेंदु
भास्कराः८५क्षित्यादयःस्युःशर्वाद्यास्ततइंद्रादिकान्यजेत्।धूपदीपनिवेद्यानिनमस्कारप्रदक्षिणाः८६

येत् ॥ क्षित्यादीनाह ॥ क्षित्यप्तेजइत्यादि ॥ यथा—शर्वायक्षितिमूर्तयेनमःपूर्वे ॥ भवायजलमूर्तयेनम ईशाने ॥ रुद्रायतेजोमूर्तयेनम उत्तरे ॥ उग्रायवायुमूर्तयेनमोवायौ ॥ भीमायाकाशमूर्तयेनमःपश्चिमे ॥ पशुपतयेयजमानमू र्तयेनमोनैर्ऋत्ये ॥ महादेवायचंद्रमूर्तयेनमोदक्षिणे ॥ ईशानायसूर्यमूर्तयेनमआग्नेये इति ॥ ८४ ॥ ८५ ॥ ८६ ॥

जपंकृत्वाॐनमोमहादेवायेतिविसृजेत् ॥ हरादिमंत्रानाह ॥ तारेति ॥ प्रणवनमआद्याश्चतुर्थ्यंता हराद्याःअद्रयः सतसंख्याकामंत्राःॐनमोहरायेत्यादयोमयोक्ताः ॥ ८७ ॥ एवमकं संपूज्यापरंपूजयेत् ॥ अल्पकालेबहुकरणपक्षे बहूनिसहैवपूजयेत् ॥ गणेशगुहौस्वमंत्राभ्यामेवाखिलोपचारैःसंपूज्यविसर्जयेत् ॥८८॥ कामनाभेदेनध्यानान्याह॥

जपंचकृत्वाविसृजेन्महादेवस्यमंत्रतः ॥तारनत्यादिकाङेन्ताहराद्यामनवोद्रयः ॥ ८७ ॥ प्रतिलिंगं यजेद्देवमखिलानिसहैववा ॥ पूजितौनिजमंत्राभ्यांविसृजेद्गणराड्गुहौ ॥ ८८ ॥ धनपुत्रादिकामैस्तु शिवोर्च्यःप्रोक्तलक्षणः ॥ विद्याकामैश्चिन्तनीयःपरशुंहरिणंवरम् ॥८९॥ ज्ञानमुद्रांदधद्धस्तैर्वटमूल मुपाश्रितः ॥ पुंसोर्विरुद्धयोः संधौकुर्य्याल्लिंगानिसाधकः॥९० ॥ नदीतीरद्वयानीतमृदातानिच पूजयेत् ॥ तत्रध्येयोहरिहरःशंखपद्माहिशूलभृत् ॥ ९१ ॥इंद्रनीलशरच्चंद्रनिभोभूषणपुंजवान्॥ दंपत्योरविरोधार्थमर्द्धनारीश्वरःस्मृतः ॥ ९२ ॥

परशुमिति॥वटमूलाश्रितोदक्षिणामूर्तिः ॥ वरज्ञानमुद्रेदक्षयोः ॥ परशुहरिणौवामयोः॥संधौअर्द्धहरिहरोध्येयः॥ शंखपद्मौहरिहस्तयोः ॥ नागशूलेहरहस्तयोः ॥ इंद्रनीलनिभोहरिः ॥ शरच्चंद्रनिभोहरः ॥८९ ॥९०॥९१ ॥९२॥

१ ॐ नमोमहादेवायेतिमंत्रेण । २ ॐ नमोहरायनमः ।

॥ ९३ ॥ उच्चाटनादिषुध्यानमाह ॥ कालीति ॥ शूलेप्रोतः शत्रुसमूहोयेन ॥ कार्यवशतःअल्पेकार्येऽल्पानांपूजा



पीयूषपूर्णकलशंदधत्पाशांकुशावपि॥ उच्चाटेमारणेद्वेषेध्यातव्यःपुनरीदृशः ॥ ९३॥कालीहस्तांबु
जालंबःशूलप्रोतद्विषच्चयः॥ मुण्डमालालसत्कंठोरावविन्नासिताखिलः॥९४॥ इत्थंतुकामनाभेदा
द्ध्यानभेदाःप्रकीर्तिताः॥ पूजयेत्कार्य्यवशतोलक्षावधिसहस्रतः ॥ ९५ ॥ लक्षपार्थिवलिंगानांपूज
नाद्भुविमुक्तिभाक् ॥ लक्षंतुगुडलिंगानांपूजनात्पार्थिवोभवेत्॥९६॥यानारीगुडलिंगानिसहस्रंपूज
येत्सती ॥ भर्तुःसुखमखंडंसाप्राप्यांतेपार्वतीभवेत् ॥ ९७ ॥ नवनीतस्यलिंगानिसंपूज्येष्टमवाप्नुया
त् ॥ भस्मनोगोमयस्यापिवालुकायास्तथाफलम् ॥९८ ॥ क्रीडंतिपृथुकाभूमौकृत्वालिंगंरजोमय
म् ॥ पूजयंतिविनोदेनतेपिस्युःक्षितिनायकाः॥ ९९ ॥प्रातर्गोमयलिंगानिनित्यंयस्त्रीणिपूजयेत्
बृहतीबिल्वयोःपत्रैर्नैवेद्यंगुडमर्पयेत् ॥ १०० ॥



कार्यागौरवेबहूनांपूजाकार्या ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ धनप्रापकंप्रयोगमाह॥प्रातरिति॥१००॥

संपदावहंप्रयोगमाह ॥ एकादशेति ॥ प्रत्यहंकालचतुष्टयेएकादशैकादशपूजयेत् ॥ १०१ ॥ १०२ ॥ १०३ ॥ एनो
निकरः पापौघस्तस्यनाशनम् ॥ उदुंबरसमुद्भवंताम्रमयम् ॥ १०४ ॥ १०५ ॥पिचुमंदोनिंबः ॥१०६॥१०७॥१०८॥

एवंमासत्रयंकुर्वन्ननल्पंलभतेधनम् ॥ एकादशैवलिंगानिगोमयोत्थानियोयजेत्॥ १०१ प्रातर्मध्या
ह्नयोःसायंनिशीथेप्रतिवासरम्॥ ससर्वाःसंपदोयायात्षण्मासादेवमाचरन्॥२॥एकादशयजेन्नित्यं
शालिपिष्टमयानिसः ॥ लिंगानिमासमात्रेणसकलमषचयंदहेत् ॥ ३॥स्फाटिकंपूजितंलिंगमेनोनिक
रनाशनम् ॥ सर्वकामप्रदंपुंसामुदुंबरसमुद्भवम्॥४॥ रेवाश्मजंसर्वसिद्धिप्रदंदुःखविनाशनम्॥यथाक
थंचिल्लिंगस्यपूजानित्यंकृतेष्टदा॥५॥योयजेत्पिचुमंदोत्थैःपत्रैर्गोमयजंशिवम्॥क्रुद्धंमहेश्वरंध्यायन्स
पराजयतेरिपून्॥ ६ ॥योलिंगंपूजयेन्नित्यंशिवभक्तिपरायणः॥मेरुतुल्योपितस्याशुपापराशिर्लयंव्र
जेत्॥ ७ ॥दोग्ध्रीणांतुगवांलक्षंयोदद्याद्वेदपाठिने ॥ पार्थिवंयोऽर्चयेल्लिंगंतयोर्लिंगार्चकोवरः॥८॥
चतुर्दश्यांतथाष्टम्यांपौर्णमास्यांविधुक्षये ॥ पयसास्नापयेल्लिंगंधरादानफलंव्रजेत् ॥९॥लिंगपूजांवि
धायाग्रेस्तोत्रंवाशतरुद्रियम् ॥ प्रजपेत्तन्मनाभूत्वाशिवस्वंविनिवेदयेत् ॥ ११० ॥

॥ १०९ ॥ शतरुद्रियम् ॥ नमस्तेरुद्रमन्यवइतिप्रपाठकंयजुर्वेदोक्तम् ॥ स्वमात्मानंशिवेनिवेदयेत् ॥ ११० ॥

॥ १११ ॥ शिवमंत्रेण-ॐनमःशिवायेतिषडक्षरेण ॥ ११२ ॥ यममंत्रमाह ॥ प्रणवेति ॥ प्रणवॐ ॥ अंकुशःक्रों ॥ हृल्लेखाह्रीं ॥ पाशःआम् ॥ कंजलंवः भौतिकेंदुमत्एंबिंदुयुतंवैं ॥ प्रभंजनोयः ॥ स्पष्टमन्यत् ॥ यथा-ॐक्रोंह्रींआंवैंवै वस्वतायधर्मराजायभक्तानुग्रहकृतेनमः ॥ शमनदैवतोयमदेवताकः ११३ ॥ ११४ ॥ षडंगमाह ॥ त्रिनेत्रेति ॥

यत्संख्याकंयजेल्लिंगंतन्मितंहोममाचरेत्॥आज्यान्वितैस्तिलैरग्नौघृतैर्वापायसेनवा ॥१११॥शिवमंत्रेणतस्यांतेब्राह्मणान्भोजयेच्छतम्॥एवंकृतेसमस्तेष्टसिद्धिर्भवतिनिश्चितम् ॥ १२ ॥ अथधर्मराजमंत्रः ॥प्रणवांकुशहृल्लेखापाशाःकंभौतिकेंदुमत् ॥वैवस्वतायधर्मांतेराजावर्णाःप्रभंजनः ॥ १३ ॥ भक्तानुग्रहवर्णांतेकृतेनमउदीरितः ॥चतुर्विंशतिवर्णात्मामंत्रःशमनदैवतः ॥ १४ ॥ त्रिनेत्रपंचबाणाद्रियुग्मार्णैरंगकंमनोः ॥विधायसावधानेनमनसाचिंतयेद्यमम् ॥१५॥ पाथःसंयुतमेघसन्निभतनुःप्रद्योतनस्यात्मजोनॄणांपुण्यकृतांशुभावहवपुःपापीयसांदुःखकृत् ॥ श्रीमद्दक्षिणदिक्पतिर्महिषगोभूषाभरालंकृतोध्येयः संयमिनीपतिःपितृगणस्वामीयमोदंडभृत् ॥ ११६ ॥

ॐक्रोंह्रींहृदयायनमइत्यादि० ॥ आंवैं शिरइत्यादि० ॥ ११५ ॥ ध्यानमाह ॥ पाथइति ॥ सजलमेघाभः ॥ प्रद्योतनोरविस्तस्यपुत्रः ॥ पुण्यवतांसौम्यः ॥ पापीयसांभीषणः ॥ ११६ ॥

सिद्धमंत्रत्वादृष्यादिपूजाभावः ॥ ११७ ॥ चित्रगुप्तमंत्रमाह ॥ प्रणवइति ॥१८॥ क्षुधायः ॥ तंद्रीमः ॥ क्रियालः॥ उत्कारीवः ॥ वह्निरः ॥ यस्वरूपम् ॥ एतेअर्घीशसंयुताऽयुताः ॥ मूर्ध्नियामिनीशयुताबिंदुयुताः ॥ तेन

अभ्यस्तोयंसिद्धमंत्रःसकलापद्विनाशनः ॥ नरकप्राप्तिरोद्धास्याद्रिपुभीतिनिवर्तकः ॥११७॥अथ चित्रगुप्तमंत्रः ॥ प्रणवोहृद्विचित्रायधर्मांतेलेखकायच ॥ यमवाहिकाधीतिकारिणेपदमुच्चरेत् ॥११८॥ क्षुधातंद्रीक्रियोत्कारीवह्नियार्घीशसंयुताः॥यामिनीशयुतामूर्ध्निजन्मसंपत्पदंततः॥११९॥ प्रलयंकथयद्वंद्वंस्वाहाष्ट्रिंशदक्षरः ॥ मंत्रोयंचित्रगुप्तस्यसर्वदुःखौघनाशनः ॥ २० ॥ सप्तषण्णवव स्वगनत्रार्णैर्मनुसंभवैः ॥ प्रविधायषडंगानिचिंतयेत्कर्मलेखकम् ॥२१॥ किरीटोज्ज्वलवस्त्रभूषाभि रामंविचित्रासनासीनमिंदुप्रभास्यम् ॥नृणांपापपुण्यानिपत्रेलिखंतंभजेचित्रगुप्तंसखायंयमस्य२२॥ सिद्धमंत्रमिमंपुंसांजपतांचित्रगुप्तकः ॥ प्रसन्नोगणयेत्पुण्यंनैवपापंकदाचन ॥ १२३ ॥

य्म्ल्व्र्यूंइतिपिंडम् ॥ स्वरूपमन्यत् ॥ मंत्रोयथा—ॐनमोविचित्रायधर्मलेखकाययमवाहिकाधिकारिणेय्म्ल्व्र्यूंजन्म संपत्प्रलयंकथय २ स्वाहेति ॥ १९ ॥ १२० ॥ षडंगमाह ॥ सप्तेति ॥ वसवोष्टौ ॥ अंगानिषट् ॥ २१ ॥ ध्यानमा ह ॥ किरीटोज्ज्वलमिति ॥ २२ ॥ १२३ ॥

आसुरीमंत्रमाह ॥ कटुकेइति ॥ १२४ ॥ अनंतआ ॥ केशवःअ ॥ बलीरः भग।एयुतःरे ॥ १२५॥ कर्णउ ॥२६॥
तन्द्रीमः भृगुःसःसवाली ययुतः स्य ॥ अन्यत्स्वरूपम् ॥ मंत्रोयथा-ॐकटुकेकटुकपत्रेसुभगेआसुरिरक्तेरक्तवाससे
अथर्वणस्यदुहितेअघोरेअघोरकर्मकारिकेऽमुकस्यगतिंदह २ उपविष्टस्यगुदंदह २सुप्तस्यमनो दह २ प्रबुद्धस्यहृदयं

वक्ष्याम्यथर्ववेदोक्तमासुरीविधिमुत्तमम् ॥ कटुकेकटुकांतेतुपत्रेन्तेसुभगेपदम्॥१२४॥ अनंतसुरिर
क्तंतपदंस्याद्रक्तवाससे ॥ अथर्वणस्यदुहितेकेशवोघोभगीबली ॥ २५॥ अघोरकर्मशब्दांतेकारिके
अमुकस्यच ॥ गतिंदहद्वयंकर्णःपविष्टस्यगुदंदह ॥२६॥ दहसुप्तस्यतंद्रीनोदहयुग्मंप्रबुद्धच ॥भृगुः
सवालीहृदयंदहद्वंद्वंहनद्वयम् ॥२७॥पचयुग्मंतावदंतेदहतावत्पचेतिच॥ यावन्मेवशमायातिवर्मास्त्रे
वह्निवल्लभा ॥२८॥तारादिरासुरीमंत्रोदशोत्तरशताक्षरः॥अंगिरास्तुऋषिश्छन्दोविराड्दुर्गासुरीमता
॥२९॥देवताप्रणवोबीजंशक्तिःपावकनायिका॥हृन्नेत्रवार्णैःशिरोंगार्णैःशिखासप्ताक्षरैर्मता ॥ १३० ॥

दह २ हन २ पच २ तावद्दहतावत्पचयावन्मेवशमायातिहुंफट्स्वाहेति ॥ आसुरीसंज्ञादुर्गादेवता ॥ २७ ॥२८॥
२९ ॥ पावकनायिकास्वाहा ॥ षडंगमाह ॥ हृन्नेति ॥ १३० ॥



१ अस्यआसुरीमंत्रस्यअंगिराऋषिःविराट्छंदःआसुरीदुर्गादेवताॐबीजंस्वाहाशक्तिःममाभीष्टसिद्ध्यर्थेजपेविनियोगः ।

ईशैरेकादशार्णैः ॥ बाणरसाक्षरैः पंचषष्टवर्णः हुंफट्स्वाहेतिचत्वारोवर्णाःसर्वेष्वंगेषूक्तवर्णातेवाच्याः ॥ १३१॥ ध्या
नमाह ॥ शरदिति ॥ अभयांकुशेवामयोः ॥ जयादिशक्तियुतेपीठेगंद्रायुधैःपूजाबोध्या ॥ ३२ ॥ ३३ ॥ पंचांगंमूल

वर्माष्टभिर्नेत्रमीशैरस्त्रंबाणरसाक्षरैः ॥ हुंफट्स्वाहेतिसर्वत्रपठेदंगेषुसाधकः ॥१३१॥ शरच्चंद्रकांति
र्वराभीतिशूलसृणिहस्तपद्मैर्दधानांबुजस्था॥ विभूषांबराद्यादियज्ञोपवीतामुदोथर्वपुत्रीकरोत्वासुरी
नः ॥३२॥ अयुतंप्रजपेन्मंत्रंजुहुयात्तद्दशांशतः ॥ घृताक्तराजिकांवह्नौततःसिद्धोभवेन्मनुः ॥३३ ॥
पंचांगामासुरींमंत्रीगृहीत्वामंत्रयेच्छतम् ॥ तयाधूपितमात्मानंयोजिघ्रेत्सवशोभवेत् ॥३४॥ मध्व
क्तामासुरींहुत्वासहस्रंवशयेज्जगत् ॥ राजिकाप्रतिमांकृत्वादक्षांघ्रेर्मस्तकावधि ॥३५ ॥ अष्टोत्तरशतं
खंडान्जुहुयादसिनादितान् ॥नार्याःप्रतिकृतेर्वामपादादिहवनंचरेत् ॥ ३६॥ एवंप्रकुर्य्यात्सप्ताहंरा
जींधनचितेनले ॥ ससपत्नोपिमृत्यंतंदासोजायेतमंत्रिणः ॥ ३७ ॥स्त्रीलिंगोहःप्रकर्तव्योमंत्रेनारीव
शीकृतौ॥ कटुतैलान्वितांराजींनिंबपत्रयुतांरिपोः ॥३८॥नामयुङ्मनुनाहुत्वाज्वरिणंकुरुतेरिपुम्॥
एवंराजींसलवणांहुत्वास्फोटोभवेद्दरेः ॥ १३९ ॥

शाखापत्रपुष्पफलानि ॥ ३४ ॥ मध्वक्तांखंडघृतक्षौद्रयुताम् ॥ ३५ ॥ ३६॥सपत्नोपिशत्रुरपिदेहांतपर्यंतंदासःस्यात्॥
किमुतान्यः ॥ ३७॥ स्त्रीलिंगोहइति ॥ नार्यावशीकरणेप्रतिमाहोमादौमंत्रेस्थितानाम् ॥ अमुकस्यउपविष्टस्ये
त्यादीनांषष्ठ्यंतानांपदानांस्थानेदेवदत्तायाउपविष्टायाःसुतायाइत्यादूहोविधेयः ॥ ३८ ॥ १३९ ॥

अर्कीति ॥ अर्कदुग्धाक्तराजीहोमाद्रिपुनेत्रनाशः॥ १४०॥गुडयुतांराजींहुत्वाक्षत्रियंवशयेत् ॥ दध्यक्तांहुत्वावैश्यम् ॥ ४१ ॥ होममानमष्टोत्तरशतंसर्वत्र ॥ ४२ ॥ ४३ ॥ उपसर्गाउपद्रवाः ॥४४॥ शीतंचंदनम्॥४५॥वशंवदंवशकृत

अर्कदुग्धाक्ततद्धोमान्नेत्रेनाशयतेरिपोः ॥पालाशेंधनदीप्तेग्नौसप्ताहंघृतसंयुताम् ॥ १४०॥साधको राजिकांहुत्वाब्राह्मणंवशयेद्ध्रुवम् ॥ क्षत्रियंतुगुडाभ्यक्तांवैश्यंदधियुतांचताम् ॥ ४१ ॥ शूद्रंलवणसंयुक्तांहुत्वातांसाष्टकंशतम्॥ आसुरीसमिधोहुत्वामध्वक्तालभतेनिधिम् ॥४२॥ तोयपूर्णेघटेमंत्रीराजिकापल्लवान्विते ॥ आवाह्यतांपूजयित्वाशतंमूलेनमंत्रयेत् ॥४३ ॥ तेनाभिषिक्तंमनुजमलक्ष्मीराधयोरुजः ॥ उपसर्गाःपलायंतेपरित्यज्यातिदूरतः ॥४४॥ आसुरीकुसुमंशीतंप्रियंगुर्नागकेसरः॥मनःशिलाचतगरमेतत्सर्वंविचूर्णितम् ॥४५॥शताभिमंत्रितंसाध्यमूर्ध्निक्षिप्तंवशंवदम् ॥ निंबकाष्ठसमिद्धेऽग्नावासुरींसर्षपान्विताम् ॥४६॥ अष्टोत्तरशतंहुत्वासप्ताहंदक्षिणामुखः ॥विदध्यादचिराच्छत्रुंसूर्यसूनुगृहातिथिम्॥ ४७ ॥ किंकुर्य्यान्नृपतिःक्रुद्धःकिंकुर्य्यूरिपवोखिलाः ॥ क्रुद्धःकालोपिकिंकुर्य्यादासुरीचेदुपासिता ॥ १४८ ॥

॥४६॥ सूर्यसूनुगृहातिथिं यमातिथिम् ॥ मृतमित्यर्थः ॥४७॥ किंकुर्यादिति ॥ आसुर्यामुपासितायांनृपादयोवशवर्तिनःस्युरित्यर्थः॥कालेनाप्यासुर्युपासकोनपराभूयतेकिमुतान्यैः ॥अथर्ववेदोक्तोयंसर्वोद्रवशांतिकृन्मंत्रः॥१४८॥

ग्रंथविस्तर भयान्मंत्रकथनमुपसंहराति॥ग्रंथानिति ॥ १४९ ॥ इतिश्रीमन्महीधरकृतायांमंत्रमहोदधिव्याख्यायांनौ
कायांताम्रचूडकार्तवीर्यासुर्यामन्त्रादिनिरूपणंनामैकोनविंशस्तरंगः ॥ १९ ॥ यंत्राणिवक्तुमुपक्रमते ॥ अथेति॥

ग्रंथाननेकानालोक्यमंत्रागुप्ततमामया॥हितायसुधियांख्याताविस्तरादुपरम्यते ॥ १४९ ॥ इति॥
श्रीमंत्रमहोदधौताम्रचूडादिकथनंनामैकोनविंशस्तरंगः ॥ १९ ॥ अथप्रवक्ष्येयंत्राणिगदितानिपुरा
रिणा ॥ शुभेदिनेसमाराध्यस्वेष्टदेवंयतात्मवान् ॥१॥ स्वप्यात्रिदिवसंभूमौहविष्याशीजपेरतः ॥
इदंमेलिखितंयंत्रमिष्टंतत्कीदृशंप्रभो॥ २ ॥ इतिपृष्ट्वानिजंदेवंप्रत्यहंतंसमर्चयेत्॥तृतीयेदिवसेरात्रौ
स्वप्नंसंप्राप्नुयान्नरः ॥३॥ सिद्धंसाध्यंसुसिद्धंवाशत्रुभूतमथोइदम्॥शत्रुयंत्रंलिखेन्नैवतदातदितरल्लिखे
त् ॥४॥ स्वप्नाभावेपितद्धित्वापरंयंत्रंलिखेत्सुधीः ॥अथसंप्रोच्यतेसर्वयंत्रसाधारणीक्रिया ॥ ५ ॥
स्नातःशुद्धाम्बरधरःपुष्पचंदनभूषितः ॥ द्रव्यैःसमुदितैरुक्तस्थलेयंत्रंलिखेद्दृढः ॥ ६ ॥ षष्ठ्यंतंसाध
कपदंमध्यबीजोपरिस्मृतम् ॥द्वितीयांतंसाध्यमधःपार्श्वयोःकुरुयुग्मकम् ॥ ७ ॥

पुरारिणाशिवेनगौरींप्रतिकथितानि ॥ पूर्वप्रक्रियामाह ॥ शुभइति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ षष्ठ्यंतामि
ति ॥ देवदत्तस्यइष्टंकुरुकुर्विति ॥ ७ ॥

वियदिति ॥ वियत्हः भृगुःसः हसौः इतिबीजं यंत्रस्यजीवः ॥ हंसःसोहमितिवर्णान् यंत्रस्य सूप्राणमूनान्कोणेषु ॥
॥८॥ नेत्रेइई ॥ श्रोत्रेउऊ ॥ दिक्पबीजानींद्रादिबीजानि लंरंमंक्षंवंयंसंहंआंह्रींइत्युक्तानि ॥ पूर्वादिषु ॥ प्रतिकाष्ठं



वियद्भृग्वौसर्गबीजंमध्यभागादधोलिखेत्॥ईशानादिचतुष्कोणेहंसःसोहमसून्पुनः॥ ८ ॥ नेत्रेश्रो
त्रेपार्श्वयुग्मेदिक्पबीजानिदिक्षुच ॥ यंत्रगायत्रिकावर्णान्प्रतिकाष्ठंत्रयंत्रयम् ॥ ९ ॥यंत्रराजायशब्दां
तेविद्महेवरतत्परम्॥ प्रदायधीमहीत्यंतेतन्नोयंत्रःप्रचोदयात् ॥१०॥ एषोक्तायंत्रगायत्रीस्मृतासर्वे
ष्टसिद्धिदा ॥बहिःप्राणप्रतिष्ठायांमनुंसर्वत्रवेष्टयेत् ॥ ११ ॥ स्थलानुक्तौभूर्जपत्रेक्षौमेवाताडपत्रके ॥
यंत्रंविलिख्यघुटिकांबद्ध्वासूत्रेणवेष्टयेत् ॥१२॥ लाक्षयाच्छादितेस्वर्णेह्यथवाताम्रेथवाक्षिपेत् ॥मध्य
बीजेनसंपूज्यदेवंमातृकयापिवा ॥१३॥ संजप्यहुत्वासंपातसिक्तंकृत्वानियोजयेत् ॥ मूर्ध्निबाहौग
लेवापितत्तादिष्टार्थसिद्धये ॥ १४ ॥



प्रतिदिशम् ॥ ९ ॥ गायत्रीमाह ॥ यंत्रेति ॥ १० ॥ ११ ॥ १२ ॥ मध्यबीजेनयद्देवताकंयंत्रंतद्बीजेनतद्ज्ञानेमातृ
कया ॥ १३ ॥ संपातोहुतशेषस्तेनासिक्तम् ॥ १४ ॥

भूतलिपिरुपास्याजप्या ॥ सायथा–अंइंउंऋंलृंएंऐंओंऔंहंयंरंवंलंङंकंखंघंगंञंचंछंझंजंणंटंठंढंडंनंतंथंधंदंमंपंफंभंबंशंषंसं इतिद्विचत्वारिंशदर्णा भूतलिपिः ॥ तदुक्तंशारदायां–पंचह्रस्वाःसंधिवर्णाव्योमेरोऽग्निर्जलंधरा ॥ अंत्यमाद्यंद्वितीयंचचतुर्थंमध्यमंक्रमात् ॥ पंचवर्गाक्षराणिस्युर्वांतश्वेतं( ? ) द्रुभिःसहेति ॥ अस्यादक्षिणामूर्तिऋंषिःगायत्रीछंदः वर्णेश्वरीदेवता ॥ हंयंरंवंलंहृत् ॥ ङंकंखंघंगंशिरः ॥ ञंचंछंझंजंशिखा ॥ णंटंठंढंडंवर्म ॥ नंतंथंधंदंनेत्रम् ॥ मंपंफंभंबंअस्त्रम् ॥ गुदलिंगनाभिहृत्कंठभ्रूमध्यकेशांतशिरोब्रह्मरंध्रेषुनवस्वरान्न्यस्योर्ध्वप्राग्दक्षिणोदक्पश्चिमवक्त्रेषुहादि

यंत्रसेवनसक्तेनोपास्याभूतलिपिःपरा ॥ ययोपासितयासर्वयंत्रसिद्धिःप्रजायते ॥ १५ ॥
अथवश्यकरंयंत्रमुच्यतेक्षिप्रसिद्धिदम् ॥ भस्मादिशोधितेकांस्यभाजनेऽष्टदलंलिखेत् ॥ १६ ॥

पंचकं करयोरग्रेमूलकूर्परांगुलिसंधिमणिबंधेषुङादिवर्गञादिवर्गौ पादयोरग्रमूलजान्वंगुलीसंधिगुल्फेषुणादिनादिवर्गौ उदरपार्श्वद्वयनाभिपृष्ठेषुमादिवर्गं गुह्यहृद्भ्रूमध्येषुशषसान्न्यसेत् ॥एवं वर्णान्न्यस्यचंद्रशेखरांत्रिनेत्रांवराक्षमालापुस्तककपालकरांसुरामत्तांध्यायेत् ॥ एवंध्यात्वालक्षंप्रजप्यायुतंतिलैर्हुत्वासिद्धमंत्रोभवति ॥ एवंभूतलिपिसेवयावक्ष्यमाणयंत्रसिद्धिः ॥ श्रीविद्ययोराधारताच ॥ १५ ॥ यंत्रमाह अथेति ॥ १६ ॥

॥ १७ ॥ स्वरैराढ्यानि युक्तानि अष्टयुग्मपत्राणिषोडशदलानियस्यतेनांबुजन्मनापद्मेनतदष्टदलंवेष्टयेत्॥लोहानि हैमरूप्यताम्राणि ॥ अत्रमातृकादेवता ॥ १८ ॥ १९ ॥ २० ॥ द्वितीयमाह ॥ मायेति ॥ रेखाद्वयकृतेनभूपुरेण

गोरोचनाकुंकुमाभ्यांलेखन्याजातिजातया ॥कर्णिकासाध्यनामाढ्यंवर्गयुक्ताष्टपत्रकम्॥ १७ ॥ त
द्वेष्टयेत्स्वराढ्याष्टयुग्मपत्रांबुजन्मना॥तद्वेष्टयेत्त्रिभिर्वृत्तैःपूजयेत्सप्तवासरान् ॥१८॥ नृपादिपुरुषाः
सर्वेयोषितोपिवशाध्रुवम् ॥ मोहनाख्येमहायंत्रेपूजितेस्युर्नसंशयः॥ १९॥भूर्जादौलिखितंलोहवेष्टि
तंशिरसाधृतम् ॥नृपाणांदुष्टसत्त्वानांवशीकरणमुत्तमम् ॥२०॥ मायासंपुटितांसाध्याभिधामादौस
मालिखेत् ॥तस्याउपर्यधश्चापिमायाबीजचतुष्टयम् ॥ २१॥ तद्वेष्टयेद्भूपुरेणरेखाद्वितयसंयुतम् ॥
भूर्जपत्रेविलिखितरोचनाशीतकुंकुमैः ॥२२॥अनामारक्तसंमिश्रैःपूजितंवशकृन्मतम् ॥ कुमारीवाड
वान्नारीःसंभोज्यवितरेद्बलिम्॥२३॥रक्तपुष्पान्नपललैर्वशीकरणसिद्धये॥ सर्वस्वमपहर्तुंवानिबद्धुंवांछ
तीश्वरे॥२४॥यंत्रंबाहौविधृत्येदंगच्छेद्भूमिपतिंनरः॥क्रोधाक्रांतमनाभूपःशांतकोपस्तमर्चयेत्॥२५॥



चतुष्कोणेन ॥ शीतंचंदनम् ॥ २१ ॥ २२ ॥ वाडवान्विप्रान् ॥ २३ ॥ पललंमांसम् ॥ २४ ॥ अत्रगौरीदेवता॥२५॥

तृतीयमाह ॥ दक्षिणोत्तरेति ॥ दक्षिणोत्तरायतंरेखाद्वयंकृत्वामध्येनामविलिखेत् ॥ २६ ॥ तारपद्मालयापुटंप्रणव श्रीपुटितम् ॥ ॐश्रींदेवदत्तश्रींॐइति ॥ २७ ॥ रेखाद्वयोपर्यधश्चकोष्ठत्रयेश्रींक्षःश्रीमितिरेखाग्रकोष्ठयोरंतिमंक्षं

बीजंसंपुटनामेदंयंत्रमुक्तमनीषिभिः ॥ दक्षिणोत्तरगंकुर्य्याद्रेखाद्वितयमुत्तमम् ॥ २६ ॥ तन्मध्ये विलिखेत्साध्यंतारपद्मालयापुटम् ॥ रेखाग्रयोःस्थितेकोष्ठद्वयेसर्गिणमंतिमम् ॥ २७ ॥ रेखाद्वयोप र्य्यधश्चकोष्ठानांत्रितयंलिखेत्॥मध्यकोष्ठेससर्गंक्षंश्रींबीजंपार्श्वकोष्ठयोः ॥२८॥ एतद्रोचनयाभूर्जे लिखित्वावह्निनादहेत् ॥शरावसंपुटस्थंतत्ततोभस्मसमुद्धरेत् ॥ २९ ॥ दुग्धेनसहपीतंतत्स्वामिव श्यकरंपरम्॥दिक्षुमायाचतुष्काढ्यंसाध्यंषट्कोणमध्यतः ॥ ३० ॥ कोणेषुकोणमध्येषुमायाबीजं समालिखेत् ॥ रोचनाकुंकुमाभ्यांतुभूर्जपत्रेमनोहरे ॥३१॥तच्छरावस्थितंपूज्यंजपेन्मायांतदग्रतः॥ शरावात्तत्समादायबद्धामूर्द्धनिमानवः॥ ३२॥ अग्नितोयादिदिव्येषुशुचिर्दोषादिवर्जितः॥ जयम प्नोतितद्धात्रौकर्तातस्यप्रभावतः ॥ ३३ ॥

सर्गिणंविसर्गयुतंक्षः ॥ २८ ॥ शरावयोर्मध्येदहेत् ॥ अत्रश्रीर्देवता ॥ २९ ॥ चतुर्थंदिव्यंस्तंभनमाह ॥ दिक्ष्विति ॥ ॥ ३० ॥ ३१ ॥ ३२ ॥ पापकर्तापिदिव्ययंत्रधारणाज्जयति ॥ गौरी देवता ॥ ३३ ॥

राजमोहनंपंचममाह ॥ मायेति ॥ अष्टदलंकृत्वामध्येह्रींसःह्रींदेवदत्तसःह्रींइतिविलिख्यदलेषुह्रींसःह्रीं इति लिखेत् ॥ उपरिभूपुरम् ॥ गौरीदेवता ॥ मृत्युंजयंषष्ठमाह ॥ क्रुद्धादिति ॥ सप्तरेखात्मकचतुष्कोणेऽमुकस्य मृत्युंवशयेतिविलिख्योपरिद्वादशदलेऋॠऌॡरहितान्स्वरान्लयुतान्कृत्वात्रिशूलांकितकोणेनचतुरस्रेणवेष्टयेत् ॥ यंत्रद्वयम

दिव्यस्तंभनसंज्ञंचयंत्रमुत्तममीरितम्॥ मायाविसर्गसार्णाभ्यांपुटितंनाममध्यतः ॥ ३४ ॥ दलेष्वष्टसुसर्गाढ्यौसौमायापुटितौलिखेत्॥चतुरस्रेणतत्पद्मंवेष्टयेद्भूर्जपत्रके ॥ ३५ ॥ रोचनाकुंकुमाभ्यांतुलिखित्वातच्छरावयोः॥प्रक्षिप्यपूजयेत्सप्तरात्रंमायांजपेन्नरः॥३६ ॥ राजमोहननामेदंयंत्रंनृपरुषंहरेत्॥क्रुद्धाज्जिघांसोर्नृपतेरात्मरक्षाविधित्सया। ३७वक्ष्येमृत्युंजयंयंत्रंपद्मंनर्कदलंलिखेत्॥कर्णिकायांचतुष्कोणेलिखेन्नामक्रियान्वितम्॥३८॥सप्तरेखात्मकंकार्य्यंतच्चतुष्कोणमुत्तमम् ॥ईशादिद्वादशदलेष्वक्लीबस्वरसंयुतान्। ३९ ।कर्णान्विलिख्यतत्पद्मंचतुरस्रेणवेष्टयेत्।चतुरस्रस्यकोणेषुत्रिशूलानिसमालिखेत्॥४०॥भूर्जपत्रद्वयेचैतद्यंत्रंकृत्वापृथक्पुनः।यंत्रद्वयपुटंकृत्वास्थापयेत्कावुदङ्मुखः।४१।



ध्येइदंयंत्रसंयोज्य कौपृथिव्यांनिखनेत् ॥ मातृकादेवता ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥४० ॥ ४१ ॥

॥ ४२ ॥ विवादेजयावहंसतममाह ॥ लिखेदिति ॥ गौरीदेवता ॥४३॥४४॥ धनिकवश्यकरमष्टममाह ॥ धनिक

तस्योपरिशिलांन्यस्यतत्स्थतोमातृकांजपेत् ॥ एवंकृतेसाधकःस्याद्भीतत्रासोयमादपि ॥ ४२ ॥
सर्वरोगसमूहाच्चकिंपुनाराजमंडलात् ॥ लिखेच्चतुर्दलंपद्मंसाध्याख्यायुक्तकर्णिकम् ॥४३॥ रोचना
कुंकुमाभ्यांतुभूर्जेमायायुतच्छदम् ॥ तद्यंत्रंपयसिन्यस्यविवादंवादिनाचरेत् ॥४४ ॥ जयमाप्नोतिग
दितंविवादविजयासिधम् ॥ धनिकेयाचतिद्रव्यंदानाशक्तेऽधमर्णके ॥४५॥ धनिकस्यवशीकृत्यैयं
त्रंभूर्जदलेलिखेत् ॥ रोचनाकुंकुमाभ्यांतुषट्कोणंसाध्यकर्णिकम् ॥४६ ॥ कोणाग्रेकोणमध्येषुकामा
न्द्वादशसंलिखेत् ॥ तद्वृत्तेनचसंवेष्ट्यमाययावेष्टयेद्बहिः ॥ ४७ ॥ पुनर्वृत्तेनसंवेष्ट्यपूजयेत्सप्तवास
रान् ॥पठेत्सप्तशतींनित्यमंतेहोमंशताधिकम् ॥ ४८ ॥ कृत्वासंभोजयेत्कन्यांधरेद्यंत्रंगलेस्तके ॥
एवंधनीवशमितोनयाचतिददात्यपि॥४९ ॥ दुष्टाराजसमीपस्थाःपैशुन्यंकुर्वतेयदा ॥ तदायंत्रंप्रकु
र्वीतदुष्टमोहनसंज्ञकम् ॥ ५० ॥

इति ॥ भूर्जदले भूर्जपत्रे ॥ गौरीदेवता ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ दुष्टमोहनंनवममाह दुष्टाइति ॥ ५० ॥

भूर्जेखररक्तेनसाध्यगर्भमष्टदलंविलिख्यदिग्दलेषुमायांविदिग्दलेषुसःइतिविलिख्य वृत्तद्वयेनसंवेष्टयप्राणान्संस्थाप्य संपूज्यदुग्धेक्षिप्तंवश्यकरम् ॥ गौरीदेवता ॥ जयदंदशममाह ॥ चतुरस्रइति ॥ विषमः ॥ अनंत अः ॥ भृगुः सः ॥चतुर्दलेह्रींसह्रींइतिविलिख्यतदुपर्यष्टदलंकृत्वादिक्पत्रेषुरोहरोधस्तंभक्षोभइतिवर्णद्वंद्वंविदिक्पत्रेषुक्षइतिचरमः



लिखेदष्टदलंपद्मंभूर्जेचक्रीवतोसृजा ॥ कर्णिकागतसाध्याख्यंमायायुक्तककुब्दलम् ॥५१॥ सगांत
भृगुयुक्कोणंवृत्तद्वितयवेष्टितम् ॥ कृतासुस्थापनंयंत्रंसंपूज्यपयसिक्षिपेत् ॥५२॥ एकविंशतिरात्रेणदु
ष्टाःस्युर्वशवर्तिनः ॥ चतुरस्रेविषानंतंगतंमायापुटंभृगुम् ॥५३ ॥ लिखित्वातस्यकोणेषुककुप्स्वपि
दलाष्टकम् ॥ रोहरोधस्तंभक्षोभदिग्दलेषुक्रमाल्लिखेत् ॥ ५४ ॥ कोणेषुसार्गेचरमंभूर्जेरोचनयोत्तमे
शरावद्वयमध्यस्थंमध्येसाध्याभिधान्वितम् ॥५५॥ पूजयेद्गंधपुष्पाद्यैर्दिक्पतिभ्योबलिंहरेत् ॥ व्य
वहारेविवादेचवशकृद्राजवेश्मनि ॥ ५६॥ यंत्रमेतत्समाख्यातंजयदंमानवर्द्धनम् ॥यावज्जीवंवशीक
र्तुंनरंयंत्रंतथोच्यते ॥ ५७ ॥

॥ गौरीदेवता ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ गणेशयंत्रमेकादशमाह ॥ यावदिति ॥ ५७ ॥

चतुरस्रंकृत्वामध्येपंक्तिचतुष्टयंकार्यम् ॥ आद्यायांमायासप्तकम् ॥ द्वितीयायांक्रोंह्रींक्लींगंदेवदत्तंवशयगमिति ॥
तृतीयायांक्रोंह्रींक्लींह्रींइति ॥ चतुर्थ्यांमायाचतुष्कम् ॥ चतुरस्राद्बहिर्दक्षिणादिशांहित्वातिसृषुदिक्षुगंबीजस्यदशकं
दशकंतदुपर्यपिचतुष्कोणम् ॥ एतद्यंत्रंकृष्णमृत्कृतगणेशोदरेन्यस्यतंसंपूज्यदेवेतिसंप्रार्थ्यहस्तमात्रगर्तेनिखायपूरये

अनामासृग्गजमदरोचनालक्तकैर्लिखेत् ॥ भूर्जेजातीयलेखन्याचतुरस्रंमनोहरम् ॥५८॥ तत्राद्यपं
क्तौसंलेख्यमायाबीजस्यसप्तकम् ॥ द्वितीयायांसृणिर्मायाकामौनामगसंपुटम् ॥ ५९ ॥ तृतीयायां
सृणिपुटामाययासंपुटःस्मरः ॥ लेख्यंपंक्तौचतुर्थ्यांतुमायाबीजचतुष्टयम् ॥६०॥चतुरस्राद्बहिर्दिक्षु
दशबीजंगणेशितुः ॥ विलेख्यदक्षिणांहित्वाकुर्य्याद्बूयोपिभूपुरम्॥६१॥एतद्यंत्रंगणपतेरुदरांतः
प्रविन्यसेत् ॥ विनिर्मितस्यसुक्षेत्रादात्तयाकृष्णयामृदा ॥ ६२ ॥ पंचोपचारैर्गणपंसंपूज्यामुंमनुंप
ठेत् ॥ देवदेवगणाध्यक्षसुरासुरनमस्कृत ॥ ६३ ॥ देवदत्तंममायत्तंयावज्जीवंकुरुप्रभो॥ हस्तमात्रे
धरागर्तेतंविन्यस्यगणाधिपम् ॥ संपूरयेन्मृदागर्तमेवंवश्योभवेन्नरः ॥ ६४ ॥ पद्मंचतुर्दलंकृत्वासा
ध्याख्यंनेत्रकर्णिकम् ॥ तारोनमइमान्वर्णाल्लिखेद्दलचतुष्टये ॥ ६५ ॥

दिति ॥ गणपतिर्देवता ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ नृपवश्यकरंद्वादशमाह ॥ पद्ममिति ॥
चतुर्दलेइयुतंनाम ॥ ॐनमइतिप्रतिदलम् ॥ अजितेइतिदक्षिणोत्तरदलयोराधिकांलिखेत् ॥ अजितादेवता ॥ ६५ ॥

॥ ६६ ॥ ६७ ॥ भृत्यवश्यकरंत्रयोदशमाह ॥ चतुर्दलान्तरिति ॥ क्रिया वशयेति तद्युतम् ॥ गौरीदेवता ॥६८॥
॥ ६९ ॥ दुष्टवश्करंचतुर्दशमाह ॥ चतुरस्त्रइति ॥ मायाबीजगतान्नामार्णांश्चतुरस्त्रेविलिख्यदुष्टपादरजोयुक्तराजि

अजितेइत्यपिलिखेद्दक्षिणोत्तरपत्रयोः॥ भूर्जेगोरोचनाचंद्रकेसरागुरुभिःपुनः ॥ ६६ ॥ त्रिदिनंनियतोयंत्रंसंपूज्याह्निचतुर्थके ॥ एकंसंभोज्यविप्रंद्वंयंत्रंबाहौविधारयेत् ॥६७॥ हेमादिसंस्थितंभूयोवशकृद्दर्शनादपि ॥ चतुर्दलांतर्विलिखेद्भृत्यनामक्रियान्वितम्॥६८॥दलेषुमायाबीजानिभूर्जेरोचनयासुधीः॥ दधिक्षिप्तेतुतद्यंत्रेभृत्यआज्ञाकरोभवेत् ॥ ६९ ॥ चतुरस्त्रेलिखेत्साध्यनामवर्णान्गिरिजायुतान्॥भूर्जेरोचनयामंत्रीदुष्टप्रभुवशीकृतौ ॥७०॥ शत्रुप्रतिकृतेर्यंत्रंहृदयेतत्प्रविन्यसेत ॥ कृतायाराजिकापिष्टैःशत्रुपादरजोयुतैः ॥ ७१ ॥ प्रतिमांपूजयित्वातांचुल्लीपार्श्वेनिखानयेत् ॥ अजासृग्युक्तभक्तेनकृष्णभूतेबलिंहरेत् ॥७२॥ महाकालायादिक्पेभ्योऽरुणपुष्पाज्यसंयुतम् ॥ एवंकृतेभवेद्वश्योनृपोदुष्टोपितत्क्षणात् ॥ ७३ ॥

कापिष्टकृततत्प्रतिमायां हृदिन्यस्यतां चुल्लींनिखायकृष्णचतुर्दश्यांमहाकालायारुणपुष्पाज्येनयुक्तमजायारक्तयुक्तभक्तेनबलिंदद्यात् ॥ उक्तफलसिद्धिः ॥ गौरीदेवता ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥

ललितायंत्रंपंचदशमाह ॥ दौर्भाग्येति ॥ शुक्लत्रयोदश्यांभूर्जेरोचनाकस्तूरीकुंकुमैश्चतुष्कोणगर्भमष्टदलंकृत्वामाया त्रयपुटितंभर्तृनामांतंविलिख्यदिक्पत्रेषुमायात्रयंकोणदलेएकांकृत्वोत्तरदिग्वक्त्रोरात्रावर्चेत् ॥ ललितादेवता॥

दौर्भाग्यशमनंभर्तृवशकृद्यंत्रमुच्यते ॥ नारीणामीप्सितप्राप्तिकरंसौभाग्यवर्द्धनम् ॥७४ ॥ कुर्य्यादष्टदलंपद्मंचतुष्कोणाढ्यकर्णिकम् ॥ चतुष्कोणेलिखेन्मायाबीजानांत्रितयंशुभम् ॥ ७५ ॥ ततःस्वनाथनामार्णान्मायाबीजत्रयंपुनः ॥ दिक्पत्रेत्रींगौरिसुतांविदिक्पत्रेष्वथैकशः ॥७६॥ भूर्जेसितत्रयोदश्यांरोचनानाभिकुंकुमैः॥विलिख्योत्तरदिग्वक्त्रोनिश्यर्चेत्सप्तवासरान् ॥७७॥ तदंतेभोजयेत्सप्तपतिपुत्रान्विताःस्त्रियः ॥ ललिताप्रीतयेपश्चाद्यंत्रंधातुगतंधृतम् ॥ ७८ ॥ रूपसौभाग्यसंपत्तिकरंप्रियवशंवदम्॥ संप्रोक्तंललितायंत्रंकामिनीनामभीष्टदम् ॥ ७९ ॥ गोरोचनाकुंकुमाभ्यांभूर्जेष्टदलमालिखेत् ॥ साकारपुटितंनामकर्णिकायांदलेद्विजा ॥८०॥ दिनद्वयंनिशास्विष्ट्वाभोजयित्वांगनात्रयम् ॥कंठेधृतंभर्तृवश्यकारकंयंत्रमुत्तमम् ॥ ८१ ॥

॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ षोडशमाह ॥ गोरोचनेति ॥ साद्वदत्तसाइतिमध्ये॥पत्रेष्वह्रीं ॥ गौरीदेवता ॥ ८० ॥ ८१ ॥

बीजयंत्रंसप्तदशमाह ॥ भृग्वीति ॥ भृगुःसः ॥ आकाशोहः ॥ विधिःकः ॥ क्ष्मालः ॥ खंहः ॥ वह्निरः ॥ एतान्
शांतींदुविभूषितान् ईंबिंदुयुतान् ॥ तेनषट्कूटंसींहींकींलींहींरींइति ॥ सुंदरीदेवता ॥ ९२ ॥ ८३ ॥ आकर्षणयं
त्रमष्टादशमाह ॥ चतुर्दलमिति ॥ स्वरुधिरयुक्तरक्तचंदनैःक्रोधबीजंहुं ॥ रुद्रोदेवता ॥ ८४ ॥ ८५ ॥ त्रिपुरायंत्र

भृग्वाकाशविधिक्ष्माखवह्नीञ्छांतींदुभूषितान् ॥ लिखेदष्टारपद्मस्यकर्णिकायांदलेष्वपि ॥ ८२ ॥
गोरोचनाचंदनाभ्यांभूर्जेभ्यर्चेद्दिनत्रयम् ॥ धृतंहेमगतंकंठेनार्य्याबाह्वोर्नरेणवा ॥८३॥ सौभाग्यदं
बीजयंत्रंप्रोक्तंदौर्भाग्यनाशनम् ॥ चतुर्दलंलिखेद्भूर्जेस्वासृग्युग्रक्तचंदनैः ॥ ८४ ॥ कर्णिकायांसाध्य
नामक्रोधबीजदलेष्वपि ॥ तद्यंत्रंपूजयित्वाज्येक्षिप्तमावृष्टिक्रुद्भवेत् ॥ ८५ ॥ षट्कोणेविलिखेन्नाम
वाङ्मनोभवमध्यतः ॥ कोणेषुभृगुरौसर्गीभूर्जेरोचनयार्पितम् ॥८६॥ पूजितंत्रिपुरायंत्रंधृतंतांर्विनि
वेशितम् ॥ इष्टस्याकर्षणंतेनभवेत्सप्ताहमध्यतः ॥ ८७ ॥हरिद्रयालिखेदष्टदलंवह्नचस्रकर्णिकम् ॥
शिलायांमध्यतोनामभूबीजंदलमध्यतः ॥ ८८ ॥

मेकोनविंशमाह ॥ षट्कोणइति ॥ वाक्ऐं ॥ मनोभवःक्लीं ॥ भृगुःसः औंसर्गींसौः ॥ त्रिपुरादेवता ॥ ८६ ॥
॥ ८७ ॥ मुखमुद्रणंविंशमाह ॥ हरिद्रयेति ॥ हरिद्रयाशिलायांत्रिकोणमध्यमष्टदलंकृत्वात्रिकोणनामनिर्मायदले
षुग्लौंविलिख्यसंपूज्याशिलांतरेणपिधायानिखनेत् ॥ उक्तफलसिद्धिः ॥ भूमिर्देवता ॥ ८८ ॥

॥ ८९ ॥ अग्निभयहरमेकविंशमाह ॥ वृत्तइति ॥ क्रियेति अमुकस्याग्निभयहरीति ॥ ९० ॥ ९१ भुजयाबाहु
ना ॥ मातृकादेवता ॥ ९२ ॥ विद्वेषणंद्वाविंशमाह ॥ मायेति ॥ भूर्जेरिपुरुधिरेणकाकपक्षेलेखिन्याचतुर्दलेह्रीं

तदभ्यर्च्यपिधायाथशिलयानिखनेत्क्षितौ॥वादेविवादेजायेतप्रतिवाद्यास्यमुद्रणम् ॥ ८९॥ वृत्तेना
मसमालिख्यक्रियाकर्मसमन्वितम्॥दिक्षुवृत्ताद्बहिर्लेख्यंवकाराणांचतुष्टयम् ॥ ९० ॥वेष्टितंचतुरस्रे
णयन्त्रमेतत्सुसाधितम्॥गोरोचनाचंदनाभ्यांभूर्जेलिखितमुत्तमम् ॥ ९१॥ एतद्यंत्रंवृतंलोहत्रयेणभु
जयाधृतम्॥निवर्तयेदग्निभयंसदनेपिचसंस्थितौ ॥ ९२ ॥ मायापुटितमंकारंनामकर्मयुतंलिखेत्॥
चतुर्दलेऽब्जेलेखन्यावायसच्छदजातया ॥९३॥ दलेष्वपितथालेख्यंविरोधिक्षतजेनतत् ॥ निशि
संपूज्यतद्यंत्रमोदनंविनिवेदयेत् ॥९४॥ अजारुधिरसंयुक्तनारीमेकांचभोजयेत् ॥ ततःश्मशानेशर्व
स्यगेहेवाशून्यमंदिरे ॥ ९५ ॥ निखातंतद्विषोर्द्वेषंजनयेदचिराद्ध्रुवम् ॥ विद्वेषणमिदंयंत्रमथोमार
णमुच्यते ॥ ९६ ॥

अंह्रीं अमुकौद्वेषयेतिमध्येदलेष्वपिविलिख्यरात्रौसंपूज्यमेषीरुधिरयुक्तमोदननिवेद्यैकनारींसंभोज्ययंत्रेशंभोःसद्म
निश्मशानादौवानिखातेद्वेषसिद्धिः ॥ गौरीदेवता ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥

मारणंत्रयोविंशमाह ॥ लिखेदिति ॥ चितांगारमेषरक्ताविषैःकाकपक्षलेखिन्यानरकपालेऽष्टदलांतःहुंफट्देवदत्तफट्
हुंइतिविलिख्यदिग्दलेषुहुंकोणदलेषुफट्ततः पद्मंवृत्तेनतच्चवर्मणावेष्ट्यसंपूज्यभस्मानिप्रक्षिप्योपरिस्वल्पंस्वल्पमग्निंप्र
त्यहंप्रज्वालयेद्यथादिनविंशत्यासर्वकपालस्यदाहः ॥ एवमुक्तफलासिद्धिः ॥ अस्त्रंदेवता ॥ ९७॥९८॥९९ ॥ १०० ॥

लिखेदष्टदलेपद्मेनामवर्मास्त्रसंपुटम्॥ दिग्दलेष्वथवर्मैवविदिग्दलगमस्त्रकम्॥९७॥वृत्तेनपद्मंसंवेष्ट्य
वर्मणावेष्टयेच्चतत्॥श्मशानांगारमेषासृग्विषैःकाकच्छदोत्थया ॥ ९८ ॥ लेखन्यालिखितंयंत्रंकपा
लनरसंभवे॥सच्छाद्यभस्मनातस्योपरिप्रज्वालयेद्वसुम् ॥ ९९ ॥ प्रत्यहंप्रदहेत्स्तोकंस्तोकंविंशाद्दि
नावधि॥विंशेहन्यखिलंदग्धंशत्रोर्लोकांतरप्रदम्॥ १०० ॥ चतुर्दलेलिखेन्नामदलगंसाग्निमारुतम्॥
उलूककाकरक्तेनभूर्जेभूतदिनेनिशि॥१०१॥रक्तवस्त्रधरोरक्तपुष्पमाल्यानुलेपनः॥लिखित्वापूजयेद्यंत्रं
रक्तैःपुष्पैश्चचंदनैः॥१०२॥कुमारींभोजयेन्नित्यंदद्यात्तस्यैचदक्षिणाम्॥एवंविंशतिघस्रांतेविधायचरमे
दिने॥१०३॥यंत्रंतत्खंडशःकृत्वाक्षिपेदुच्छिष्टओदने॥दत्तेतस्मिन्वायसेभ्यउच्चाटोजायतेरिपोः॥१०४॥

उच्चाटनंचतुर्विंशमाह ॥ चतुर्दलइति ॥ मारुतोयः ॥ १०१ ॥ १०२ ॥ चरमेन्त्ये ॥ १०३ ॥ तस्मिन्यंत्रखंडयुक्तो
च्छिष्टोदनेकाकेभ्योदत्तेफलम् ॥ वायुर्देवता ॥ १०४ ॥

शांतिकरंपंचविंशमाह ॥ रोचनेति ॥ भूर्जेरोचनादिभिःपूर्वापरायतंदक्षिणोत्तरायतंचरेखाष्टकंकृत्वातत्रबहिःको
ष्ठपंक्तिष्वीशानादिष्वकारादिजकारांतांस्तदंतःपंक्तिषुसकारादिभकारांतान् ॥ तदंतःपंक्तिषुमकारादिसकारांता

रोचनामृगधूर्तकुंकुमैःशोभनेदिने ॥ भूर्जेप्रविलिखेद्यंत्रंलेखन्याजातिजातया ॥ १०५ ॥ प्राक्प्रत्य
ग्दक्षिणोदक्चकुर्य्याद्रेखाष्टकंसमम् ॥ एवमेकोनपंचाशज्जायंतेकोष्ठकास्ततः ॥ १०६ दिग्गतांतिमपंक्ति
स्थांश्चतुर्विंशतिवर्णकान् ॥ अकारादिजकारांताँल्लिखेच्चन्द्रसमन्वितान् ॥ १०७ ॥ तदंतर्गतपंक्ति
स्थान्झादिभांतांश्चषोडश ॥ तदंतःस्थान्मादिसांतान्हकारंशिष्टकोष्ठके ॥ १०८ ॥ रेखाग्रेषुत्रिशूला
निकुर्वीतरदसंख्यया ॥ उपर्य्यधस्त्रिशूलांतर्ह्रल्लेखासप्तकंलिखेत् ॥ १०९ ॥ एवंविलिख्यतद्यंत्रंपूजये
द्दिवसत्रयम् ॥ चंडीपाठकरोविप्रभोजकोभूमिशायकः ॥ ११० ॥ ततोलोहत्रयाविष्टंधारयेद्दोष्णिवा
गले ॥ उपसर्गाःकलिःकृत्याःशमंयांतिविधारणात् ॥ १११ ॥

न्मध्येहंविलिख्यरेखाग्राणिसंवर्ध्यत्रिशूलाकाराणियंत्रपूर्वभागपश्चिमात्रिशूलमध्यभागेषुसप्तसुह्रींसप्तकंकृत्वोक्तविधि
नापूजितं दोष्णिबाहौधृतमुक्तफलदम् ॥ मातृकादेवता ॥ १०५ ॥ १०६ ॥ १०७ ॥ १०८ ॥ १०९ ॥ ११० ॥ १११ ॥

शाकिनीनिवर्तकंषड्विंशमाह ॥ पूर्वोक्तेति ॥ पूर्वोक्तविधिनारोचनादिभिर्भूर्जेजातीलेखिन्याभृगुणासकारेण ॥ ॥ ११२ ॥ पूर्ववदिति ॥ दिनत्रयंचंडीपाठादिना ॥ मातृकादेवता ॥ ११३ ॥ ज्वरहरंसप्तविंशमाह ॥ धत्तूरेति ॥ कृष्णाष्टम्यांकृष्णचतुर्दश्यांवाश्मशानवस्त्रेधत्तूररसेनपरस्परव्यतिभिन्नंचतुष्कोणद्वयंकृत्वाऽष्टसुकोणेषुतन्मध्येष्वपिर

पूर्वोक्तविधिनाकुर्य्यात्पद्ममष्टदलान्वितम्॥ मध्येनाम्नायुतंसर्गिभृगुणाष्टदलेष्वपि ॥ ११२ ॥ पूर्ववत्पूजितंचैतद्बद्धंकंठेभुजेशिशोः॥शाकिनीभूतवेतालग्रहान्सद्योनिवर्तयेत् ॥ ११३ ॥ धत्तूररसतोलेख्यंपितृकान्तारवाससि ॥ कृष्णेवसुतिथौभूतेपुटितंभूपुरद्वयम् ॥११४॥ कोणांतरालेकोणेषुरेफषोडशकंलिखेत् ॥दिक्षुरेफचतुष्कोणयुतंनामापिमध्यतः ॥११५॥ ॥पूजितंतत्पितृवनेनिखातंज्वरशांतिकृत् ॥भूर्जेसुगंधैर्विलिखेत्पद्ममष्टदलान्वितम् ॥ ११६ ॥ नामान्वितंकर्णिकायांदलेष्वजययायुतम् ॥पूजितंविधृतंबाहौसर्पभीतिनिवारकम् ॥ ११७ ॥

मितिविलिख्यमध्येरवेष्टितंनामकृत्वा पूजितंश्मशानेनिखातंज्वरहरम् ॥ अग्निर्देवता ॥११४॥ सर्पभयहरमष्टाविंशमाह भूर्जइति ॥ रोचनादिनाभूर्जेष्टदलंकृत्वामध्येनामदलेषुहंसइतिलिखेत् ॥ हंसोदेवता ॥ ११५॥११६॥ ११७ ॥

बंधमोक्षकृतमेकोनत्रिंशमाह रोचनेति ॥ हिमंचंदनम् ॥ कांस्यपात्रेरोचनादिनाषोडशदलंमायाम् ॥दलेषुस्व
रान्विलिख्यतदुपरिककारादिसकारांतार्णयुक्तं द्वात्रिंशद्दलंतदुपरिकोणेषुहक्षयुतंचतुष्कोणंकृत्वासप्ताहपूजितंबंधह
रम् ॥ ११८ ॥ ११९ ॥ १२० ॥ उक्तयंत्राणांसिद्धयेमातृकाभूतालिपिर्भैरवाणामन्यतमउपास्यः ॥ तत्रैवउक्तं ॥

रोचनाहिमकर्पूरकुंकुमैःपद्ममालिखेत्॥ षोडशारंस्वरैर्युक्तंदलंमायाद्यकर्णिकम् ॥ ११८ ॥ तस्योप
रिष्टाद्द्वात्रिंशद्दलंव्यंजनयुग्दलम् ॥ पद्मंदिग्विदिशाहक्षयुक्तंक्ष्मापुरवेष्टितम् ॥११९॥ एतद्यंत्रंकांस्य
पात्रेलिखितंसप्तवासरान् ॥ पूजितंभूर्जलिखितंधृतंवाबद्धमोक्षकृत्॥१२०॥पूर्वोक्ताखिलयंत्राणांसि
द्धिकामेनमंत्रिणा ॥ उपास्यामातृकादेवीयद्वाभूतलिपिःपरा ॥१२१॥ यद्वोपास्योलेखकालेस्वर्णा
कर्षणभैरवः ॥ प्रणवोवाग्भवंकामशक्तीदीर्घत्रयान्विते॥ १२२ ॥ सर्गीभृगुर्भयासंदुरापदुद्धारणाय
च ॥ अजामलांतेबद्धायङेतोलोकेश्वरस्तथा ॥ १२३ ॥ स्वर्णाकर्षणभैरान्तेदीर्घौबालःप्रभंजनः॥
ममदारिद्र्यविद्वेषणायान्तेप्रणवोरमा ॥ १२४ ॥

॥ १२१ ॥ भैरवमाह ॥ प्रणवइति ॥ १२२ ॥ भृगुःसः भयावः ॥ १२३ ॥ दीर्घौबालः वा प्रभंजनोयः ॥
रमाश्रीः ॥ १२४ ॥

हृदयंनमः ॥ मंत्रोयथा-ॐऐंक्लांक्लींक्लूंह्रांह्रींह्रूंसःवंआपदुद्धारणाय अजामलवद्धायलोकेश्वरायस्वर्णाकर्षणभैरवा यममदारिद्र्यविद्वेषणायॐश्रींमहाभैरवाय नमइति ॥ १२५ ॥ षडंगमाह ॥ नंदेति ॥ नंदानव ॥ आशादश ॥ ॥ १२६ ॥ अथवेति ॥ क्लांह्लांहृत् क्लींह्लींशिरइत्यादि ॥ ध्यानमाह ॥ पारिजातेति ॥ पारिजातवनमध्यगतेमा

ङेन्तोमहाभैरवांतेहृदयंकीर्तितोमनुः ॥ अष्टपंचाशदर्णाढ्योमुनिरस्यचतुर्मुखः॥१२५॥ पंक्तिश्छंदो देवतोक्तास्वर्णाकर्षणभैरवः ॥ नंदाष्टार्कनवाशादिग्वर्णैरंगमनोःस्मृतम् ॥१२६॥अथवाकामशक्ति भ्यांदीर्घाढ्याभ्यांषडंगकम्।पारिजातद्रुकांतारेस्थितेमाणिक्यमंडपे॥सिंहासनगतंध्यायेद्भैरवंस्वर्ण दायिनम्॥१२७गाङ्गेयपात्रंडमरुंत्रिशूलंवरंकरैःसंदधतंत्रिनेत्रम् ॥देव्यायुतंतप्तसुवर्णवर्णंस्वर्णाकृषं भैरवमाश्रयामः॥१२८॥लक्षंजपेद्दशांशेनपायसैर्जुहुयात्सुधीः॥शैवेपीठेयजेद्देवमंगादिक्पालहेतिभिः ॥१२९ ॥ सिद्धंमनुंजपेन्नित्यंत्रिशतींमंडलावधि ॥ दारिद्र्यंदूरमुत्क्षिप्यजायतेधनदोपमः ॥ १३० ॥

णिक्यमंडपे हेमासनगतंध्यायेत् ॥ गांगेयपात्रंहेमभाजनं वरंचदक्षयोः ॥ त्रिशूलडमरूवामयोः ॥ १२७ ॥ १२८॥ हेतयो वज्राद्याः ॥ १२९ ॥ मंडलमेकोनपंचाशद्दिनानि ॥ १३० ॥

१ अस्यस्वर्णाकर्षणभैरवमन्त्रस्यब्रह्माऋषिःपंक्तिश्छन्दःस्वर्णाकर्षणभैरवोदेवताममाभीष्टसिद्धयर्थेजपेविनियोगः ।

एधतेवर्द्धते ॥ अरेःशत्रोःसकाशात् पराभवोनस्यात् ॥ १३१ ॥ इतिश्रीमंत्रमहोदधिव्याख्यायांनौकायांमहीधर निर्मितायांयंत्रमन्त्रादिकथनंनामविंशस्तरंगः ॥ २० ॥ ॥ एवंमंत्रजातंकथयित्वासर्वदेवतानांकामनाविशेषे

जपादिभिर्मनौसिद्धेयंत्रेभ्यःसिद्धिमाप्नुयात्॥सुवर्णमेधतेगेहेनैवारेःस्यात्पराभवः ॥ १३१ ॥इतिमं त्रमहोदधौयंत्रमन्त्रादिनिरूपणंनामविंशस्तरंगः ॥ २० ॥ ॥ नित्यपूजाविधिंसर्वदेवसाधारणंब्रुवे॥ ब्राह्मेमुहूर्तेउत्थायकृत्वाशौचादिकंसुधीः ॥ १ ॥ परिधायांबरंशुद्धंमंत्रस्नानंविधायच॥ प्रविश्यदेव तागारंकुर्य्यात्संमार्जनादिकम् ॥ २ ॥ मंगलारार्तिकंकृत्वानिर्माल्यमपसारयेत्॥ दद्यात्पुष्पांजलिं दन्तधावनाचमनेअपि ॥ ३ ॥ नमस्कृत्यासनेशुद्धेउपविश्यगुरुंस्मरेत्॥ शिरःस्थशुक्लपद्मस्थंप्रसन्नं द्विभुजाक्षिकम् ॥ ४ ॥ अहंब्रह्मास्मिसद्रूपंनित्यमुक्तंनशोकभाक्॥ गुरुदेवात्मनामित्थमैक्यंस्मृत्वा र्चयेततम् ॥ ५ ॥

णयंत्राणिचनिरूप्यसर्वदेवसाधारणंपूजाविशेषंवक्तुमुपक्रमते ॥ नित्येति ॥१॥ २॥ ३ ॥ द्वौभुजौद्वेअक्षिणीचयस्य सद्विभुजाक्षिकःतम् ॥ ४ ॥ ५ ॥

॥ ६ ॥ ७ ॥ श्रीनाथविष्णोइत्यस्यस्थलेविश्वेशशंभोभवदाज्ञयैवेतिशिवोपासकेनभवानिदुर्गेइत्यंबोपासकेनोह्योवि
धेयः ॥ ८ ॥ ९ ॥ आंतरंस्नानमाह ॥ कोटीति ॥ ॥ १० ॥ ११ ॥ वेदोक्तमार्गतः स्वशाखोक्तविधिनातत्तच्छाखानां

त्रैलोक्यचैतन्यमयादिदेवश्रीनाथविष्णोभवदाज्ञयैव॥प्रातःसमुत्थायतवप्रियार्थंसंसारयात्रामनुवर्त
यिष्ये॥ ६॥जानामिधर्मंनचमेप्रवृत्तिर्जानाम्यधर्मंनचमेनिवृत्तिः॥केनापिदेवेनहृदिस्थितेनयथानि
युक्तोस्मितथाकरोमि॥७॥एतच्छ्लोकद्वयेनेष्टदेवतांप्रार्थयेद्बुधः॥श्रीनाथविष्णोस्थानेतुकार्यऊहोन्य
दैवतः॥८॥देवतागुणनामादिस्मरन्स्नातुमथोव्रजेत् ॥ स्नानमांतरबाह्याख्यंद्विविधंकथितंबुधैः॥९॥
कोटिसूर्यप्रतीकाशंनिजभूषायुधैर्युतम्॥शिरःस्थंसंस्मरेद्देवंतत्पादोदकधारया ॥ १० ॥ विशंत्या
ब्रह्मरंध्रेणनिजंदेहंविशुद्धया॥प्रक्षाल्यांतर्गतपापंविरजोजायतेनरः ॥ ११ ॥ एवंकृत्वांतरंस्नानंस्नाया
द्वेदोक्तमार्गतः॥अघमर्षणसूक्तंचस्मरेद्दंतजलेसुधीः ॥१२ ॥ मंत्रस्नानंततःकुर्यात्तत्प्रकारोधुनोच्य
ते॥प्राणानायम्यमूलेनकृत्वान्यासंषडंगकम् ॥ १३ ॥ आदित्यमंडलात्तीर्थान्याह्वयेत्सृणिमुद्रया॥
मंत्रत्रयेणांबुमध्येविलिखेत्तन्मनुत्रयम् ॥ १४ ॥

भिन्नत्वान्नलिखितः ॥ अघमर्षणसूक्तम् ऋतंचसत्यंचेत्यादिकानामृचांसमूहविशेषः ॥अघमर्षणदृष्टमनुष्टुप्छंदस्कंभा
ववृत्तदेवताकम् ॥ १२ ॥ १३ ॥ सृणिमुद्रांकुशमुद्राप्रोक्ता ॥ १४ ॥

ब्रह्मांडेत्यादिश्लोकत्रयंपुराणोक्तंतीर्थावाहनमंत्राः ॥ १५ ॥ १६ ॥ १७ ॥ ग्लौंःचन्द्रः ॥ १८ ॥ तेनमन्त्रेणवंइतिबीजेन ॥ कवचेनहुंइतिबीजेन॥अस्त्रेणफडितिमन्त्रेण ॥ १९ ॥ ईशवारमेकादशवारं वक्ष्यमाणेनआधारइत्यादिना॥

ब्रह्मांडोदरतीर्थानिकरैःस्पृष्टानितेरवे ॥ तेनसत्येनमेदेवतीर्थंदेहिदिवाकर ॥ १५ ॥गंगेचयमुनेचैव गोदावरिसरस्वति ॥ नर्मदेसिंधुकावेरिजलेस्मिन्संनिधिंकुरु ॥ १६॥ आवाहयामित्वांदेविस्नानार्थमिहसुंदरि ॥एहिगंगेनमस्तुभ्यंसर्वतीर्थसमन्विते ॥ १७ ॥ ततोवमितिबीजेनयोजयेत्तानितज्जले॥ अग्न्यर्कग्लौमंडलानितत्रसंचिंतयेत्पुनः ॥१८॥ मंत्रयेत्तेनमंत्रेणरविवारंततोजलम् ॥कवचेनावगुंठ्याथरक्षेदस्त्रेणतत्पुनः ॥१९ ॥ मूलमन्त्रेणेशवारमभिमंत्र्यनमेज्जलम् ॥ मंत्रेणवक्ष्यमाणेनदेवतांमनसिस्मरन् ॥२० ॥ आधारःसर्वभूतानांविष्णोरतुलतेजसः ॥ तद्रूपाश्चततोजाताआपस्ताःप्रणमाम्यहम् ॥ २१ ॥ मज्जेज्जलेस्मरंस्तत्रमूलवद्देवतांतथा ॥उन्मज्ज्यसिंचेत्कंसप्तकृत्वःकलशमुद्रया ॥ २२ ॥ मूलेनाथचतुर्मंत्रैरभिषिंचेन्निजांतनुम् ॥ लिख्यंतेतेऽथचत्वारोमंत्राःशंकरभाषिताः ॥ २३ ॥

देवताकृतिंध्यानोक्ताम् ॥ कं शिरः ॥ कलशमुद्रयाकुंभमुद्रया ॥ हस्तद्वयेनसावकाशिकमुष्टिकरेणकुंभमुद्रा ॥ ॥ २० ॥ २१ ॥ २२ ॥ २३॥

॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ देवमनुष्यान्पितॄंश्चसंक्षेपात्तर्पयेत्-ब्रह्मादयोदेवास्तृप्यंताम्-सनकादयो मनुष्यास्तृप्यंताम्-कव्यवाडनलादयःपितरस्तृप्यन्ताम्-तर्पणार्हाअस्मत्पितरस्तृप्यंतामितिसंक्षेपतर्पणम्॥ सक्थि

सिसृक्षोर्निखिलंविश्वंमुहुःशुक्रंप्रजापतेः ॥मातरःसर्वभूतानामापोदेव्यःपुनंतुमाम् ॥ २४॥अलक्ष्मीं मलरूपांयांसर्वभूतेषुसंस्थिताम्॥क्षालयंतिनिजस्पर्शादापोदेव्यःपुनंतुमाम् ॥२५॥ यन्मेकेशेषुदौर्भाग्यंसीमंतेयच्चमूर्द्धनि ॥ ललाटेकर्णयोरक्ष्णोरापस्तद्घ्नंतुवोनमः ॥ २६॥ आयुरारोग्यमैश्वर्यमरिपक्षक्षयःसुखम्॥ संतोषःक्षांतिरास्तिक्यंविद्याभवतुवोनमः ॥ २७ ॥ विप्रपादोदकंपीत्वाशालग्रामशिलाजलम् ॥ शंखेनत्रिःपरिभ्राम्यप्रक्षिपेन्निजमस्तके ॥ २८ ॥ ततोदेवान्मनुष्यांश्चसंक्षेपात्तर्पयेत्पितॄन् ॥ वस्त्रंसंपीड्यसंक्षाल्यसक्थिनीवाससीधरेत् ॥ २९ ॥ तीर्थाभावात्स्वसदनेस्नायादुष्णेन वारिणा ॥ अल्पाएवप्रवक्तव्यास्तत्रमन्त्रायथोचिताः ॥ ३० ॥हस्तयोरपआदायकुर्यात्तत्राघमर्षणम् ॥ भस्मनागोरजोभिर्वास्नायान्मंत्रेणवाक्षमः ॥ ३१ ॥तत आचम्यपीठस्थस्तिलकंरचयेत्सुधीः ॥ केशवाद्यभिधानैस्तुस्थानेषुद्वादशस्वपि ॥ ३२ ॥

नीं०रू० ॥ २९ ॥ ३० ॥ अक्षमोरोगादिना ॥ ३१ ॥ ३२ ॥

॥ ३३ ॥ नन्दकंखड्गम् ॥ ३४ ॥ अग्निरितिमन्त्रेण भस्मादायगृहीत्वा ॥ सयथा-अग्निरितिभस्मवायुरितिभस्म जलमितिभस्मस्थलमितिभस्मव्योमेतिभस्मसर्वंहवाइदं भस्ममनएतानिचक्षूंषि तस्माद्व्रतमेतत्पाशुपतंयद्भस्म नांगानिसंस्पृशेदिति ॥ ३५ ॥ ततस्त्र्यंबकंयजामहइतिपूर्वोक्तमंत्रेणाभिमंत्र्यक्रमाद्भालादिषुतत्पुरुषादिनामभिः

ललाटोदरहृत्कंठदक्षपार्श्वांसकेततः ॥ वामपार्श्वांसकर्णेचपृष्ठदेशेककुद्यपि ॥३३॥ ललाटेतुगदांकु
र्य्याद्धृदयेनंदकंपुनः॥शंखं चक्रंभुजद्वंद्वेशार्ङ्गबाणंचमूर्द्धनि ॥ ३४ ॥ इत्थंतुवैष्णवःकुर्य्याच्छैवःकु
र्य्यात्त्रिपुंड्रकम् ॥ अग्निहोत्रोत्थितंभस्मादायाग्निरितिमंत्रतः॥३५॥ अभिमंत्र्यत्र्यंबकेनकुर्य्यात्पंच
त्रिपुंड्रकम् ॥ क्रमात्तत्पुरुषाघोरसद्योवामेशनामभिः ॥३६ ॥ फालांसोदरवक्षस्तुऋग्भिस्तेषामथा
पिवा ॥ कृत्वासंध्यांस्वशाखोक्तांमन्त्रसन्ध्यांसमाचरेत् ॥ ३७ ॥

पंचत्रिपुंड्रकंकुर्यात् ॥ यथा-तत्पुरुषायनमोभाले॥ अघोरायनमोदक्षांसे ॥ सद्योजातायनमोवामांसे ॥ वामदेवायनमोजठरे ॥ ईशानायनमोवक्षसि ॥ यद्वातत्पुरुषादिनामस्थलेतत्पुरुषायविद्महे० अघोरेभ्यः० सद्योजातंप्रपद्यामि० वामदेवायनमः० ईशानःसर्वविद्यानां० इति पंचभिरेवमन्त्रैस्त्रिपुंड्राणिविधेयानि ॥ ३६ ॥ ३७ ॥

मन्त्रसन्ध्यामाह ॥ प्राणायामेति ॥ ३८ ॥ ३९ ॥ ४०॥ ४१ ॥ भिदुरोपले वज्रपाषाणे ॥ पापयुक्तंजलंक्षिपेत् ॥ एतदघमर्षणम् ॥ ४२ ॥ मूलमन्त्रमुक्त्वा रविमण्डलसंस्थायदेवायार्घ्यंकल्पयामीतिषोडशार्णमंत्रंजपन् देवायार्घ्यं

प्राणायामषडंगेचकृत्वादायकरेजलम् ॥ त्रिर्जप्त्वामूलमंत्रेणत्वाचमेत्रिर्जपन्मनुम्॥३८॥ पुनर्दक्षकरे
णांभोगृहीत्वावामहस्ततः ॥ निधायतस्माच्च्योतद्भिर्बिंदुभिःसप्तधातनुम् ॥ ३९ ॥ संमार्ज्यमूलमंत्रे
णावशिष्टंतत्पुनर्जलम् ॥ दक्षहस्तेसमादायनासिकांतिकमानयेत्॥४०॥इडयांतःसमाकृष्यतद्धौतैः
पापसंचयैः॥कृष्णवर्णंपिंगलयारेचितंप्रविचिंत्यतत् ॥४१ ॥ क्षिपेदस्त्रेणपुरतःकल्पिते भिदुरोपले॥
अघमर्षणमेतद्धिनिखिलाघनिवारणम् ॥ ४२ ॥ पुनरंजलिनादायजलमर्घ्यदिशेत्ततः॥त्रिवारंमूलमं
त्रांतेषोडशार्णमनुंजपन् ॥ ४३॥ रविमंडलसंस्थायदेवायार्घ्यंपदंवदेत्॥कल्पयामीतिदद्याच्चमंत्रोयं
षोडशाक्षरः॥४४॥सूर्य्यमंडलगंध्यायन्निष्टदेवमनन्यधीः॥प्रजपेन्मंत्रगायत्रींमूलंचाष्टोत्तरंशतम्॥४५

दद्यात् ॥ ४३ ॥ ४४ ॥ ४५ ॥

संहारमुद्रयातीर्थंविसृज्यद्वौहस्तौविमुखौसंयोज्यतयोरंगुलीःपरस्परसंश्लिष्टाः कृत्वाहस्तौसंमुखौकुर्यादितिसंहार मुद्रा ॥ ४६ ॥ ४७ ॥ सत्याग्निहोत्रेआवसथ्येचतयोर्होममुपस्थानंचकृत्वादेवपूजागृहमागत्यवैष्णवाचमनंकुर्यात् ॥ ॥ ४८ ॥ तदेवाह ॥ केशवेति ॥ ॐ केशवायनमः ॥ नारायणायनमः माधवायनमः इतित्रिर्जलंपीत्वा गोविंदाय

अष्टाविंशतिवारंवातर्पयेत्तावदंभसि ॥ दत्त्वार्घ्यंदिननाथायतीर्थंसंहारमुद्रया ॥ ४६ ॥ विसृज्यार्कं लोकपालान्नत्वादेवस्तुतिंपठन् ॥ यागस्थानंतथागत्यप्रक्षाल्यांघ्रीतथाचमेत् ॥ ४७ ॥ गार्हपत्या दिकानग्नीन्हुत्वोपस्थायतानपि ॥ देवतागारमागत्यसमाचामेद्यथाविधि ॥ ४८॥ केशवनारायण माधवैःपीत्वाजलंत्रिधा ॥ करौगोविंदविष्णुभ्यांक्षालयेन्मधुसूदनात् ॥४९॥ त्रिविक्रमेणचाप्योष्ठौ वामनाच्छ्रीधरान्मुखम् ॥ हृषीकेशेनहस्तंचचरणौपद्मनाभतः ॥ ५० ॥

नमः विष्णवेनमइतिद्वाभ्यांकरौप्रक्षाल्य मधुसूदनायनमः त्रिविक्रमायनमइतिद्विरोष्ठौप्रक्षाल्य वामनायनमः श्रीधरायनमः इतिमुखं हृषीकेशायनमः इतिदक्षहस्तं पद्मनाभायनमइतिपादौचप्रक्षाल्य ॥ ४९ ॥ ५० ॥

दामोदरायनमः इतिशिरःप्रोक्ष्य संकर्षणायनमइतिमुखं वासुदेवायनमः प्रद्युम्नायनमइतिनासेचांगुष्ठप्रदेशिनी भ्यांस्पृष्ट्वा अनिरुद्धाय० पुरुषोत्तमाय० इत्यक्षिणी ॥ ५१ ॥ ५२ ॥ अधोक्षजाय० नृसिंहाय० इतिकर्णौचांगु ष्ठानामिकाभ्यांस्पृशेत् ॥ अच्युताय० इतिअंगुष्ठकनिष्ठाभ्यांनाभिम् ॥ ५३ ॥ ५४ ॥ ५५ ॥ जनार्दनाय०इतिक

दामोदरेणमूर्द्धानंप्रोक्ष्यसंकर्षणादिकान् ॥ मुखादिषुकरांगुल्यावेदादिश्रीणिन्यसेत् ॥५१॥ मुखे
संकर्षणंवासुदेवप्रद्युम्नकौनसोः ॥ अनिरुद्धंचपुरुषोत्तममक्ष्णोःप्रविन्यसेत् ॥५२॥ अधोक्षजंनृसिं
हंचकर्णयोर्नाभितोच्युतम् ॥ जनार्दनंहृदिन्यस्येदुपेन्द्रमपिमूर्द्धनि॥५३॥ अंसयोश्चहरिंविष्णुंवैष्णवाच
मनंत्विदम् ॥ केशवाद्याश्चतुर्थ्यंतानमोन्ताःप्रणवादिकाः ॥ ५४॥ आस्येनसोःप्रदेशिन्याऽनामयाने
त्रकर्णयोः॥ कनिष्ठयानाभिदेशेंगुष्ठःसर्वत्रसंयुतः ॥५५॥ तलेनहृदयेन्यस्येत्सर्वाभिर्मस्तकेंसयोः॥
आत्मविद्याशिवैस्तत्त्वैःस्वाहान्तैःप्रपिबेदपः ॥५६ ॥ हांहींहूंआदिमैःशैवेशाक्तेवाग्बीजपूर्वकैः ॥
क्षालनादिकमंगुल्यास्पर्शोपिस्याद्यमंत्रकः ॥ ५७ ॥

रतलेनहृदयम् उपेंद्राय० इतिशिरः हरये० कृष्णाय०इत्यंसौचसर्वाभिः स्पृशेत् ॥ इतिवैष्णवाचमनम् ॥ शैवाचम नमाह ॥ आत्मेति ॥ हांआत्मतत्त्वायस्वाहा हींविद्यातत्त्वायस्वाहा हूंशिवतत्त्वायस्वाहेति त्रिर्जलंपीत्वा क्ष क्षालनाद्यंसस्पर्शांतंउक्तांगुलीभिस्तूष्णीमेवकुर्यात् ॥ इतिशैवम्॥ शाक्तेतुह्रांइत्यादिस्थानेवाग्बीजमेव ॥५६॥५७॥

सामान्यार्घ्यमाह ॥ तारमिति ॥ तारॐ ॥ खंहः वह्निसर्गाढ्यंरेफविसर्गयुतं ह्रः ॥ ५८ ॥ निगमादिनाप्रणवेन ॥ ५९ ॥ यथा–ॐह्रःद्वारार्घ्यंसाधयामीत्युक्त्वाफडितिपात्रंप्रक्षाल्यनमइतिजलेनापूर्यगंगेचेतितीर्थान्यावाह्यप्रणवेनगंधपुष्पेनिक्षिप्यधेनुमुद्रांप्रदर्श्याष्टकृत्वोमूलेनमंत्रयेत् ॥ इतिसामान्यार्घ्यविधिः ॥ तेनार्घ्यजलेनोक्ताःप्रथमतरंगोक्ताद्वारदेवताःगणेशमहालक्ष्मीसरस्वतीविघ्नक्षेत्रपालगंगायमुनाधातृविधातृशंखपद्मनिधिलक्षणाः यथास्थानं

एवमाचम्यसामान्यार्घ्येणद्वारंप्रपूजयेत् ॥ तारखंवह्निसर्गाढ्यंद्वारार्घ्यंसाधयामिच॥५८॥ उक्त्वास्त्रमनुनापात्रंक्षालयेत्पूरयेद्धृदा॥तीर्थान्यावाह्यगंधादीन्निक्षिपेन्निगमादिना ॥ ५९॥ धेनुमुद्रांदर्शयित्वामूलेनाप्यभिमंत्रयेत्॥सामान्यार्घ्यविधिःप्रोक्तस्तेनोक्ताद्वारदेवताः॥ ६० ॥ इष्टार्चेद्वारपालांश्चतेकथ्यंतेपृथग्विधाः॥ नंदःसुनंदश्चंडश्चप्रचंडोबलसंज्ञकः ॥ ६१ ॥ प्रबलोभद्रसंज्ञश्चसुभद्रावैष्णवामताः॥नंदिसंज्ञोमहाकालोगणेशोवृषभस्तथा ॥६२ ॥ भृंगिरिट्यभिधःस्कंदः पार्वतीशाभिधोपरः॥चंडेश्वरइमेशैवाःशाक्तेयामातरःस्मृताः ॥ ६३ ॥ वक्रतुंडश्चैकदंष्ट्रोमहोदरगजाननौ ॥ लंबोदरश्चविकटोविघ्नराजश्चसप्तमः ॥ ६४ ॥

संपूज्यवक्ष्यमाणान्यथास्वंद्वारपालान्पूजयेत् ॥ ६० ॥ वैष्णवान्द्वारपालानाह ॥नंदइति शैवानाह॥नंदिसंज्ञइति॥ ब्राह्म्याद्यामातरःशाक्तेर्द्वारपालाःस्मृताःपूर्वोक्ताबोध्याः ॥ ६१ ॥ ६२ ॥ ६३ ॥ गणेशानाह ॥ वक्रेति ॥ ६४ ॥

॥ ६५ ॥ त्रिधा त्रिप्रकारान्दिव्यंतरिक्षभूमिस्थान् ॥ ६६ ॥ अर्घ्यपानीयैःसामान्यार्घजलैरन्तारिक्षस्थान् ॥ ६७ ॥
॥ ६८ ॥ ६९ ॥ विनिर्यतांगृहान्निर्गच्छताम्अंतरायाणांविघ्नानामवकाशदानायवामांगंसंकोचयन्दक्षिणपादेनगृ
हंप्रविशेत् ॥ ७० ॥ ७१ ॥

धूम्रराजोगणपतेर्द्वारपालाइमेस्मृताः॥ इन्द्रोयमोथवरुणःकुबेरस्त्रैपुराःस्मृताः ॥ ६५ ॥ ईशःकृशानु
रक्षांसिवायुश्चैवाष्टमःस्मृतः॥द्वारपूजांविधायेत्थंविघ्नानुत्सारयेत्रिधा ॥ ६६ ॥ आत्मानंशंकरंध्या
त्वाद्दष्ट्यादिव्यान्निवारयेत्॥ नभस्थानर्घ्यपानीयैःपार्ष्णिघातैर्धरागतान्॥६७ ॥ अपसर्पंतुतेभूता
येभूताभूमिसंस्थिताः ॥ येभूताविघ्नकर्तारस्तेनश्यंतुशिवाज्ञया॥६८॥अपक्रामंतुभूतानिपिशाचाः
सर्वतोदिशम् ॥ सर्वेषामविरोधेनब्रह्मकर्मसमारभे ॥६९ ॥ विनिवार्याखिलान्विघ्नानिदंमंत्रद्वयंप
ठन् ॥ अवकाशप्रदानायांतरायाणांविनिर्यताम् ॥७०॥ संकोचयन्वाममंगंगृहंदक्षपदाविशेत् ॥क्षेत्र
पालंविधातारंनैर्ऋत्यांदिशिपूजयेत् ॥ ७१ ॥

कुशासनव्याघ्रचर्मावस्त्राणामुपर्युपरिस्थापितानामुपरिअनंतासनायनमः विमलासनायनमः पद्मासनायनमःइति मंत्रत्रयेणत्रीन्दर्भान्निदध्यात॥ ७२॥आधिदंमानसपीडाप्रदम् ॥७३॥ प्रागुदग्वा प्राङ्मुखउदङ्मुखोवा॥ पाथोजंपद्मम् ॥ स्वस्तिकासनवीरासनेष्वन्यतममासनंकुर्य्यात् स्वस्तिकासनलक्षणं यथा-'जानूर्वोरंतरेकृत्वासम्यक्पादतलेउभे ॥ ऋजुकायोविशेद्योगीस्वस्तिकंतत्प्रचक्षते'॥पद्मासनंयथा-'ऊर्वोरुपरिविन्यस्यसम्यक्पादतलेउभे । अंगुष्ठौच

अनंतंविमलंपद्मंडंतासननमोन्वितम्॥ जपन्निधायदर्भास्त्रीन्कुशचर्माबरासने ॥ ७२ ॥ काष्ठपल्लव
वंशाश्मगोशकृत्तृणमृण्मयम्॥ विषमंकठिनंमंत्रीत्यजेदासनमाधिदम् ॥७३ ॥ पृथिवित्वयेतिमंत्रेण
प्रागुदग्वासमाविशेत्॥कुर्य्यात्स्वस्तिकपाथोजवीरादिष्वेकमासनम् ॥ ७४ ॥ अर्घ्यपाद्याचमनीय
मधुपर्काचमस्यच॥पंचपात्राणिपुष्पादीन्स्थापयेत्स्वीयदक्षिणे ॥ ७५ ॥

निबध्नीयाद्धस्ताभ्यांव्युत्क्रमात्ततः ॥ पद्मासनमितिप्रोक्तं योगिनांहृदयंगमम्' इति ॥ अत्रहस्ताभ्यांपादांगुष्ठनिबंधनंतुयोगाभ्यासान्वितंबोध्यम् ॥ योगिनांहृदयंगममितिविशेषणोपादानात्॥ जपादौतुपादतलयोरूर्वोरुपरिन्यासमात्रंपद्मासनम् ॥ वीरासनलक्षणंयथा-'एकंपादमधःकृत्वाविन्यस्योरौतथेतरम् ॥ ऋजुकायोविशेद्योगीवीरासनमितीरितम्' इति शारदातिलके ॥ आदिशब्दात्षट्कमोक्तमपि ॥ ७४ ॥ ७५ ॥

वामेगुरून्दक्षेगणेशम् ॥ ७६ ॥ करयोरस्त्रंन्यस्योपर्युपरितालत्रयंकृत्वांगुष्ठतर्जनीभ्यांशब्दंकुर्वन्सुदर्शनमंत्रेण दिग्बंध नंचरेत् ॥ ७७ ॥ सुदर्शनमंत्रमाह ॥ प्रणवइति ॥ ॐनमःसुदर्शनायअस्त्रायफडिति ॥ ७८ ॥ ७९ ॥ पंचधा मातृका

वामेंबुपात्रंव्यजनंछत्रमादर्शचामरे ॥ कृतांजलिर्वामदक्षेगुरून्गणपतिंनमेत् ॥७६ ॥ न्यस्यास्त्रंकर योस्तालत्रयंदिग्बंधनंचरेत्॥अंगुष्ठयुक्ततर्जन्यासुदर्शनमनुंजपन् ॥ ७७ ॥ प्रणवोहृदयंङेन्तंसुदर्शन पदंपुनः॥ अस्त्रायचफडित्युक्तोमंत्रोद्वादशवर्णवान्॥७८॥विधायवह्निप्राकारंभूताजेयोभवेत्सुधीः॥ भूतशुद्धिंतथाप्राणप्रतिष्ठांमातृकास्थितिम्॥७९॥पंचधोक्तांप्रकुर्वीततत्तोन्यान्मातृकांचरेत् ॥ श्रीकं ठाद्यान्छंभुभक्तोवैष्णवःकेशवादिकान् ॥ ८० ॥ गणेशाद्यांस्तुतत्सेवीशक्तिभाङ्मातृकाःकलाः॥ ताःक्रमेणैवकथ्यंतेमुन्यादिन्यासपूर्विकाः ॥ ८१ ॥ मुनिःस्याद्दक्षिणामूर्तिर्गायत्रीछंदईरितम्॥अ र्द्धाद्रिजाहरोदेवोनियोगः सर्वसिद्धये ॥ ८२ ॥

स्थितिः ॥ सृष्टिस्थितिसंहारसृष्टिस्थितिलक्षणपंचविधमातृकान्यासम् ॥ उक्तांप्रथमतरंगे ॥ अन्यान् ॥ श्रीकंठा द्यान् ॥ ८० ॥ तत्सेवीगणेशसेवी ॥ ८१ ॥ ८२ ॥

१ अस्यश्रीकंठमातृकामंत्रस्यदक्षिणामूर्तिर्ऋषिःगायत्रीछंदःअर्द्धनारीश्वरोदेवताहलोबीजानिस्वराःशक्तयःसर्वसिद्ध्यर्थेन्यासेवि० ।

॥ ८३ ॥ ध्यानमाह ॥ पाशेति ॥ पाशांकुशौवामयोः ॥ रक्ताभो हरांशः ॥ सुवर्णाभो देव्यंशः ॥ ८४ ॥ मातृका स्थले ललाटादौ पूर्वोक्ते॥ ८५ ॥ प्रयोगो यथा—ह्सौं अंश्रीकंठेशपूर्णोदरीभ्यांनमः ललाटे ह्सौंआंअनंतेशविरजा

हलोबीजानिगुह्येतुस्वराञ्छक्तीःपदोन्र्यसेत ॥ हसाभ्यांदीर्घयुक्ताभ्यांकृत्वांगंशंकरंस्मरेत्॥८३॥
पाशांकुशवराक्षस्रक्पाणिशीतांशुशेखरम् ॥ त्र्यक्षंरक्तसुवर्णाभमर्द्धनारीश्वरंभजेत् ॥ ८४ ॥ एवंध्या यञ्छंभुशक्तीचतुर्थ्यन्तनमोन्विते ॥ ह्सौंबीजंमातृकापूर्वंविन्यसेन्मातृकास्थले॥ ८५ ॥ श्रीकंठ र्णोदर्य्यौचानंतोविरजयान्वितः ॥ सूक्ष्मेशःशाल्मलीयुक्तोलोलाक्षीयुक्त्रिमूर्तिकः॥ ८६ ॥ अमरे शोवर्तुलाक्षावर्धीशोदीर्घघोणया ॥ भारभूतिर्दीर्घमुखीतिथीशोगोमुखीयुतः॥८७॥स्थाण्वीशोदी र्घजिह्वायुग्घरःकुंभोदरीयुतः॥झिंटीशश्चोर्द्ध्वकेशीभौतिकोविकृतमुख्यपि ॥८८॥ सद्योज्वालामुखी चानुग्रहउल्कामुखीयुतः ॥अक्रूरःश्रीमुखीमहासेनोविद्यामुखीयुतः ॥८९ ॥ क्रोधीशश्चमहाकाल्या चंडेशश्चसरस्वती॥पंचान्तकःसर्वसिद्धिगौरीयुक्तःप्रकीर्तितः ॥ ९० ॥

भ्यांनमोमुखवृत्तेइत्यादि० ॥ ८६ ॥ ८७ ॥ ८८ ॥ सद्यःसद्योजाता ॥ ८९ ॥ ९० ॥

॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ श्रीकंठानंतत्रिमूर्त्यादौपदेयत्रेशपदंनास्तिश्रीकंठे

शिवोत्तमशोविन्यस्योयुक्तस्त्रैलोक्यविद्यया ॥ एकरुद्रोमंत्रशक्तिःकूर्मेशश्चात्मशक्तियुक् ॥ ९१॥
एकनेत्रोभूतमात्रायुक्तःस्याच्चतुराननः ॥ लंबोदर्य्यायुतःप्रोक्तोह्यजेशोद्राविणीयुतः ॥९२॥सर्वेशो
नागरीयुक्तःसोमेशश्चापिखेचरी ॥ लांगलीशश्चमंजर्य्यादारुकेशश्चरूपिणी ॥९३॥ अर्द्धनारीशवी
रिण्यावुमाकांतःपुनर्यतः ॥ काकोदर्य्यातथाषाढीपूतनायुक्तईरितः ॥९४॥ चंडीशोभद्रकालीयुगं
त्रीशोयोगिनीयुतः ॥ मीनेशःशंखिनीयुक्तोमेषेशस्तर्जनीयुतः ॥९५॥ लोहितःकालरात्रिश्चशिखी
शःकुब्जनायुतः ॥ छगलंडःकपर्दिन्याद्विरंडेशश्चवज्रया ॥९६ ॥ महाकालोजयायुक्तोबालीशःसुमु
खेश्वरी ॥भुजंगोरेवतीयुक्तःपिनाकीमाधवीयुतः॥९७॥खड्गीशोवारुणीयुक्तोवकेशोवायवीयुतः ॥
श्वेतोरक्षोविदारिण्याभृगुःसहजयायुतः ॥ ९८ ॥ नकुलीशश्चलक्ष्मीयुक्छिवेशोव्यापिनीयुतः ॥
संवर्तकोमहामायाप्रोक्ताश्रीकंठमातृका ॥ ९९ ॥ यत्रत्वीशपदंनोक्तंश्रीकंठादिषुनामसु॥ तत्रसर्वत्र
वक्तव्यंशक्तिभ्यांहृत्ततोवदेत् ॥ १०० ॥

शेत्यत्रेवतत्रापिज्ञेयम् ॥ शक्तिभ्यां पूर्णोदरीप्रभृतिभ्यांचतुर्थीद्विवचनम् ॥ हृन्नमः ॥ तथाप्रयोगउक्तः ॥ १०० ॥

त्वगिति यादिदशवर्णैस्त्वगादीनात्मभ्यामित्यंतान्वदेत् ॥ यथा-हसौंयंत्वगात्मभ्यांबालीशसुखेश्वरीभ्यांनमः
हृदि ॥ हसौंरंअसृगात्मभ्यांभुजंगेशरेवतीभ्यांनमोदक्षांसइत्यादि० ॥ १०१ ॥ केशवादिमातृकामाह ॥ केशवा
दीति ॥ १०२ ॥ षडंगमाह ॥ द्विरुक्तैरिति ॥ ह्रींहृत् ॥ श्रींशिरः ॥ क्लींशिखा ॥ ह्रींवर्म ॥ श्रींनेत्रम् ॥ क्लींअ
स्त्रम् ॥ ध्यानमाह ॥ शंखेति ॥ शंखादीनिदक्षे ॥ कुंभादीनिवामे ॥ मेघाभोहर्यंशः ॥ चपलाविद्युत् ॥ तन्निभो

त्वगसृङ्मांसमेदोस्थिमज्जाशुक्राण्यसूंन्वदेत्॥शक्तिक्रोधंतथात्मभ्यामंतान्यादिदशस्वपि॥१०१॥
केशवादिमातृकायांसाध्यनारायणोमुनिः ॥ अमृताद्यातुगायत्रीच्छंदोलक्ष्मीहरिःसुरः ॥१०२ ॥
द्विरुक्तैःशक्तिश्रीकामैःषडंगानिसमाचरेत् ॥ शंखचक्रगदापद्मकुंभादर्शाब्जपुस्तकम्॥ १०३ ॥बि
भ्रतंमेघचपलावर्णंलक्ष्मीहरिंभजे ॥ एवंध्यात्वाजपेच्छक्तिश्रीकामपुटिताक्षराम् ॥ १०४ ॥ भ्यामंत
विष्णुशक्त्यंतांनमोंतांप्रणवादिकाम् ॥ केशवःकीर्तिसंयुक्तःकांतिर्नारायणान्विता ॥ १०५ ॥

लक्ष्म्यंशः॥ १०३॥ १०४ ॥ भ्यामंतेययोरीदृशौ विष्णुशक्ती अंतेयस्यास्ताम् ॥ तथानमोंतेयस्याःसानमाता ॥
प्रणवआदौयस्याःसाप्रणवादिका ॥ साचसाचताम् ॥ यथा-ॐह्रींश्रींक्लींअंक्लींश्रींह्रींकेशवकीर्तिभ्यांनम
इत्यादि० ॥ १०५ ॥

---

अस्यकेशवमातृकान्यासस्यनारायणोमुनिः अमृतगायत्रीछंदःलक्ष्मीहरीदेवते० न्यासकरणेविनियोगः ।

॥ १२६ ॥ १२७ ॥ १२८॥ १२९ ॥ १३० ॥ १३१ ॥ १३२ ॥ त्वगादियोगइति ॥ गंयंत्वागात्मभ्यांजटिदीतिभ्यां

सदाशिवःकामदायुगामोदोमदजिह्वया॥दुर्मुखोभूतिसंयुक्तःसुमुखोभौतिकायुतः ॥ १२६ ॥ प्रमोदः सितयायुक्तएकपादोरमायुतः॥ द्विजिह्वोमहिषीयुक्तःशूरश्चापितुभंजिनी ॥ १२७ ॥ वीरोविकर्णयायुक्तःषण्मुखोभृकुटीयुतः॥वरदोलज्जयावामदेवःस्याद्दीर्घघोणया ॥ १२८ ॥ धनुर्धरावक्रतुंडोद्विरदोयामिनीयुतः॥सेनानीरात्रिसंयुक्तःकामांधोग्रामणीयुतः ॥१२९ ॥ मत्तःशशिप्रभायुक्तोविमत्तोलोललोचना॥ मत्तवाहनचंचलेजटीदीप्तिसमन्वितः ॥ १३० ॥ मुंडीसुभगयायुक्तःखड्गीदुर्भगया तथा ॥ वरेण्यश्चशिवायुक्तोभगायुग्वृषकेतनः ॥ १३१॥भक्तप्रियश्चभगिनीगणेशोभोगिनीयुतः ॥ मेघनादश्चसुभगाव्यासीस्यात्कालरात्रियुक् ॥ १३२ ॥ गणेश्वरःकालिकेतिप्रोक्ताविघ्नेशमातृका॥ त्वगादियोगोयादीनांपूर्ववत्परिकीर्तितः ॥ १३३ ॥ कलायुङ्मातृकायास्तुप्रजापतिऋषिःस्मृतः॥ छंदउक्तंतुगायत्रीदेवताशारदाभिधा ॥ १३४ ॥

नमइत्यादि० ॥ १३३ ॥ १३४ ॥





१ अस्यकलामातृकान्यासस्यप्रजापतिर्ऋषिःगायत्रीछंदः शारदादेवतान्यासेवि० ।

कलामातृकायाःषडंगमाह ॥ तारैरिति ॥ यथा–अंॐआंहृत्० ॥ इंॐईंशिरः ॥ उंॐऊंशिखा ॥ एंॐऐंवर्म॥ओंॐ
औंनेत्रम् ॥ अंॐअःअस्त्रम् ॥ ध्यानमाह ॥ शंखेति ॥ शंखपरशुकपालाक्षमालामृतकुंभादक्षहस्तेषु ॥ अन्यान्य

तारैःषडंगंकुर्वीतह्रस्वदीर्घांतरस्थितैः ॥ शंखचक्राब्जपरशुकपालान्यक्षमालिकाम्॥१३५॥ पुस्त
कामृतकुंभौचत्रिशूलंदधतींकरैः ॥ सितापीतासितश्वेतरक्तवर्णैस्त्रिलोचनैः॥१३६॥पंचास्यैःसंयुतां
चंद्रसकांतिंशारदांभजे ॥ ध्यात्वैवंतारपूर्वांतांन्यसेन्डेंतकलान्विता॥ १३७॥ निवृत्तिश्चप्रतिष्ठाचवि
द्याशांतिस्तथेन्धिका॥दीपिकारेचिकाचापिमोचकाचपराभिधा ॥ १३८ ॥ सूक्ष्मासूक्ष्मामृताज्ञा
नामृताचाप्यायनीततः ॥व्यापिनीव्योमरूपाचानंतासृष्टिःसमृद्धिका ॥१३९ ॥ स्मृतिर्मेधाततः
कीर्तिर्लक्ष्मीर्द्युतिःस्थिरास्थितिः सिद्धिर्जरापालिनीचक्षांतिरीश्वरिकारतिः ॥ १४० ॥ कामिका
वरदाचाथाह्लादिनीप्रीतिसंयुता ॥दीर्घातीक्ष्णातथारौद्रीभयानिद्राचतन्द्रिका ॥ १४१ ॥क्षुधास्या
त्क्रोधिनीपश्चात्क्रियोत्कारीसमृत्युका ॥ पीताश्वेतारुणापश्चादसितानंतयान्विता ॥१४२॥ उक्ता
कलामातृकैवंतत्तद्भक्तःसमाचरेत् ॥ ततःस्वमूलमंत्रस्यन्यासात्कल्पोदितांश्चरेत् ॥ १४३ ॥

न्येषु ॥ मध्येप्राग्दक्षिणपश्चिमोत्तरैर्मुखैः क्रमात्सितपीतकृष्णश्वेतरक्तैर्युताम् ॥ तारपूर्वामिति ॥ ॐअंनिवृत्त्यैनमइ
त्यादि० ॥ १३५ ॥ १३६ ॥ १३७ ॥ १३८ ॥ १३९ ॥ १४० ॥१४१ ॥ १४२ ॥ १४३ ॥

॥ १४४ ॥ १४५ ॥ स्वस्वमुद्राभिर्जातियुक्तान्यंगानिहृदयादिषुन्यसेत् ॥तामुद्राजातयश्चोच्यंते ॥ १४६ ॥ १४७ ॥
॥ १४८ ॥ विष्णोरंगमुद्राआह ॥ प्रसारितमिति ॥ हृदिमूर्द्धनिचतर्जन्यादिचतुष्टयमेव ॥ शाक्तेःषडंगमुद्राआह ॥

ऋषिश्छंदोदैवतानिमूर्ध्निवक्त्रेहृदिन्यसेत् ॥बीजंगुह्येपदोःशक्तिमंगानिकरयोरपि ॥ १४४ ॥ अंगुष्ठादिष्वंगुलीषुकरस्यतत्त्वपृष्ठयोः ॥ अंगुष्ठाभ्यांतर्जनीभ्यांनमइत्यादिकंवदेत् ॥ १४५ ॥ हृदयादिष्वथांगानिजातियुक्तानिविन्यसेत् ॥स्वस्वमुद्राभिरधुनाप्रोच्यंतेजातयश्चताः ॥ १४६ ॥हृदयायनमश्चेतिशिरसेस्वाहयायुतम् ॥ शिखायैवषडंगंचकवचायहुमित्यपि॥ १४७॥ नेत्रत्रयायवौषट्स्यादस्त्रायफडितीरितम् ॥ जातिषट्कंद्विनेत्रेतुनेत्राभ्यांवौषडुच्चरेत् ॥ १४८॥ पंचाङ्गेनेत्रसंत्यागोमुद्रांगानामथोच्यते ॥ प्रसारितमनंगुष्ठंतर्जन्यादिचतुष्टयम् ॥ १४९ ॥ हृदिमूर्ध्निहिचांगुष्ठहीनोमुष्टिःशिखातले ॥स्कंधमारभ्यनाभ्यंतादशांगुल्यस्तुवर्मणि ॥ १५०॥ तर्जन्यादित्रयंनेत्रत्रयेनेत्रद्वयेद्वयम् ॥ प्रसारिताभ्यांहस्ताभ्यांकृत्वातालत्रयंसुधीः ॥ १५१ ॥ तर्जन्यंगुष्ठयोरग्रेस्फालयन्बंधयन्दिशः ॥ एषास्त्रमुद्राश्रीविष्णोरंगमुद्राउदीरिताः ॥ १५२ ॥

हृदीति ॥ १४९ ॥ १५० ॥ १५१ ॥ १५२ ॥

क शिरसि ॥ १५३ ॥ अस्त्रंपूर्वविष्णोरस्त्रतुल्यम् ॥ शिवषडंगमुद्राआह ॥ मुष्टीइति ॥ १५४ ॥ निर्गतातर्जनी
याभ्यांतौनिस्तर्जनीताहशावनङ्गुष्ठौसंयुक्तौचमुष्टीशिरसि ॥ निरंगुष्ठकनिष्ठौतौसंयुक्तौमुष्टीशिखायाम् ॥ अङ्गु
ष्ठतर्जनीभ्यांहीनौमुष्टीकवचे ॥ तलास्फोटःकरतलास्फालनम् ॥ १५५ ॥ १५६ ॥ न्यासंविनामंत्राअफलाविघ्नदा

हृद्यंगुलित्रयंन्यस्येत्तर्जन्यादिद्वयंतुके ॥ शिखाप्रदेशेथांगुष्ठंदशांगुल्यस्तुवर्मणि ॥ १६३ ॥ हृद्धनेत्रं
पूर्वमस्त्रशक्तेरंगस्यमुद्रिकाः॥मुष्टीविनिर्गतांगुष्ठौसंयुक्तौहृदिविन्यसेत् ॥ १६४ ॥ निस्तर्जनीता
हशौतुशिरस्यथशिखातले॥निरंगुष्ठकनिष्ठौतौनिरंगुष्ठप्रदेशिनी ॥ १६५ ॥ मुष्टीपृथक्कृतौस्कंधा
द्धृदन्तंवर्मणिस्मृतौ ॥ तर्जन्यादित्रयंनेत्रेतलास्फोटोस्त्रमीरितम्॥१६६॥शैवीषडंगमुद्रोक्तावर्णन्या
समथाचरेत्॥जप्त्वाचाप्यफलामंत्राविघ्नदान्यासमंतरा ॥ १६७ ॥पीठस्यदेवतान्यासाद्देहेपीठंप्रक
ल्पयेत् ॥न्यसेन्मंडूकमाधारेस्वाधिष्ठानेततःसुधीः ॥ १६८॥ कालाग्निरुद्रंनाभौतुकच्छपंहृदयेत
तः॥ आधारशक्तिमारभ्यहेमपीठावधिन्यसेत् ॥ १६९ ॥

स्ततोमूलमंत्रस्यवर्णादिन्यासंकुर्यात् ॥ १५७ ॥ पीठन्यासमाह ॥ न्यसेदिति ॥ १५८ ॥ आधारशक्तिकूर्मानंतपृ
थिवीसागररत्नद्वीपप्रासादहेमपीठादीनिहृदि ॥ १५९ ॥

दक्षांसादिषुधर्मादयःपीठपादाः ॥ तेचवृषकेसरिभूतगजरूपाः ॥ १६० ॥ मुखादिष्वधर्मादयःपीठगात्राणि॥ तेपि वृषादिरूपाः ॥ इतोनंतोम्बुजंपद्मम् ॥ १६१ ॥ तेषुसूर्यादिषुवर्णाद्याःसूर्यादिकलाः कंभंतपिन्यैनमइत्यादिद्वादश कलाःसूर्ये ॥ अंअमृतायैनमइत्याद्याःषोडशेंदौ ॥ यंधूम्रार्चिषेनमइत्याद्यादशवह्नौ ॥ नामादिवर्णाद्यान् संसत्त्वा

दक्षवामांसवामोरुदक्षोरुषुयथाक्रमात्॥धर्मोज्ञानंचवैराग्यमैश्वर्यंविन्यसेत्ततः ॥ १६०॥ वदनेवा
मपार्श्वेचनाभौदक्षिणपार्श्वके॥अधर्मादीन्प्रविन्यस्यहृद्यनंतमितोंबुजम् ॥ १६१ ॥ पद्मेसूर्येन्दुव
ह्नींश्चतेष्ववर्णाद्यानिजाःकलाः॥तत्तन्नामापिवर्णाद्यान्सत्त्वाद्यांस्त्रीन्गुणान्न्यसेत् ॥ १६२ ॥ तत्रात्म
त्रयमाद्यर्णपूर्वंतुर्यंपरादिकम् ॥ मायातत्त्वंकलातत्त्वंविद्यातत्त्वंततोन्यसेत्॥ १६३॥ परतत्त्वंचना
मादिवर्णपूर्वाणिविन्यसेत् ॥ स्वपीठशक्तीर्विन्यस्यन्यसेत्पीठमनुंनिजम्॥१६४॥ हृदिन्यस्यानं
तमुखंदेवानामुत्तरोत्तरम्॥ प्रत्याधारत्वमुदितंपूर्वंपूर्वस्यसत्तमैः॥ १६५ ॥इतिदेहमयेपीठेध्यायेत्स्वा
भीष्टदेवताम्॥तत्तन्मुद्रांप्रदर्श्याथकुर्यान्मानसपूजनम् ॥ १६६ ॥ अथार्चयेत्ततोदेवंमंत्रेणानेनत
न्मनाः॥स्वागतंदेवदेवेशसन्निधौभवकेशव ॥ १६७ ॥

यनमइत्यादि० ॥ १६२ ॥ आत्मत्रयमाद्यःअउमावर्णास्तत्पूर्वम् ॥ अंआत्मने० ॥ उंअंतरात्मने० ॥ मंपरमात्म ॥२००॥
ने० ॥ तुर्यं-ज्ञानात्मने० ॥ परादिकं-ह्रींपूर्वम् ॥ १६३ ॥ १६४ ॥ १६५ ॥ १६६ ॥ १६७ ॥

अन्यदैवतेऽहः--शंकरपार्वतीत्यादि० ॥ १६८ ॥ १६९ ॥ १७० ॥ इतिमंत्रमहोदधिव्याख्यायां नौकायामेकविंश स्तरंगः ॥ २१ ॥ अर्घ्यस्थापनमाह ॥ स्वेति ॥ स्ववामाग्रेत्रिकोणषट्कोणवृत्तचतुरस्राणिकृत्वाशंखमुद्रयास्तंभ येत् ॥ शंखमुद्रालक्षणंयथा-वामांगुष्ठंतुसंगृह्यदक्षिणेनतुमुष्टिना ॥ कृत्वोत्तानंतथामुष्टिमंगुष्ठंतुप्रसारयेत् ॥ वामां

गृहाणमानसींपूजांयथार्थपरिभाविताम् ॥केशवेतिपदस्थानेकार्य्यऊहोन्यदैवते॥ १६८॥मनसापूज यित्वैवंक्षणंतद्गतमानसः ॥ स्थित्वामूलमनुंविद्वाञ्जपेदष्टोत्तरंशतम् ॥१६९॥ जपंनिवेद्यदेवायस्था पयेदर्घ्यमुत्तमम्॥बाह्यसंपूजनायाथतत्प्रकारोनिगद्यते॥१७० ॥इतिमन्त्रमहोदधौदेवस्यस्नानादिनि रूपणंनामैकविंशस्तरङ्गः ॥ २१ ॥ स्ववामाग्रेतुषट्कोणवृत्तभूपुरवेष्टितम्॥कृत्वात्रिकोणमूर्ध्वाग्रं स्तंभयेच्छंखमुद्रया॥१॥पुष्पाक्षतैःषडंगानितत्राग्न्यादिषुपूजयेत् ॥ अस्त्रक्षालितमाधारंतत्राद्ध्या न्मनुंजपन् ॥२॥ मंवह्निमंडलायेतिततोदशकलात्मने ॥ अमुकार्घ्येतिपात्रांतेसनायनमइत्यपि ॥ ॥३॥ चतुर्विंशतिवर्णोयमाधारस्थापनेमनुः ॥ आधारेपूर्वकाष्ठादिदशार्चेत्पावकीःकलाः ॥ ४ ॥

गुल्यस्तथाश्लिष्टाःसंयुताःसुप्रसारिताः ॥दक्षिणांगुष्ठकेलग्नामुद्राशंखस्यभूतिदेति ॥ १ ॥ ततः पुष्पाक्षतैरग्न्यादि षुषडंगानिसंपूज्यास्त्रक्षालितमाधारंमंवह्निमंडलायदशकलात्मनेदेवार्घ्यपात्रासनायनम इत्याधारंत्रिकोणेस्थापये त् ॥ तत्राग्नेःकलाधूम्रार्चिराद्याः पूजयेत् ॥ २ ॥ ३ ॥ ४ ॥

स्वमंत्रेति ॥ शंखमंत्रक्षालितंशंखम् अंसूर्यमंडलायद्वादशकलात्मनेदेवार्घ्यपात्रायनमःइतिआधारेस्थापयेत् ॥ ५॥
त्र्यक्षिवर्णवांश्चयोविंशतिवर्णःअमुकपदस्थानेइष्टदेवतानामोच्चार्यरामार्घ्येत्यादि० शंखमंत्रमाह ॥ तारइति ॥
कामःक्लीं ॥ ॐक्लींमहाजलचरायहुंफट्स्वाहापांचजन्यायनमइति ॥ ६ ॥ ७ ॥ तत्रार्ककलास्तापिन्याद्याःसंपूज्य

स्वमंत्रक्षालितंशंखंस्थापयेन्मनुमुच्चरन् ॥ अंसूर्यमंडलायांतेद्वादशांतिकलात्मने ॥५॥ अमुकार्घ्येति
पात्रायनमोंतस्त्र्यक्षिवर्णवान् ॥ शंखस्थापनमंत्रोऽयंतारःकामोमहाजलः ॥६ ॥ चरायवर्मफट्स्वाहा
पांचजन्यायहृन्मनुः ॥ शंखस्यविंशत्यर्णाव्यस्तेनप्रक्षालयेत्तुतम् ॥७ ॥ कलाद्वादशसूर्यस्यशंखोपरि
यजेत्क्रमात् ॥ विलोमांमातृकांमूलंविलोमंचपठञ्जलैः ॥८ आपूर्यमनुनेष्वातंतत्राचैदैन्दवीःकलाः ॥ ॐ
सोममंडलायांतेषोडशांतेकलात्मने ॥९॥ अमुकार्घ्यामृतायेतिहृन्मनुश्चार्घ्यपूजने ॥ आह्वयेत्तत्रती
र्थानितन्मंत्रैःसृणिमुद्रया ॥ १० रविमंडलतःस्वीयहृदोदेवमथाह्वयेत् ॥ अष्टकृत्वोजपेन्मंत्रंपूर्णाजलम
न्न्यधीः ॥ ११ ॥ अप्सुविन्यस्यचांगानिहृदासंपूजयेदपः ॥ मूलंजपेदष्टशतंच्छादयन्मत्स्यमुद्रया १२।

विलोमेनमूलमातृकेजपन्जलैस्तंसंपूर्य-ॐसोममंडलायषोडशकलात्मनेदेवार्घ्यामृतायनमइत्यर्घ्यंसंपूज्यतन्मंत्रैःसृ
णिमुद्रयागंगेचेत्यादितितीर्थमंत्रेणांकुशमुद्रयाऽर्कमंडलात्तीर्थमावाह्यस्वहृदोदेवमावाहयेत् ॥ अंकुशमुद्रालक्षण 
मुक्तम् ॥ मत्स्यमुद्रोक्ता ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

अंगुष्ठतर्जनीस्फोटं-छोटिकामुद्रा ॥ वाममुष्टिंनिर्गततर्जनीकंकृत्वाशंखोपरिभ्रमणम्--अवगुंठिनीमुद्रा ॥ वर्मणा हुंबीजेन ॥ १३ ॥ गोमुद्रांधेनुमुद्राम् ॥ सायथा--'वामांगुलीनांमध्येषुदक्षिणांगुलिकास्तथा ॥ संयोज्यतर्जनींदक्षां मध्यमानामयोस्तथा ॥ दक्षमध्यमयोर्वामांतर्जनींचनियोजयेत् ॥ वामयानामयादक्षकनिष्ठांचानियोजयेत् ॥ दक्षयानामयावामांकनिष्ठांचानियोजयेत् ॥ विहिताधोमुखीचैषाधेनुमुद्राप्रकीर्तिता' इति अमृतबीजतः वमिति बीजेनसंरोधिन्यामुद्रया॥सायथा-'अंगुष्ठगर्भिणीसैवसंनिरोधेसमीरिता' इति॥अंगुष्ठगर्भमुष्टिद्वयमित्यर्थः ॥ तत्रा

संरक्षेदस्त्रमंत्रेणच्छोटिकामुद्रयाजलम्॥मुद्रयाचावगुंठिन्यावर्मणात्ववगुंठयेत्॥ १३॥अमृतीकृत्यगोमुद्रांकुर्वन्नमृतबीजतः ॥ संरोधिन्यासंनिरुध्यतत्रमुद्राःप्रदर्शयेत्॥ १४ ॥शंखमौसलचक्राख्यापरमीकृत्यतत्पुनः ॥ महामुद्रांविरचयन्योनिमुद्रांचदर्शयेत् ॥ १५ ॥कृष्णमंत्रेगालिनींचरामेगरुडमुद्रिकाम् ॥ शंखाद्दक्षिणदिग्भागेप्रोक्षणीपात्रपूरणम् ॥ १६ ॥

र्घ्यमुद्राः शंखाद्याः ॥ १४ ॥शंखमुसलचक्रमुद्राउक्ताः॥महामुद्रांकुर्वन् ॥ परमीकृत्यकरयोरंगुलीः संग्रथ्यकरौवियोजयेदिति ॥ महामुद्रोक्ता ॥ १५ ॥ करांगुल्यग्राणिवक्रीकृत्यसंमुखंयोजितानि--गालिनीमुद्रा ॥ गरुडमुद्रा यथा--'संमुखौतुकरौकृत्वाग्रंथयित्वाकनिष्ठिके ॥ पुनश्चाधोमुखेकृत्वातर्जन्यौयोजयेत्तयोः ॥ मध्यमानामिकेद्वेतुपक्षाविवविचालयेत् ॥ मुद्रैषापक्षिराजस्यसर्वविघ्ननिवारिणी' इति ॥ १६ ॥

तेनप्रोक्षणीजलेननिजांगमुक्षेत्सिंचेत् ॥ मूलगायत्र्यापूजोपकरणानिचउक्षेत ॥ १७॥ १८ ॥ उदुंबरंताम्रम् ॥



कृत्वार्घ्यंवस्त्रनिक्षिप्यतेनोक्षेत्त्रिर्निजांतनुम् ॥ प्रजपन्मूलगायत्रींपूजावस्तुचयंतथा ॥१७॥ पाद्या
चमनपात्रेचदध्यादर्घ्यस्यचोत्तरे ॥ एवमर्घ्यविधिःप्रोक्तःसर्वसाधारणोमया ॥ १८ ॥ विहायशंकरं
सूर्यमर्घ्येशंखःप्रशस्यते ॥ हेमरूप्योदुम्बराब्जरीतिदारुमृदुद्भवम् ॥ १९॥पालाशंपद्मपत्रंवास्मृतं
पाद्यादिभाजनम्॥अशक्तावन्यपात्रेणपाद्यादीनिनिवेदयेत्॥२०॥अंतर्यागंततःकुर्य्यात्पीठेदेहमये
सुधीः ॥ न्यासस्थानेषुमंडूकमुख्यान्गंधादिभिर्यजेत् ॥२१॥पीठमंत्रांतमंत्रेणहृदयेस्वेष्टदेवताम्॥
कुंडलीमथचोत्थाप्यद्वादशांतेपरंनयेत् ॥ २२ ॥

रीतिःपित्तलम् ॥ १९ ॥ २० ॥ २१ ॥ कुंडलीमथेति ॥ आधारचक्रात्कुंडलिनीमुत्थाप्यद्वादशांतेब्रह्मरंध्रेवर्तमानं
परब्रह्मनयेत् ॥ २२ ॥

॥ २३ ॥ २४ ॥ ब्रह्मचारिवानप्रस्थयतयआज्यमंतर्यागमेव ॥ तेषांद्रव्याभावाद्बाह्ययागेनाधिकारः ॥ २५ ॥ २६ ॥

तदुत्थामृतधाराभिःप्रीणयेत्स्वेष्टदेवताम् ॥जपंकृत्वानिवेद्यास्मैमनसानविसर्जयेत् ॥ २३ ॥ मूर्द्धहृ
त्पादगुह्येषुतनौपुष्पांजलीन्क्षिपेत्॥ अंतर्यागंविधायेत्थंबाह्यपूजनमाचरेत् ॥२४॥अंतर्यागबहिर्या
गौगृहस्थःसर्वमाचरेत् ॥ आज्यमेवब्रह्मचारीवानप्रस्थोयतिस्तथा॥२५ ॥ वर्द्धन्यांप्रक्षिपेत्किंचिद
र्घोदकमनन्यधीः ॥ प्राणानायम्यमूलेनवामेगुरूंश्चयंनमेत् ॥ २६ ॥ दक्षिणेचगणेशानंपीठपूजामथा
चरेत् ॥स्वर्णादिनिर्मितेयंत्रेयद्वाचंदननिर्मिते ॥२७ ॥ मंडूकात्परतत्त्वांतंदिङ्मध्येपीठशक्तयः ॥
पृथिव्यनंतरंपूज्यःक्षीराब्धिर्धर्माधर्वेश्रिया॥ २८ ॥ इक्षुसिंधुर्गणेशेस्यादन्यत्रामृतसागरः॥अग्निराक्ष
सवाय्वीशकोणेधर्मादयःस्मृताः ॥ २९ ॥ इन्द्रकीनाशवरुणसोमाशासुनञादिकाः ॥ धर्मादिपूजने
प्राचीतथैवावरणार्चने ॥ ३० ॥

॥ २७ ॥ मंडूकादयःपरतत्त्वांताःपीठदेवताउक्ताः ॥ २८ ॥ २९ कीनाशोयमः ॥ नञादिकाअधर्मादयः ॥ ३०॥

शक्रादिषुयथास्वकंप्रसिद्धैवप्राची ॥ पीठशक्तीनांध्यानमाह ॥ श्वेतेति ॥ यथाविधिस्थापितायांविधिनाप्रतिष्ठि

पूजकस्यपुरःकल्प्याःशक्रादिषुयथास्वकम् ॥श्वेताकृष्णारुणापीताश्यामारक्तासिताऽसिता॥ ३१॥
रक्तांबराभयधराध्येयाःस्युःपीठशक्तयः ॥शालग्रामेमणौयंत्रेनित्यपूजांसमाचरेत् ॥ ३२ ॥ हेमादि
प्रतिमायांवास्थापितायांयथाविधि ॥अंगुष्ठादिवितस्त्यंतप्रमाणाप्रतिमागृहे॥ ३३ ॥ पूज्यानदग्धा
भिन्नावानोर्द्ध्वाधोदृङ्नवक्रिका ॥ लिंगंवालक्षणोपेतंतत्रावाहनमाचरेत् ॥३४॥मूलमुद्राय्यंहृदया
त्सुषुम्नावर्त्मनासह॥द्वारेणब्रह्मरंध्रस्यनासारंध्रेविनिर्गतम् ॥३५॥ पुष्पांजलौमातृकाब्जेयोजयित्वा
विनिक्षिपेत् ॥मूर्त्तौपुष्पांजलिंचैतदावाहनमुदीरितम् ॥ ३६ ॥ शालग्रामेस्थिरायांवानावाहनविस
र्जने ॥ आह्वानाद्युपचारेषुश्लोकाञ्छंभूदितान्पठेत् ॥ ३७ ॥ आत्मसंस्थमजंशुद्धंत्वामहंपरमेश्वर॥
अरण्यामिवहव्यांशंमूर्तावावाहयाम्यहम् ॥ ३८॥ पंचायतनपक्षेतुमध्येविष्णुंसमर्चयेत् ॥ अग्निनि
र्ऋतिवायव्येशानेषुगणनायकम् ॥ ३९ ॥

तायाम् ॥ योर्ध्वदृक्अधोदृक्वक्राचतानपूज्याः॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ पंचायतन
पूजामाह ॥ पंचेति ॥ ३९ ॥

॥ ४० ॥ ४१ ॥ ४२ कांडानुसमयेनेति ॥ कांडानुसमयः पदार्थानुसमयश्चेतिविधौ प्रकारद्वयम् ॥ एकस्यपूजा काण्डंसमाप्यापरार्चनंकाण्डानुसमयः ॥ प्रतिपदार्थंसर्वेषांपूजापदार्थानुसमयः ॥ ततोऽत्रकांडानुसमयेनपूजा ॥ आवाहनमुद्रयाआवाहनम् ॥ सायथा--'अनामामूलसंलग्नांगुष्ठाग्रांजलिरीरिता॥ देवाह्वानकरीचैषा मुद्रावाहनसं

रविंशिवांशिवंमध्येगणेशश्चेच्छिवंशिवाम् ॥ रविं विष्णुर्वौमध्येविघ्नाजनगजेश्वरान् ॥ ४० ॥ भवा
न्यांमध्यसंस्थायामीशविघ्नार्कमाधवान्॥हरेमध्यगतेसूर्यगणेशागिरिजाच्युतान् ॥ ४१ ॥ संपूज्या
दौमध्यगतंगणेशादिततोयजेत् ॥गणेशेमध्यसंस्थेतुपूजयेद्भास्करादितः ॥ ४२ ॥कांडानुसमयेनात्र
पूजाप्रोक्तामनीषिभिः॥विधायावाहनंचेत्थमावाहन्यातुमुद्रया ॥ ४३ ॥ संस्थापिन्यास्थापयेत्तुमू
लंतेश्लोकमुच्चरन्॥तवेयंमहिमामूर्त्तिस्तस्यांत्वांसर्वगंप्रभो ॥ ४४ ॥भक्तिस्नेहसमाकृष्टंदीपवत्स्थाप
याम्यहम्॥ऊहःकार्य्योभवान्यादौश्लोकेष्वावाहनादिषु॥४५॥ मूलश्लोकौपठन्कुर्य्यादासनंचोपवे
शनम्॥सर्वांतर्यामिणेदेवसर्वबीजमयंशुभम् ॥ ४६ ॥ स्वात्मस्थायपरंशुद्धमासनंकल्पयाम्यहम्॥
अस्मिन्वरासनेदेवसुखासीनोऽक्षरात्मक ॥ ४७ ॥

ज्ञिका' इति॥ आवाहनमुद्राधोमुखी-संस्थापनी ॥ ४३॥४४॥ आत्मसंस्थामजांशुद्धामित्याद्यूहः॥४५॥ ४६ ॥४७ ॥

॥ ४८ ॥ ४९ ॥ स्वमुद्रयासन्निधानमुद्रया ॥ उत्तानांगुष्ठौमुष्टी-संनिधानमुद्रा ॥ स्वमुद्रयासान्निरोधिन्या ॥ सो
क्ता ॥ ५० ॥ मुद्रयासंमुखीकारिण्याउत्तानौमुष्टी-संमुखीकरणी ॥ ५१ ॥ ५२ ॥ हृद्यंजलिनिबंधनं-प्रार्थनीमुद्रा ॥



प्रतिष्ठितोभवेशत्वंप्रसीदपरमेश्वर ॥ मूलंश्लोकंततःकुर्य्यात्सन्निधानंस्वमुद्रया ॥ ४८ ॥ अनन्यात
वदेवेशमूर्तिंशक्तिरियंप्रभो ॥ सान्निध्यंकुरुतस्यांत्वंभक्तानुग्रहतत्परः ॥ ४९ ॥ पठन्मूलंतथाश्लो
कंसन्निरुध्यात्स्वमुद्रया ॥ आज्ञयातवदेवेशकृपांभोधेगुणांबुधे ॥ ५० ॥ आत्मानंदकतृप्तंत्वांनिरु
णध्मिपितर्गुरो॥मुद्रयासंमुखीकुर्य्यान्मूलंश्लोकंचसंपठन्॥५१॥अज्ञानादुर्मनस्त्वाद्वावैकल्यात्सा
धनस्यच ॥ यदपूर्णंभवेत्कृत्यंतदप्यभिमुखोभव॥५२॥कुर्वीतमूलश्लोकाभ्यांप्रार्थन्यामुद्रयार्चने॥
दृशापीयूषवर्षिण्यापूरयन्यज्ञविष्टरम्॥५३॥मूर्तौवायज्ञसंपूतैःस्थिरोभवमहेश्वर॥न्यसेत्षडंगंदेवांगे
सकलीकरणंसुधीः ॥ ५४ ॥ मूलंश्लोकंपठन्कुर्य्याद्वगुंठंस्वमुद्रया॥ अभक्तवाङ्मनश्चक्षुःश्रोत्रदूरा
मितद्युते ॥ ५५ ॥ स्वतेजःपंजरेणाशुवेष्टितोभवसर्वतः॥ गोमुद्रयामृतीकृत्यविदध्यात्परमाकृतिम्
॥५६॥ महामुद्रांविरचयंस्ततःस्वागतमाचरेत्॥मूलमंत्रंतथाश्लोकंपठंस्तद्गतमानसः ॥ ५७ ॥

॥ ५३ ॥ ५४ ॥ स्वमुद्रयाऽवगुंठिन्या ॥ सोक्ता ॥ ५५ ॥ गोमुद्रोक्ता ॥ ५६ ॥ महामुद्राप्युक्ता ॥ ५७ ॥

॥ ५८ ॥ ५९ ॥ पाद्यद्रव्याण्याह ॥ श्यामाकेति॥ ६० ॥ ६१ ॥ आचमनीयद्रव्याण्याह ॥ लवंगेति ॥ कंकोलंसुगं

यस्यदर्शनमिच्छंतिदेवाःस्वाभीष्टसिद्धये ॥ तस्मैतेपरमेशायस्वागतंस्वागतंचमे॥५८॥ ततःसुस्वा
गतंकुर्य्यान्मूलश्लोकौसमुच्चरन् ॥कृतार्थोनुगृहीतोस्मिसफलंजीवितंमम॥५९॥आगतोदेवदेवेश
सुस्वागतमिदंपुनः ॥श्यामाकविष्णुक्रांताब्जदूर्वाःपाद्यजलेक्षिपेत्॥६०॥मूलश्लोकनमोमंत्रैःपाद्यं
पादांबुजेऽर्पयेत्॥ यद्भक्तिलेशसंपर्कात्परमानंदविग्रहम् ॥६१ ॥ तस्मैतेचरणाब्जायपाद्यंशुद्धायक
ल्पये॥लवंगजातिकंकोलंप्रक्षिप्याचमनीयके॥६२॥दद्यादाचमनंवक्त्रेमूलश्लोकसुधाक्षरैः॥वेदाना
मपिवेद्यायदेवानांदेवतात्मने ॥ ६३ ॥ आचामंकल्पयामीशशुद्धानांशुद्धिहेतवे ॥ अर्घ्यपात्रेक्षिपे
द्दूर्वास्तिलदर्भाग्रसर्षपान्॥६४॥ यवपुष्पाक्षतान्गंधंतेनार्घ्यंमूर्ध्निचाचरेत्॥मूलश्लोकशिरोमंत्रैर्देव
स्यमनुवित्तमः ॥६५॥ तापत्रयहरंदिव्यंपरमानंदलक्षणम् ॥ तापत्रयविनिर्मुक्तवार्घ्यंकल्पयाम्य
हम्॥६६॥ पात्रेतुमधुपर्कस्यदध्याज्यमधुचाक्षिपेत्॥मूलश्लोकसुधामंत्रैर्दद्यात्तंवदनेप्रभोः ॥ ६७ ॥

धद्रव्यंमरिचोपमम् ॥ ६२ ॥ ६३ ॥ ६४ ॥ शिरोमंत्रः स्वाहा ॥ ६५ ॥ ६६ ॥ सुधामंत्रो वम् ॥ ६७ ॥

॥ ६८ ॥ ६९ ॥ स्नानवस्त्रोपवीतनैवेद्येषुदत्तेष्वाचमनीयंदद्यात् ॥ ७० ॥ ७१ ॥७२ ॥ उभयंमूलश्लोकौ ॥ ७३ ॥

सर्वकालुष्यहीनायपरिपूर्णसुखात्मने ॥ मधुपर्कमिदंदेवकल्पयामिप्रसीदमे ॥६८॥ पुनराचमनंद
द्यान्मूलश्लोकांतरंपठन्॥उच्छिष्टोप्यशुचिर्वापियस्यस्मरणमात्रतः॥६९॥शुद्धिमाप्नोतितस्मैतेपुन
राचमनीयकम्॥ स्नानवस्त्रोपवीतांतेनैवेद्यांतेपितत्स्मृतम्॥ ७०॥ पाद्यादिवस्त्वभावेतुतत्स्मरन्नक्षता
न्क्षिपेत् ॥ गंधतैलंततोदद्यान्मूलश्लोकंपठन्सुधीः ॥ ७१॥ स्नेहगृहाणस्नेहेनलोकनाथमहाशय॥
सर्वलोकेषुशुद्धात्मन्ददामिस्नेहमुत्तमम् ॥७२॥ हरिद्राद्यैस्तमुद्वर्त्यस्नापयेदुभयंपठन् ॥ परमानंदबो
धाब्धिनिमग्ननिजमूर्त्तये ॥७३॥ सांगोपांगमिदंस्नानंकल्पयाम्यहमीशते ॥ ततःसहस्रंशंखेनशतंवा
शक्तितोपिवा ॥७४॥ गंधयुक्तोदकैरीशमभिषिंचेन्मनुंस्मरन्॥ पठन्मूलंततःश्लोकौदद्याद्वस्त्रोत्तरी
यके॥७५॥मायाचित्रपटच्छन्ननिजगुह्योरुतेजसे ॥ निरावरणविज्ञानवासस्तेकल्पयाम्यहम्॥ ७६॥
यमाश्रित्यमहामायाजगत्संमोहिनीसदा॥तस्मैतेपरमेशायकल्पयाम्युत्तरीयकम् ॥ ७७॥ पीतंवि
ष्णौसितंशंभौरक्तंविघ्नार्कशक्तिषु॥सच्छिद्रंमलिनंजीर्णंत्यजेत्तैलादिदूषितम् ॥ ७८ ॥

॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥

॥ ७९ ॥ ८० ॥ ८१ ॥ पूर्ववन्मूलश्लोकौपठन्गंधमर्पयेत् ॥ ८२ ॥ ८३ ॥ अंगुष्ठौकनिष्ठामूललग्नौ-गंधमुद्रा ॥८४ ॥
॥ ८५ ॥ तर्जन्यावंगुष्ठमूललग्ने-पुष्पमुद्रा ॥ पुष्पाध्यायमाह ॥ अक्षतानित्यादिना ॥ अक्षतान्तं तुलादीन् ॥तिल

उपवीतंभूषणानिप्रयच्छेदुभयंपठन् ॥यस्यशक्तित्रयेणेदंसंप्रोतमखिलंजगत् ॥ ७९ ॥ यज्ञसूत्रा
यतस्मैतेयज्ञसूत्रंप्रकल्पये॥स्वभावसुंदरांगायनानाशक्त्याश्रयायते ॥ ८० ॥ भूषणानिविचित्राणि
कल्पयाम्यमरार्चितम्॥मूलमंत्रेणपुटितमेकैकंमातृकाक्षरम् ॥८१ ॥ विन्यसेद्देवतांगेषुयोगोयंलोक
मोहनः॥कनिष्ठयापात्रसंस्थंपूर्ववद्गंधमर्पयेत् ॥ ८२ ॥ परमानंदसौभाग्यपरिपूर्णदिगंतरम् ॥ गृहा
णपरमंगंधंकृपयापरमेश्वर ॥ ८३ ॥ ततःकनिष्ठांगुष्ठाभ्यांगंधमुद्रांप्रदर्शयेत्॥मूलंश्लोकंपठन्नानापु
ष्पाणिविनिवेदयेत् ॥ ८४ ॥ तुरीयवनसंभूतंनानागुणमनोहरम् ॥ अमंदसौरभंपुष्पंगृह्यतामिदमुत्त
मम् ॥८५ ॥ तर्ज्जन्यंगुष्ठयोगेनपुष्पमुद्रांप्रदर्शयेत्॥अक्षतानर्कधत्तूरौविष्णौनैवार्पयेत्सुधीः॥८६ ॥
बंधूकंकेतकींकुंदंकेसरंकुटजंजयाम्॥शंकरेनार्पयेद्विद्वान्मालतींयूथिकामपि ॥ ८७ ॥

कोपर्य्यर्पणेनदोषः ॥ ८६ ॥ ८७ ॥

शक्तौदूर्वादयोनिषिद्धाः महालक्ष्म्यास्तुदूर्वाप्रशस्ता ॥ मालूरंबिल्वम् ॥ तगरंगंधतगरम् ॥ तगरइतिकान्यकुब्ज भाषायाम् ॥जातुकदाचिदपि ॥ ८८ ॥ निषिद्धान्याह ॥ निर्गंधमिति ॥ ८९ ॥ तुच्छसंस्पृष्टंशरीरलग्नम् ॥ स्वाधि कासितंबलादात्मनाविकासितम् ॥ ९० ॥ पर्युषितंदिनांतरानीतम् ॥ सुमंपुष्पम् चंपककमलयोः कलिकाअपि

शक्तौदूर्वार्कमंदारान्मालूरंतगरंरवौ ॥ विनायकेतुतुलसींनार्पयेज्जातुचिद्बुधः॥८८॥श्वेतंपीतंहरेरि

ष्टंरक्तंरविगणेशयोः॥निर्गंधंकेशकीटादिदूषितंचोग्रगंधकम् ॥८९ ॥ मलिनंतुच्छसंस्पृष्टमाघ्रातंस्व

विकासितम्॥अशुद्धभाजनानीतंस्नात्वानीतंचयाचितम् ॥ ९० ॥ शुष्कंपर्युषितंकृष्णंभूमिगंनार्प

येत्सुमम्॥चंपकंकमलंत्यक्त्वाकलिकामपिवर्ज्जयेत्॥ ९१ ॥ कुरंटकंकांचनारंवर्जयेद्बृहतीयुगम् ॥

पुष्पंपत्रंफलंदेवेनप्रदद्यादधोमुखम् ॥ ९२ ॥ पुष्पांजलौनतद्दोषस्तथापर्युषितस्यच ॥ तुलसीबकु

लोवृक्षश्चंपकश्चसरोजिनी ॥९३ ॥ बिल्वकल्हारदमनास्तथामरुबकःकुशः॥दूर्वाहिवल्ल्यपामार्गवि

ष्णुक्रांतामुनिद्रुमाः ॥ ९४ ॥

प्रशस्ताः ॥ ९१ ॥ पुष्पपत्रफलान्यधोमुखानिनार्पयेद्यथोत्पन्नंतथैवार्पयेदित्यर्थः ॥ ९२ ॥ पुष्पांजलौ अधोमुखपर्यु षितयोर्नदोषः ॥ ९३ ॥ अहिवल्लीनागवल्ली ॥ मुनिद्रुमोऽगस्त्यः ॥ ९४ ॥

१–२ तत्रपीतेकुरंटकइत्यमरः ।

धात्री आमलकी ॥ तुलस्यादीनांपत्रैरपिपूजा ॥ जम्ब्वादीनांपत्रैरपिफलैश्च ॥ ९५ ॥ रसालः आम्रः ॥ ९६ ॥
॥ ९७ ॥ दिक्पहेत्यंतमिति ॥ दिक्पालायुधपर्यंतमावरणपूजा ॥ इदंसांप्रदायिकम् ॥ क्वचिदंगपूजातःप्रागपिवज्रा
धूर्ध्वमप्यावरणानिसंति ॥ अंगपूजास्थानमाह ॥ अग्नीति ॥ ९८ ॥ अंगदेवताध्यानमाह ॥ वामलोचनाःस्त्री

धात्रीयुतानामेतेषांपत्रैःकुर्य्यात्सुरार्चनम् ॥ जंबूदाडिमजंबीरतिंतिणीबीजपूरकाः ॥ ९५॥ रंभाधा
त्रीचबदरीरसालःपनसोऽपिच ॥ एषांफलैर्यजेद्देवंतुलसीतुहरेःप्रिया॥ ९६ ॥ सुवर्णपुष्पंतुलसीनैव
निर्माल्यतांव्रजेत् ॥ पुष्पपूजांविधायेत्थंकुर्य्यादावरणार्चनम् ॥९७॥अंगादिदिक्पहेत्यंतंततोधूपा
दिकंचरेत् ॥ अग्निनैर्ऋतिवाय्वीशकोणेषुहृदयंशिरः॥९८॥ शिखांकवचमाध्यनेत्रमग्रे पूजयेत्॥
दिक्ष्वस्त्रमंगदेव्यस्ताध्यातव्यावामलोचनाः॥ ९९॥सिताश्वेतासितास्तिस्रोरक्ताइष्टाभ .. न्विताः॥
स्वदिक्षुप्रयजेद्दिक्पाञ्जातिहेत्यादिसंयुतान् ॥ १०० ॥

रूपाः ॥ ९९ ॥ तिस्रःकवचनेत्रास्त्ररूपाः रक्ताइष्टाभयान्वितावराभययुताः ॥ स्वदिक्षुप्रसिद्धासु दिक्पालानिंद्रा
दीन् ॥ जातिहेत्यादिसंयुतान् ॥ जातयःसुरादयःहेतयोवज्रादयः ॥ आदिशब्दाद्वाहनशक्ती ॥ १०० ॥

१ फलपूरोबीजपूरोरुचकोमातुलिंगकेइत्यमरः ।

प्रणवादीनि यानिनिजबीजानींद्रादिबीजानिपूर्वमुक्तानिलंरंमंक्षंवंयंसंहंह्रींआंइत्यादीनि ॥ प्रयोगमाह ॥ तार
मिति॥१०१॥१०२॥१०३॥आद्येति॥अधिपतयइत्येतस्मात्पूर्वस्यामुकपदस्यस्थानेसुरादिजातीर्वदेत्॥१०४॥१०५॥
बीजादीतिदिक्पालाश्चपूर्वमुक्ताः ॥ यातुतोयपयोर्निर्ऋतिवरुणयोः ॥ कंब्रह्माणम्॥ यथा-ॐलंइंद्रायसुराधिपतये

तारादिनिजबीजाद्यांस्तत्प्रयोगोऽधुनोच्यते ॥तारंबीजमथेन्द्रायामुकाधिपतयेततः॥१०१॥ सायु
धायसवाहांतेनायसांतेपरीतिच ॥ वारायांतेसशक्तीतिकायामुकपदंततः ॥ १०२ ॥पार्षदायनमो
तोऽयंदिक्पालानांमनुःस्मृतः ॥ इंद्रायेतिपदस्थानेवह्न्यादिपदमुच्चरेत् ॥१०३॥ आद्यामुकपदस्था
नेक्रमाज्जातीर्वदेत्सुधीः ॥ सुरतेजःप्रेतरक्षःसलिलप्राणतारकाः ॥१०४॥ भूतानिलोकाविज्ञेयाआ
शापालकजातयः ॥ पार्षदात्पूर्वममुकस्थानेस्यात्स्वेष्टदेवता ॥१०५॥ बीजानिपूर्वमुक्तानिवाहना
न्यायुधान्यपि ॥ यातुतोयपयोर्मध्येऽनंतंपूर्वेशयोस्तुकम् ॥ १०६ ॥

सायुधायसवाहनायसपरिवारायसशक्तिकायामुकेष्टदेवतापार्षदायनमः॥ॐरंअग्नयेतेजोधिपतये०ॐमंयमायप्रेता
धिपतये० ॐक्षंनैर्ऋतयेरक्षोऽधिपतये०ॐवंवरुणायजलाधिपतये०ॐयंवायवेप्राणाधिपतये०ॐसंसोमायनक्षत्राधिप
तये० ॐहंईशानायभूताधिपतये० ॐह्रींअनंतायनागाधिपतये० ॐआंब्रह्मणेलोकाधिपतये०इतिप्रयोगः ॥१०६॥

॥ १०७ ॥ पुष्पपाथसीपुष्पोदकेदत्त्वा ॥ धूपमाह ॥ धूपपात्रेति॥ पुरोगुग्गुलुः ॥ आदिशब्दात् घृतकर्पूरशर्कराः ॥
अग्न्यावगुर्वादिप्रक्षिप्यफडिति प्रोक्ष्यनमइ तिपुष्पंसमर्प्यवामतर्जन्यासंस्पृश्यमूलश्लोकांतेसांगायसपरिवारायरामाय

प्रत्यावृत्तिक्षिपेद्देवे पुष्पंमंत्रमिमंजपन्॥अभीष्टसिद्धिंमेदेहिशरणागतवत्सल ॥१०७॥ भक्त्यासमर्पयेतुभ्यमिदमावरणार्चनम्॥आह्वानाद्युपचारेषुप्रत्येकंपुष्पपाथसी॥ १०८ ॥दत्त्वाप्रक्षाल्यचकरमुपचारांतरंचरेत् ॥ धूपपात्रस्थितांगारेक्षिप्त्वागुरुपुरादिकम् ॥ १०९ ॥ पात्रमस्त्रेणसंप्रोक्ष्यहृदापुष्पंसमर्पयेत् ॥ संस्पृशन्वामतर्जन्यामूलश्लोकंचसंपठेत् ॥११०॥ वनस्पतिरसोपेतोगंधाढ्यःसुमनोहरः ॥ आघ्रेयःसर्वदेवानांधूपोऽयंप्रतिगृह्यताम्॥ १११ ॥ सांगायसपरीत्यंतेवारायङेन्तदेवता॥धूपंसमर्पयामीतिनमोंतंमंत्रमुच्चरन् ॥ ११२ ॥ शंखांबुप्रक्षिपेद्भूमौधूपमुद्रांप्रदर्शयेत्॥ तर्जन्यंगुष्ठयोगेनघंटामर्चेत्स्वमंत्रतः ॥ ११३ ॥

धूपंसमर्पयामीतिशंखोदकंक्षिपेत् ॥ तर्जनीमूलयोरंगुष्ठयोगो–धूपमुद्रा ॥ स्वमन्त्रतः घंटामंत्रतः ॥ १०८ ॥ १०९ ॥
॥ ११० ॥ १११ ॥११२ ॥ ११३ ॥

॥ ११४॥ विशेषमाह ॥ धूपयेदिति ॥ ईदृशंदीपदानमपि ॥ प्रोक्षणप्रयोगश्चतद्वत् ॥११५॥ वामेति ॥११६॥११७॥
मध्यमामूलयोरंगुष्ठयोगो–दीपमुद्रा ॥ दीपदानंनेत्रप्रदेशे ॥ वर्तीनांभूरिपक्षेबहुत्वपक्षेऽविषमास्त्याज्याः ॥

जयध्वनिमंत्रमातःस्वाहांतःसदशाक्षरः ॥ वादयन्वामहस्तेनकीर्तयन्देवतागुणान्॥ ११४ ॥ धूपये
दक्षहस्तेनदेवतानाभिदेशतः॥जलंपुष्पांजलिंदद्याद्दीपदानमपीदृशम्॥ ११५ ॥वाममध्यमयास्पर्शो
मूलश्लोकस्यकीर्तनम्॥सुप्रकाशोमहादीपःसर्वतस्तिमिरापहः॥११६॥ सबाह्याभ्यंतरंज्योतिर्दीपोऽ
यंप्रतिगृह्यताम्॥धूपस्थानेदीपपदंमध्यमांगुष्ठयोगतः॥११७॥दीपमुद्रादर्शनंचतद्दानंनेत्रदेशतः॥भूरि
पक्षेतुवर्तीनांविषमावर्तिकामताः॥११८ ॥ घृतदीपोदक्षिणेस्यात्तैलदीपस्तुवामतः॥सितवर्तियुतोदक्षे
वामांगेरक्तवर्तिकः॥११९॥अत्रान्यद्धूपवज्ज्ञेयंततोनैवेद्यमर्पयेत्॥स्वर्णादिभाजनेसाज्यंपायसंशर्करा
दिकम्॥१२०॥परिवेष्ययथाशक्तिप्रोक्षेत्कैरस्त्रमंत्रितैः॥चक्रमुद्रामथारच्यप्रोक्षेत्तन्मंत्रितैर्जलैः ॥१२१॥

॥ ११८ ॥ सितवर्तियुततैलदीपोदक्षिणतः ॥ रक्तवर्तियुतोघृतदीपोवामतइत्यर्थः ॥ ११९ ॥ अन्यज्जलप्रक्षेपादि ॥
॥ १२० ॥ कैर्जलैः ॥ चक्रमुद्रोक्ता ॥ वायुबीजेनद्वादशवारंमंत्रितैर्जलैस्तंनैवेद्यंप्रोक्षेत् ॥ १२१ ॥

वायुबीजोत्थमारुतैर्नैवेद्यदोषंसंशोष्यदक्षिणकरेरंबीजंविचिंत्यदक्षकरपृष्ठेवामकरंदत्त्वानैवेद्यंप्रदर्श्याग्निबीजोत्थाग्नि
नादोषंदग्ध्वावामकरेवंबीजंध्यात्वातत्पृष्ठेदक्षहस्तंदत्त्वानैवेद्यंप्रदर्श्यामृतबीजोत्थामृतप्लुतंस्मृत्वामूलेनप्रोक्ष्यतत्स्पृ
ष्ट्वाऽष्टवारंमूलंप्रजप्यधेनुमुद्रांप्रदर्श्यसंपूज्यदेवेपुष्पंदत्त्वादेवस्योद्गतंतेजःस्मृत्वावामांगुष्ठस्पृष्टंनैवेद्यंसजलंदक्षहस्तेनमू

वायुबीजेनार्कवारंततस्तज्जातमारुतैः॥नैवेद्यदोषंसंशोष्यचिंतयेद्दक्षिणेकरे ॥ १२२॥ अग्निबीजंत
स्यपृष्ठेवामंकरतलंन्यसेत्॥तंदर्शयित्वानैवेद्येतदुत्थेनाग्निनाखिलम् ॥१२३॥ नैवेद्यदोषंसंदह्यध्याये
द्वामकरेऽमृतम् ॥तत्पृष्ठेदक्षिणंहस्तंकृत्वातत्रप्रदर्शयेत् ॥१२४॥ आप्लावितस्मरेद्भोज्यंबीजोत्थामृत
धारया ॥ प्रोक्ष्यमूलेनतत्स्पृष्ट्वाऽष्टशोमूलमनुंजपन् ॥ १२५ ॥ दर्शयित्वाधेनुमुद्रांगंधपुष्पैस्तदर्च
येत् ॥ देवेपुष्पांजलिंदत्त्वातेजोदेवमुखोत्थितम् ॥१२६॥ विचिंत्यवामांगुष्ठेनस्पृशेन्नैवेद्यभाजनम्॥
दक्षहस्तेजलंधृत्वामूलश्लोकंशिरःपठेत् ॥ १२७ ॥

लश्लोकसहितस्वाहांतेसांगायेतिपठन्नैवेद्यमुद्रांप्रदर्शयेत् ॥ अनामामूलयोरंगुष्ठयोगोनैवेद्यमुद्रा ॥ १२२ ॥ १२३॥
॥ १२४ ॥ १२५ ॥ १२६ ॥ १२७ ॥

॥ १२८ ॥ १२९ ॥ सपुष्पकराभ्यांपात्रमुद्धरन्निवेदयामीतिपठेत् ॥ १३० ॥ पद्मामोवामहस्तो-ग्रासमुद्रा ॥ १३१॥
प्राणादिमुद्राआह ॥ कनिष्ठेति ॥ १३२ ॥ चतुर्थिकाव्यानमुद्रा ॥ १३३ ॥ सर्वांगुलीभिःसमानमुद्रा ॥ द्विठंस्वा
हा ॥ ॐप्राणायस्वाहेत्यादि० ॥ १३४ ॥



सत्पात्रसिद्धंसुहविर्विविधानेकभक्षणम् ॥ निवेदयामिदेवेशसानुगायगृहाणतत् ॥१२८॥ सांगायेत्यादिकंप्रोच्यजलमुत्सृज्यभूतले ॥ नैवेद्यमुद्रामंगुष्ठानामिकाभ्यांप्रदर्शयेत् ॥ १२९॥ सपुष्पाभ्यांकराभ्यांत्रिःप्रोद्धरन्भक्ष्यभाजनम् ॥ निवेदयामिभवतेजुषाणेदंहविर्हरे ॥१३०॥ षोडशार्णानिमान्प्रोच्यग्रासमुद्रांप्रदर्शयेत् ॥ वामहस्तेनपद्माभांप्राणाद्यांदक्षिणेनतु ॥१३१ ॥ कनिष्ठानामिकांगुष्ठैर्मुद्राप्राणस्यकीर्तिता ॥ तर्जनीमध्यमांगुष्ठैरपानस्यतुसा स्मृता ॥ १३२ ॥ अनामामध्यमांगुष्ठैरुदानस्यचमुद्रिका ॥ तर्जन्यनामामध्याभिःसांगुष्ठाभिश्चतुर्थिका ॥ १३३ ॥सर्वाभिःस्तुसमानस्यप्राणाद्यान्ङेद्विठान्वितान् ॥ तारपूर्वाञ्जपन्मुद्राःप्राणादीनांप्रदर्शयेत् ॥ १३४ ॥

जवनिकातिरस्कारिणी तांधृत्वाशालेर्भक्तंब्रह्मेशाद्यैरितिपद्यद्वयंपठेत् ॥ यथा—'ब्रह्मेशाद्यैःपरितउरुभिःसूपविष्टैःसमेतैर्लक्ष्म्याशिंजद्वलयकरयासादरंवीज्यमानः ॥ लीलानर्मप्रहसनमुखैर्व्यग्नुवन्पंक्तिमध्यंभुंक्तेपात्रेकनकघटितेषड्रसंश्रीरमेशः ॥ १ ॥' 'शालेर्भक्तंसुपक्वंशिशिररसितंपायसापूपसूपंलेह्यंपेयंचचोष्यंसितममृतफलंपूरिकाद्यंसुखाद्यम् ॥ आज्यंप्राज्यंसभोज्यंनयनरुचिकरंराजिकैलामरीचस्वाद्वीयःशाकराजीपरिकरममृताहारजोषंजुषस्व' ॥२॥ इति

ततोजवनिकांकृत्वाब्रह्मेशाद्यैरिदंपठेत् ॥ पद्यंशालेर्भक्ता[1]दिभिमूलमंत्रंचसततया ॥ १३५ ॥ प्रतिसीरामपाकृत्यदद्याच्छ्लोकंपठञ्जलम् ॥ समस्तदेवदेवेशसर्वतृप्तिकरंपरम् ॥ १३६ ॥ अखंडानंदसंपूर्णंगृहाणजलमुत्तमम् ॥ स्थंडिलेग्निमुपाधायवैश्वदेवक्रियांचरेत् ॥ १३७ ॥ मूलेनवीक्ष्यचास्त्रेणकृत्वाप्रोक्षणताडने ॥ कुशैस्तद्वर्मणाभ्युक्ष्यपूर्ववत्स्थापयेच्छुचिम् ॥ १३८ ॥ तन्मंत्रेणतमभ्यर्च्याहूयतत्रेष्टदेवताम् ॥ पूजयेद्गंधपुष्पैस्तांमहाव्याहृतिभिस्ततः ॥ १३९ ॥ हुत्वाव्यस्तसमस्ताभिराहुतीनांचतुष्टयम् ॥ अत्रैर्मूलेनजुहुयात्पंचविंशतिसंख्यया ॥ १४० ॥

पद्यद्वयम् ॥ रमेशपदस्थानेदेवताभेदेन्यदेवतानामूहःकार्यः ॥ लक्ष्म्येतिपदस्थानेपिगौर्यापार्वत्येत्यादिपदसन्निवेशऊह्यः ॥ १३५ ॥ प्रतिसीरांजवनिकाम् ॥ १३६ ॥ १३७ ॥ शुचिंवह्निं पूर्वं प्रथमतरंगोक्तविधिना ॥ १३८ ॥ तन्मंत्रेणवैश्वानरमंत्रेणपूर्वोक्तेन ॥ १३९ ॥ १४० ॥

---

१ शालेरितिजातिनिर्देशः ।

॥ १४१ ॥ १४२ ॥ उच्छिष्टभोजिनआह ॥ विश्वक्सेनइत्यादिना विकर्तनस्यरवेः ॥ १४३ ॥ १४४ ॥ सार्धश्लोक

पुनर्व्याहृतिभिर्हुत्वामूर्तौदेवंनियोजयेत्॥वह्निंविसृज्यदेवायदद्यादाचमनोदकम् ॥१४१॥तेजःसंयो
ज्यदेवस्यनिर्गतंदेववक्त्रतः ॥नैवेद्यांशंतदुच्छिष्टभोजिनेविनिवेदयेत् ॥१४२॥ विष्वक्सेनोहरेरुक्त
श्चंडेश्वरउमापतेः ॥विकर्तनस्यचंडांशुर्वक्रतुंडोगणेशितुः ॥ १४३ ॥ शक्तेरुच्छिष्टचांडालीस्मृताउ
च्छिष्टभोजिनः ॥ ततोलवणमुत्तार्य्यंकुर्य्यादारार्तिकंसुधीः ॥१४४॥ अथोनिवेद्यतांबूलंदर्शयेच्छत्र
चामरे॥पठेद्देवमनाभूत्वासार्द्धश्लोकचतुष्टयम्॥१४५॥बुद्धिःसवासनाक्लृप्तादर्पणंमंगलानिच॥मनोवृ
त्तिर्विचित्रातेनृत्यरूपेणकल्पिता ॥१४६॥ ध्वनयोगीतरूपेणशब्दवाद्यप्रभेदतः॥ छत्राणिनवपद्मा
निकल्पितानिमयाप्रभो ॥१४७॥ सुषुम्णाध्वजरूपेणप्राणाद्याश्चामरात्मना॥अहंकारोगजत्वेनवेगः
क्लृप्तोरथात्मना ॥१४८॥ इंद्रियाण्यश्वरूपाणिशब्दादिरथवर्त्मना॥मनःप्रग्रहरूपेणबुद्धिःसारथिरू
पतः॥१४९॥सर्वमन्यत्तथाक्लृप्तंतवोपकरणात्मना॥श्लोकानेतान्पठित्वातुमूलमंत्रमनन्यधीः॥१५०॥

चतुष्टयंशिवोक्तम् ॥ १४५ ॥ तदेवाह ॥ बुद्धिरिति ॥ १४६ ॥ १४७ ॥ १४८ ॥ १४९ ॥ १५० ॥

मंत्रेणगुह्यातिगुह्येत्यादिना तंजपंदेवदक्षकरेर्घजलेनार्पयेत् ॥ १५१ ॥ १५२ ॥ १५३ ॥ प्रदक्षिणासंख्यामाह ॥
अजेति ॥ अजेविष्णौवेदाश्चतस्रःप्रदक्षिणाः ॥ईशेर्द्धम् ॥ शक्तावेका ॥ गणेशस्यातिस्रः ॥ रवेःसप्त ॥१५४॥१५५ ॥
ब्रह्मार्पणमंत्रमाह ॥ इतइति ॥ बकः॥शः मेषोऽनंतान्वितः नः आयुतः श्रा ॥ यथा—ॐइतःपूर्वंप्राणबुद्धिदेहधर्मा

यथाशक्तिजपित्वातंमंत्रेणविनिवेदयेत्॥क्षिपन्नर्घस्यपानीयंदेवतादक्षिणेकरे ॥१५१॥ गुह्यातिगुह्य
गोप्तात्वंगृहाणास्मत्कृतंजपम्॥ सिद्धिर्भवतुमेदेवत्वत्प्रसादात्त्वयिस्थितिः॥ १५२ ॥ कीर्तितःश्लो
करूपोयंमंत्रोजपनिवेदने ॥दत्त्वापराङ्मुखंचार्घ्यंपुष्पैःशंखंप्रपूजयेत् ॥१५३॥ दंडवत्प्रणिपत्येशं
देवेकुर्य्यात्प्रदक्षिणाः ॥ अजेशशक्तिगणपभास्कराणांक्रमादिमाः ॥ १५४ ॥ वेदार्द्धचंद्रवह्न्यद्रिसं
ख्याःस्युःसर्वसिद्धये॥स्तुत्वाब्रह्मार्पणाख्येनमनुनाऽत्मानमर्पयेत् ॥ १५५ ॥ इतःपूर्वंप्राणबुद्धिदेह
धर्माधिकारतः॥ जाग्रत्स्वप्नसुषुप्त्यंतेऽवस्थासुमनसावदेत् ॥ १५६ ॥ वाचाचहस्ताभ्यांपद्भ्यामुदरे
णशिश्नतस्ततः॥ मेषोनंतान्वितोयत्स्मृतंयदुक्तंचयत्कृतम् ॥१५७॥ तत्सर्वंप्रोच्यब्रह्मार्पणंभवत्व
ग्निवल्लभा॥मांमदीयंचसकलंहरयेतेसमर्पये ॥ १५८ ॥

धिकारतो जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्नेन यत्स्मृतंयदुक्तं यत्कृतं तत्सर्वं
ब्रह्मार्पणं भवतु स्वाहा मां मदीयं च सकलं हरये ते समर्पये ॐ तत्सदिति ॥ १५६ ॥ १५७ ॥ १५८ ॥

तारस्तत्सदितिप्रोक्तोब्रह्मार्पणमनुर्बुधैः॥प्रणवादिर्व्यशीत्यर्णोदेवतात्मसमर्पणे ॥१५९॥संहारमुद्रया
देवंसंहरेद्धृदयेनिजे॥अन्यस्मिन्दैवतेकार्य्यऊहोहरिपदेबुधैः॥१६० ॥एवंसंपूज्यदेवेशंब्रह्मयज्ञंसमा
चरेत् ॥ योगक्षेमंततःकृत्वामध्याह्नस्नानमाचरेत् ॥ १६१॥स्मार्ततांत्रंचपूर्वोक्तंसंध्यातर्पणमप्यथ॥
संपूज्यपूर्ववद्देवंवैश्वदेवादिकंचरेत् ॥१६२॥देवप्रसादंभुंजीतसंभोज्यब्राह्मणोत्तमान्॥आचम्यदेवंसं
स्मृत्यपुराणंशृणुयात्सुधीः ॥१६३॥संध्याहोमंचनिर्वृत्यदेवंसंपूज्यपूर्ववत् ॥शयीतशुद्धशय्यायांमु
क्त्वाल्पंदेवतांस्मरन्॥१६४॥ एवंयःपूजयेद्देवंत्रिकालंधर्ममाचरन् ॥नजातुवैरिभिर्दुःखैःपीड्यतेहरि
रक्षितः ॥ १६५ ॥ त्रिकालंपूजनाशक्तैःकार्य्यंद्विःसकृदप्यदः ॥विशेषेणयजेद्देवंसंक्रांत्यादिषुपर्वसु
॥१६६॥दशभिःपंचभिर्वापिपूजयेदुपचारकैः॥ अशक्तःकारयेत्पूजांदद्यादर्चनसाधनम् ॥१६७ ॥

॥ १५९ ॥ संहारमुद्रोक्ता ॥ हरयेइत्यत्रईशानायगौर्यैइत्याद्यूहः ॥ १६० ॥ ब्रह्मयज्ञंवेदाध्ययनम् ॥ अलब्धस्यला
भोयोगः ॥ लब्धस्यपरिपालनंक्षेमः ॥ १६१ ॥ तांत्रंस्नानम् ॥ पूर्वोक्तं प्रथमतरंगोक्तम् ॥ १६२ ॥ १६३ ॥ १६४ ॥
॥ १६५ ॥ अदःपूजनम् ॥ १६६ ॥ दशभिरुपचारैरावाहनासनस्नानाचमनवस्त्रचन्दनपुष्पधूपदीपनैवेद्यैः ॥ पञ्चभि-
र्गंधाद्यैः ॥ १६७ ॥

पंचप्रकारांपूजामाह ॥ साधनाऽभाविनीति ॥ साधनानांपूजोपकरणानामभावोयस्याःसासाधनाभाविनी ॥ त्रासोयस्याःसातत्कृतात्रासी ॥ दुर्बोधानामियंदौर्बोधी ॥ सूतकेकृतासौतकी ॥१६८॥ आतुरस्येयमातुरी॥१६९॥

दानाशक्तःसमर्चंस्तंपश्येत्तत्परमानसः॥साधनाऽभाविनीत्रासीदौर्बोधीसौतकीतथा ॥१६८॥आतुरीपंचधोक्तासौपूजासाकीर्त्यतेक्रमात्॥पूजासाधनवस्तूनामभावान्मनसैवया॥१६९॥पूजांभसासाधनंयत्साधनाभाविनीतुसा॥त्रस्तःसंपूजयेद्देवंयथालब्धोपचारकैः॥१७०॥मानसैर्वापिसात्रासीज्ञेयासंपूर्णसिद्धिदा॥बालवृद्धाःस्त्रियोमूर्खादुर्बोधास्तत्कृतातुया ॥१७१॥यथाज्ञानंपराचासौदौर्बोधीकीर्तिताबुधैः ॥ सूतकीतुनरःस्नात्वासंध्यांस्वांमानसींचरेत्॥१७२॥मानसैर्वार्चयेत्कामीनिष्कामःसर्वमाचरेत् ॥ सौतक्युक्ताऽऽतुरीरोगान्नस्नायान्नचपूजयेत्॥१७३॥ विलोक्यमूर्तिंदेवस्ययदिवासूर्य्यमंडलम् ॥ सकृन्मूलमनुंजप्त्वातत्रपुष्पंविनिक्षिपेत् ॥१७४ ॥ ततोरोगेगतेस्नात्वापूजयित्वागुरून्द्विजान् ॥ पूजाविच्छेददोषोमेमास्त्वितिप्रार्थयेततान् ॥१७५॥

क्रमाल्लक्षणमाह ॥ पूजेति ॥ त्रासीमाह ॥ त्रस्तइति ॥ १७० ॥ दौर्बोधीमाह ॥ बालाइति ॥ १७१ ॥ सौतकीमाह ॥ सूतकीत्विति ॥ १७२ ॥ आतुरीमाह ॥ आतुरेति ॥ १७३ ॥ १७४ ॥ १७५ ॥

॥ १७६ ॥ १७७ ॥ १७८ ॥ सुरार्चायानित्यतामाह ॥ देवेति ॥ १७९ ॥ इतिमंत्रमहोदधिव्याख्यायांनौकायांदेवा
र्चानिरूपणंनामद्वाविंशस्तरंगः ॥ २२ ॥ ॥ पवित्रदमनार्चनंवक्तुमुपक्रमते ॥ वक्ष्येथोइति ॥ १ ॥ २ ॥ ३॥ पूर्वा

तेभ्यश्चाशिषमादायदेवेशंपूर्ववद्यजेत् ॥ आतुरीकीर्तितापूजाःपंचैवंनारदोदिताः॥ १७६॥स्वयंसंपा
द्यसर्वाणिश्रद्धयासाधनानियः॥ पूजयेत्तत्परोदेवंसलभेताखिलंफलम् ॥१७७ ॥ पूजनेनफलार्द्धंस्या
दन्यदत्तैस्तुसाधनैः ॥ तस्मात्स्वयंसमानीयसाधनान्यर्चनंचरेत् ॥१७८॥ देवपूजाविहीनोयःसन
रोनरकेपचत्॥ यथाकथंचिद्देवार्च्चाविधेयाश्रद्धयान्वितैः॥१७९॥इतिमंत्रमहोदधौपूजाकथनंनाम
द्वाविंशस्तरंगः॥२२॥वक्ष्येथोसर्वदेवानांपवित्रदमनार्पणम्॥ पवित्रैःश्रावणेपूजाचैत्रेदमनकैरपि॥१॥
प्रत्यब्दंविधिवत्कुर्य्याद्वर्षार्चाफलसिद्धये ॥ चत्रशुक्लचतुर्दश्यांदमनैःपूजयेद्धरम्॥२॥नारायणंतुद्वा
दश्यामष्टम्यांगिरिनंदिनीम् ॥ सप्तम्यांभास्करंदेवंचतुर्थ्यांगणनायकम् ॥३॥ एवंतत्तत्तिथौतंतंपवि
त्रैःश्रावणेर्चयेत् ॥ पूर्वाह्ने दमनार्चायाःकृत्वानित्यार्चनंविभोः॥४॥ गत्वादमनकारामगृह्णीयात्तंक्र
यार्पणात् ॥ उपविश्यशुचौदेशेमनुनानेनचार्पयेत् ॥ ५ ॥

ह्नपूर्वदिने ॥ ४ ॥ क्रयार्पणान्मूल्यदानेन ॥ ५ ॥

॥ ६ ॥ क्लींकामदेवायनमइतिकामस्यमनुः ॥ ह्रींरत्यैनमइतिरतेः॥७॥ ८ ॥९ ॥ १० ॥ ११ ॥ १२॥ १३ ॥ १४ ॥

अशोकायनमस्तुभ्यंकामस्त्रीशोकनाशन ॥शोकार्तिंहरमेनित्यमानंदंजनयस्वमे॥ ६॥ इतिसंप्रार्थ्य
तत्रार्चेद्रतिकामौस्वमंत्रतः ॥ कामदेवायकामादिर्हृदंतोष्टाक्षरोमनुः ॥७॥ कामस्यमायारत्यैहृत्पं
चार्णस्तुरतेर्मनुः ॥इष्टदेवस्यपूजार्थंनेष्यामित्वामितिब्रुवन् ॥ ८ ॥ उत्पाट्यपंचगव्येनाभिषिच्यक्षा
लयेज्जलैः ॥ गंधादिभिर्हृदाभ्यर्च्यच्छादयेत्पीतवाससा ॥९॥ निधायवंशपात्रेतंगीतवादित्रनिःस्व
नैः ॥गृहमानीयतद्देशेस्थापयेद्देवतांस्मरन् ॥१०॥ततोदेवस्यपुरतःकृत्वाष्टदलमंबुजम् ॥ सितकृष्णर
क्तपीतवर्णैःसंपूरयेत्तुतम् ॥११॥ भूपुरंतद्बहिःकृत्वापीतवर्णेनपूरयेत् ॥ सितरक्तपीतवर्णंतद्बहिर्वर्तुलत्र
यम् ॥ १२ ॥ रक्तवर्णेनतद्बाह्येविदध्याच्चतुरस्रकम् ॥ एवंविरचितेरम्येमंडलेसार्वकामिके ॥ १३ ॥
यदिवासर्वतोभद्रेमुंचेद्दमनभाजनम् ॥ सायंकालीनपूजांतेकुर्यात्तस्याधिवासनम् ॥ १४ ॥ताराद्या
भ्यांकामरतिमंत्राभ्यांतत्रतौयजेत् ॥ दलेष्वष्टसुरत्याद्यानष्टौकामान्पृथग्विधैः ॥ १६ ॥

ताराद्याभ्यांप्रणवादिकाभ्यांकामरतिमंत्राभ्यामुक्ताभ्यांतत्रमंडलमध्यस्थदमने तौरतिकामौ ॥ १५ ॥

कामानाह कामइति ॥ १६ ॥ प्रणवेति ॥ ॐक्लींकामायनमइत्यादिभिः ॥ १७ ॥ पूजाद्रव्याण्याह ॥कर्पूरेति॥ न्यंकुनाभिजाकस्तूरी ॥ तत्रकर्पूरेणकामपूजा रोचनयाभस्मशरीरपूजा कस्तूर्याऽनंगपूजेत्यादिक्रमः॥१८॥१९॥

कामोभस्मशरीरश्चततोनंगश्चमन्मथः ॥वसंतसखसंज्ञश्चस्मरइक्षुधनुर्धरः ॥ १६॥ पुष्पबाणइमेकामास्तान्यजेन्नामभिर्निजैः॥प्रणवानंगबीजाद्यैश्चतुर्थीहृदयान्वितैः॥१७॥कर्पूररोचनान्यंकुनाभिजागुरुकुंकुमैः ॥ धात्रीफलैश्चंदनेनपुष्पैःकामान्क्रमाद्यजेत् ॥१८॥दमनंगंधपुष्पाद्यैरभिपूज्याभिमंत्रयेत्॥अष्टोत्तरशतंकामगायत्र्यामंत्रवित्तमः ॥ १९ ॥ कामदेवायवर्णांतेविद्महेपदमुच्चरेत्॥पुष्पबाणायचपदंधीमहीतिततोवदेत् ॥२०॥ तन्नोऽनंगःप्रचोवर्णाद्दयादितिमनोभुवः ॥गायत्र्येषाबुधैरुक्ताजगजनविमोहिनी ॥ २१ ॥ हृदापुष्पांजलिंदत्त्वामनुनानेनतंनमेत् ॥नमोस्तुपुष्पबाणायजगदानंदकारिणे ॥२२ ॥ मन्मथायजगन्नेत्ररतिप्रीतिप्रदायिने ॥ ततोनिमंत्रयेद्देवमनेनमनुनासुधीः ॥२३॥ आमंत्रितोसिदेवेशप्रातःकालेमयाप्रभो ॥कर्तव्यंतुयथालाभंपूर्णंस्यात्तुतवाज्ञाया ॥ २४ ॥

कामगायत्रीमाह ॥ कामदेवायेति ॥ जनविमोहिनीत्युक्तत्वात्स्वतंत्राप्येषा ॥ २० ॥ २१॥ २२ ॥ २३ ॥ २४ ॥

१ कामदेवाय विद्महे पुष्पबाणाय धीमहि ॥ तन्नोऽनंगःप्रचोदयात् ।

वर्मणावगुंठनम् अस्त्रेणरक्षणंचकुर्यात् ॥ २५॥ २६ ॥ २७ ॥ देशकालावुच्चार्यवर्षपूजासांगत्यायदमनार्चांकरिष्य

देवेपुष्पांजलिंदत्त्वादंडवत्प्रणिपत्यच॥दमनेवर्मणास्त्रेणविदध्यादवगुंठनम्॥ २५ ॥ रक्षणंचक्रमादेत
दधिवासनमीरितम्॥ततोजागरणंकुर्य्याद्देवंगायंस्तुवञ्जपन् ॥ २६ ॥ सर्वाधिवासनंचापिकुर्य्यान्नर्त
नजागरौ॥प्रातःस्नानादिनिर्वर्त्यकृत्वानित्यार्चनंविभोः ॥ २७ ॥ संकल्पंदमनार्चायाविदध्याद्देव
ताज्ञया॥गृहीत्वादमनस्याथहस्ताभ्यांमंजरींशुभाम् ॥ २८ ॥ हृदाभिमंत्रयेन्मंत्रीततःश्लोकमिमंप
ठेत्॥ सर्वरत्नमयींदिव्यांसर्वगंधमयींशुभाम्॥ २९ ॥ गृहाणमंजरींदेवनमस्तेऽस्तुकृपानिधे॥ मूल
मंत्रेणघंटादिघोषैर्देवस्यमस्तके ॥ ३० ॥ समर्प्यतांततःकुर्य्यान्मालांदमननिर्मिताम्॥हृदाभिमंत्र्य
चानेनश्लोकेनाप्यभिमंत्रयेत्॥३१॥ सर्वरत्नमयींनाथदामनींवनमालिकाम् ॥ गृहाणदेवपूजार्थंस
र्वगंधमयींविभो ॥ ३२ ॥ मूलमंत्रंजपन्देवमुकुटेतांसमर्पयेत् ॥दमनेनेष्टदेवस्यपरिवारान्समर्चयेत्
॥३३॥ततोनैवेद्यतांबूलेदत्त्वानत्वाचदंडवत्॥दमनार्चांकृतांतस्मैश्लोकेनानिवेदयेत् ॥ ३४ ॥
इतिसंकल्पः ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

देवदेवजगन्नाथवांछितार्थप्रदायक॥कृत्स्नान्पूरयमेत्वर्थकामान्कामेश्वरीप्रिय ॥ ३५ ॥ जप्त्वामूलम्
नुवह्निंहुत्वादेवंविसृज्यच॥गुरुंगत्वादमनकैर्यजेत्तंतोषयेद्धनैः ॥ ३६॥ विप्रान्त्संभोज्यभुंजीतस्वदे
वायनिवेदितम्॥एवंकृतेकृतार्थःस्याद्वर्षार्चाफलभाङ्नरः ॥ ३७ ॥ कथितादमनार्चैषापवित्रयजनं
ब्रुवे॥ पवित्रयजनाहात्पूर्वस्मिन्वासरेसुधीः ॥ ३८ ॥ विदध्यान्नित्यपूजांतेपवित्राणियथाविधि ॥
हेमदुर्वर्णताम्रोत्थतंतुभिःपट्टसूत्रतः ॥ ३९ ॥ यद्वाकार्पाससूत्रैस्तुनिर्मितैर्विप्रभार्यया॥अन्ययावा
सधवयासदाचारप्रसक्तया ॥ ४०॥ कर्तितैस्तानिकुर्वीतनपुंश्चल्यादिनिर्मितैः॥त्रिगुणंत्रिगुणीकृत्य
निर्मायान्नवसूत्रिकाम् ॥ ४१ ॥ तांप्रोक्ष्यपंचगव्येनक्षालयेदुष्णवारिणा ॥प्रणवेनाभिषिंचेत्तांमूलेना
ष्टोत्तरंशतम्॥४२॥मंत्रयेन्मूलगायत्र्यातावदेवततःसुधीः॥रचयेन्नवसूत्रीभिरष्टोत्तरशतेनच ॥ ४३॥
तदर्द्धेनतदर्द्धेनजानूरुनाभिमानतः॥देवेशस्यपवित्राणिशचौदेशेप्रसन्नधीः ॥ ४४ ॥

त्तरशतनवसूत्र्याज्येष्ठं चतुःपंचाशतामध्यमं सप्तविंशत्याकनिष्ठं पवित्रंकुर्यात् ॥ ४३ ॥ ४४ ॥

ज्येष्ठंषट्त्रिंशद्ग्रंथियुतम् ॥ मध्यमंचतुर्विंशातिग्रंथियुतम् ॥ कनिष्ठंद्वादशग्रंथियुतम् ॥ ४५ ॥ ४६ ॥ ४७ ॥ अष्टिः षोडश ॥ ४८ ॥अद्रिनेत्रमिताभिःसप्तविंशतिसंख्याभिस्ताभिर्नवसूत्रीभिर्गुरुपवित्रं तावतीभिस्ताभिः सप्तविंश

ज्येष्ठमध्यकनिष्ठानितेषुग्रन्थीन्दधीतच ॥षट्त्रिंशत्तत्त्वमार्तण्डमिताञ्ज्येष्ठादिषुक्रमात् ॥ ४५ ॥
अष्टोत्तरसहस्रेणनवसूत्र्याविनिर्मितम् ।अष्टोत्तरशतग्रंथिवनमालपवित्रकम् ॥ ४६ ॥ कृत्वातान्रं
जयेद्ग्रंथीन्रोचनाकुंकुमादिभिः ॥ वैणलेपटलेतानिसंछाद्यसितवाससा ॥४७ ॥ स्थापयित्वाविनि
र्मायादन्यान्यावरणार्चने ॥ सप्तविंशत्यष्टिरविनवसूत्रीकृतानितु ॥ ४८ ॥ अद्रिनेत्रमिताभिस्तुकु
र्य्याद्गुरुपवित्रकम् ॥ तावतीभिःकृशानोस्तत्षड्विंशत्यातदात्मनः ॥४९॥तत्रग्रंथीन्यथाशोभंदत्त्वा
संरंजयेदपि ॥ तानिपात्रांतरेन्यस्यकुर्य्याद्धूपपवित्रकम् ॥५०॥ द्वादशग्रंथितिग्मांशुनवसूत्रीविनि
र्मितम् ॥ निर्मायैवंपवित्राणिकुर्य्यात्पूजाथमंडलम्॥५१ ॥ पंकजंषोडशदलंपूरयेदष्टवर्णकैः॥नील
हारिद्रशोणाह्वमांजिष्ठश्वेतसंज्ञकैः ॥ ५२ ॥

त्यैतच्छुचेरग्नेस्तत्पवित्रं षड्विंशत्यास्वपवित्रंचकुर्यात् ॥ तत्रग्रंथयःस्वेच्छयादेयाः ॥ ४९ ॥ ५० ॥ तिग्मांशुर्द्वादश॥ ॥ ५१ ॥ ५२ ॥

॥ ५३ ॥ ५४ ॥ ५५ ॥ पात्रे देवपवित्रपात्रेआवरणपवित्रपात्रेच ॥ ५६ ॥ ५७ ॥ अधिवासनमाह ॥ तत्रेति ॥ ५८ ॥

सिंदूरधूम्रकृष्णाख्यैस्तद्बहिर्मंडलत्रयम् ॥ सूर्य्यसोमाग्निसंज्ञंतत्सितपीतारुणंक्रमात् ॥५३॥तद्बाह्ये
ष्टदलंकुर्य्याद्वरुणंयदिवासितम् ॥ एवंमंडलमालिख्यपूजयेत्कुसुमादिभिः ॥ ५४॥ तस्योपरिनिव
ध्नीयाद्वितानसमलंकृतम् ॥ मंडलेस्थापयेद्देवंप्रतिमांयदिवाघटम् ॥५५॥तत्रेष्टदेवंसंपूज्यपायसंवि
निवेदयेत् ॥ देवताग्रेपवित्राणांपात्रेन्यस्याधिवासयेत्॥५६॥उक्तसंख्यस्यसूत्रस्यालाभेतानियथा
रुचि ॥ ज्येष्ठादीनिपवित्राणिविदध्यात्सर्वथासुधीः ॥५७ ॥ तत्रद्वाविंशतिंदेवानाहूयप्रतिपूजयेत्
ब्रह्मविष्णुमहेशानास्त्रिसूत्र्यादेवताःस्मृताः॥५८ ॥ ओंकारचंद्रमोवह्निब्रह्मनागाशिखिध्वजाः ॥ सू
र्य्यःसदाशिवोविश्वेनवसूत्र्यधिदेवताः॥५९॥क्रियाचपौरुषीवीराचतुर्थीत्वपराजिता॥विजयाजय
यायुक्तामुक्तिदाचसदाशिवा ॥ ६० ॥

शिखिध्वजःकार्त्तिकेयः ॥ विश्वेविश्वेदेवाः ॥ ५९ ॥ ६० ॥

॥ ६१ ॥ आवाहनीस्थापनीसान्निधापनीसन्निरोधिनीसम्मुखीकरणीसकलीकरण्यवगुंठिन्यमृतीकरणीपरमीकरण्योन्
वाऽऽवाहन्यादिमुद्राः ॥ ताउक्ताः ताभिस्तदाह्वानादिकंपवित्रदेवतानांब्रह्मादीनांपदार्थानुसमयेनकांडानुसमयेन
चाऽऽवाहनादिचकृत्वागंधादिनाऽर्चयेत् ॥ ६२ ॥ ६३ ॥ ६४ ॥ ॥ ६५ ॥ ६६ ॥ केशवपदस्थानेऊहः शंकरः भास्करः

मनोन्मनीतुनवमीदशमीसर्वतोमुखी॥ एताःपवित्रग्रंथीनांदेवताःपरिकीर्तिताः॥ ६१ ॥ आवाहन्यादि
मुद्राभिर्नवभिःसाधकोत्तमः ॥ तदाह्वानादिकंतत्रकृत्वाचर्चेच्चंदनादिभिः ॥ ६२ ॥ एवंपवित्राण्यभ्य
र्च्यदद्याद्गंधपवित्रकम्॥ तद्धूपयित्वातारेणहृदयेनाभिमंत्रयेत्॥ ६३ ॥ प्रणम्यप्रार्थयेद्देवंश्लोकयुग्म
मिदंपठन् ॥ आमंत्रितोसिदेवेशसार्द्धंदेव्यागणेश्वरैः ॥ ६४ ॥ मंत्रैर्लोकपालैश्चसहितःपरिवारकैः॥
आगच्छभगवन्नीशविधिसंपूर्तिकारक ॥ ६५ ॥ प्रातस्त्वांपूजयिष्यामिसान्निध्यंकुरुकेशव ॥ ततोगं
धपवित्रंतत्पादयोर्विन्यसेत्प्रभोः ॥ ६६ ॥ केशवेतिपदस्थानेकार्य्यऊहोन्यदैवतः ॥ भगवत्याःपदे
ष्वत्रलिंगोहोमंत्रवित्तमैः ॥ ६७ ॥

विघ्नराडित्यादिरूपइति ॥ भगवत्यांपवित्रारोपणेतुतत्पदेषुलिंगोहोपिकार्यः ॥ यथा--आमंत्रितासिदेवेशि आगच्छ
त्वंभवानीशेविधिसंपूर्तिकारिकेसान्निध्यंकुरुपार्वतीत्यादिरीत्यालिंगपदानामूहः ॥ ६७ ॥

॥ ६८ ॥ कनिष्ठपवित्रारोपणेदेवंश्वेतंध्यायेत् ॥ मध्यमारोपणेरक्तंज्येष्ठारोपणेपीतमिति ॥ ६९ ॥ ७०॥७१ ॥ ताव



अधिवासंविधायेत्थंनिशिजागरणंचरेत्॥ देवस्यस्तुतिनामानिवदन्गायंश्चतद्गुणान् ॥६८॥प्रातर्नि
त्यार्चनंकृत्वामूलेनाष्टोत्तरंशतम् ॥ कनिष्ठाख्यंपवित्रंतद्गृहीत्वाचाभिमंत्रयेत्॥६९॥ घंटावादित्र
वेदानांकारयन्घोषमुत्तमम् ॥ जयशब्दांश्चदेवस्यकंठेमूलेनचार्पयेत् ॥ ७० ॥ एवमेवार्पयेदन्ये
पवित्रेमध्यमोत्तमे ॥ श्वेतंरक्तंक्रमात्पीतंध्यायेद्देवंतदर्पणे ॥७१॥ वनमालापवित्रंतुतावन्मूलेनमंत्रि
तम् ॥ अर्पयेदिष्टदेवस्यमुकुटेमूलमुच्चरन् ॥ ७२ ॥ ततःसुवर्णकुसुमैःपुष्पैःशतमितैःसह॥मूलाभि
मंत्रितंदेवमूर्ध्निमूलेनचार्पयेत् ॥७३ ॥ हृदान्यपटलस्थानिपवित्राण्यभिमंत्र्यच॥तत्तन्नाम्नानमोंतेन
परिवारान्सुरान्यजेत् ॥७४॥ एवंपवित्रैः संपूज्यधूपादीनिप्रकल्पयेत्॥ पावकेदेवमावाह्यनित्यहोमं
विधायच॥७५॥मूलेनाग्निपवित्रंतदर्पयेद्देवतांस्मरन्॥मूर्तौदेवंसमुद्वास्यवह्निंसंयोज्यचात्मनि॥७६॥



दष्टोत्तरशतम् ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥

॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ सर्वथागुरुवंशाभावेकंचिच्छिष्टंसंपूज्यतस्यपवित्रंसमर्प्यदक्षिणांचदत्त्वाप

पुष्पांजलिंविधायेशेकर्मांतेविनिवेदयेत् ॥ मंत्रहीनंक्रियाहीनंभक्तिहीनंकृपानिधे ॥ ७७ ॥ पूजनंपूर्णतामेतुपवित्रेणार्पितेनते ॥ इतिसंप्रार्थ्यदेवेशंयोजयेद्धृदयेनिजे ॥ ७८ ॥ गुर्वंतिकंततोगत्वादत्त्वापुष्पांजलिंगुरौ ॥ स्वांगेषडंगंविन्यस्यगुरुदेहेऽपिविन्यसेत् ॥ ७९ ॥ पाद्यंदत्त्वातथैवार्घ्यंवस्त्रालंकारचंदनम् ॥ पुष्पैःसंपूज्यमूलेनपवित्रंतद्गलेऽर्पयेत् ॥ ८० ॥ स्वशक्त्यादक्षिणांदत्त्वादंडवत्प्रणमेद्गुरुम् ॥ अन्येभ्यःशिष्टवृद्धेभ्यःपवित्राणिददीतच ॥ ८१ ॥ सर्वथैवगुरोःपूजाकर्तव्यामंत्रिणासदा ॥ अपूजितेगुरौसर्वापूजाभवतिनिष्फला ॥ ८२ ॥ गुरोरभावेतत्पुत्रंतदभावेतदात्मजम् ॥ दौहित्रंतदभावेन्यंपूजयेद्गुरुगोत्रजम् ॥ ८३ ॥ ततोधृत्वापवित्रंस्वंभोजयित्वाद्विजोत्तमान् ॥ भुंजीततदनुज्ञातोबंधुभिस्तनयैःसह ॥ ८४ ॥ यथाकथंचित्कुर्वीतपवित्राणिसुरार्चने ॥ विधेरुक्तस्यचाशक्त्यापूजासंपूर्त्तिहेतवे ॥ ८५ ॥

वित्रपूजापूर्णास्त्वितितंद्वचनंप्रार्थयेत् ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥

यस्यामिति ॥ उक्ततिथौकरणासंभवेसर्वथाश्रावणेपवित्रपूजाचैत्रेदमनार्चाचनित्यत्वेनावश्यंकार्येत्यर्थः ॥ ८६ ॥
॥ ८७ ॥ ८८ ॥ अन्येष्वप्युपेति ॥ उपरागश्चंद्रसूर्यग्रहणम् ॥ अर्धोदयलक्षणंतु-" अमार्कपातश्रवणयुक्ताचेत्पौषमाघयोः ॥ अर्धोदयःसविज्ञेयः कोटिसूर्यग्रहैःसमः' इति ॥ सौम्यायनंमकरसंक्रांतिः ॥ आदिशब्दाद्युगादयोमन्वा

यस्यांकस्यांतिथौकुर्य्यात्तिथावुक्तेकृतंनचेत्॥सर्वथाश्रावणेचैवपवित्रंतुनिवेदयेत्॥ ८६ ॥ प्रत्यब्दं
यःपवित्रेणपूजांकुर्वीतदैवते॥ऐश्वर्य्यारोग्यसंयुक्तोनैकवर्षाणिजीवति ॥ ८७ ॥संपूर्णहायनंपूजादेव
तानांकृतातुया॥सर्वासंपूर्णतामेतिपवित्रदमनार्पणात्॥ ८८ ॥अन्येष्वप्युपरागार्द्धोदयसौम्यायना
दिषु॥कुर्य्यादलभ्ययोगेषुविशेषाद्देवतार्च्चनम् ॥ ८९ ॥ यथायथेष्टदेवेषुनृणांभक्तिःसमेधते ॥प्राप्य
तेतद्यत्नेनमनोभीष्टंतथातथा॥ ९० ॥ शुचौतत्तदहेकुर्य्याद्देवप्रस्वापनोत्सवम्॥ऊर्जेतथैवदेवानामु
त्थापनविधिंसुधीः ॥ ९१ ॥

दयःश्रवणद्वादशीप्रमुखाग्राह्याः ॥ तत्रेष्टदेवमहोत्सवोमहापूजाचाविधेया ॥ ८९ ॥ तत्रहेतुमाह ॥ यथेति ॥ ९० ॥
शुचावाषाढेतत्तदहेचतुर्थ्यादौगणेशादीनाम् ॥ ऊर्जेकार्त्तिके ॥ ९१ ॥

माघकृष्णचतुर्दश्यांशिवरात्रौशिवपूजाप्रकारःशिवागमाद्बोध्यः ॥ नवरात्रेदुर्गार्चनविधिरपितन्त्रागमादेव शुक्लपक्षा

माघकृष्णचतुर्दश्यांविशेषाच्छिवपूजनम् ॥आश्विनाद्यनवाहेषुदुर्गांपूज्याययथाविधि ॥१२॥ गोपा
लंपूजयेद्विद्वान्नभःकृष्णाष्टमीदिने ॥रामंचैत्रसितेपक्षेनवम्यामर्चयेत्सुधीः ॥ १३ ॥ वैशाखाद्यचतुर्द
श्यांनरसिंहंप्रपूजयेत् ॥ यजेच्छुक्लचतुर्थ्यांतुगणेशंभाद्रमाघयोः ॥ १४ ॥ महालक्ष्मींयजेद्विद्वान्भा
द्रकृष्णाष्टमीदिने ॥ माघस्यशुक्लसप्तम्यांविशेषाद्दिननायकम् ॥ १५ ॥ याकाचित्सप्तमीशुक्लारवि
वारयुतायदि ॥तस्यांदिनेशंसंपूज्यदद्यादर्घ्यंपुरोदितम् ॥१६॥ तत्तत्कल्पोदितानन्यान्देवताप्रीति
वर्द्धनान् ॥ विशेषनियमाञ्ज्ञात्वाभजेद्देवमनन्यधीः ॥ १७ ॥

दिमासाभिप्रायेण एवमग्रेपि ॥ ग्रंथगौरवभयात्तन्नोच्यते ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

आषाढीति ॥ चातुर्मास्येऽवश्यंतत्तद्देशलभ्यंस्वेष्टाकंचिद्वस्तुवर्जयेत् ॥ 'योविनानियममर्त्यौव्रतंवाजाप्यमेववा॥
चातुर्मास्यंनयेन्मूढोजीवन्नपिमृतोहिसः' इत्यादिनिंदाश्रवणात् ॥ ९८ ॥ ९९ ॥ १०० ॥ इति श्रीमंत्रमहोदधि



आषाढीकार्तिकीमध्येकिंचिन्नियममाचरेत्॥देवसंप्रीतयेविद्वाञ्जपपूजादितत्परः ॥९८॥ एवंयोभ
जतेविष्णुंरुद्रंदुर्गांगणाधिपम् ॥ भास्करंश्रद्धयानित्यंसकदाचिन्नसीदति ॥९९॥ सधर्ममाचरन्नित्यं
देवपूजापरायणः ॥ जितेंद्रियोखिलान्भोगान्प्राप्येहानंततांव्रजेत् ॥१००॥ इति श्रीमहीधरविरचि
तेश्रीमंत्रमहोदधौदमनपवित्रार्चननिरूपणंनामत्रयोविंशस्तरंगः ॥ २३॥ साधकानांशीघ्रसिद्ध्यैमं
त्रशुद्धिमथोब्रुवे ॥ साधकस्यतुनामादिवर्णमारभ्यशोधयेत् ॥१ ॥ मंत्राद्यक्षरपर्य्यंतंचक्रेसिद्धादिके
क्रमात् ॥ जन्मर्क्षोत्थंप्रसिद्धंवानामग्राह्यंविशोधने ॥ २ ॥

व्याख्यायां नौकायांदमनपवित्रार्चननिरूपणंनामत्रयोविंशस्तरंगः ॥ २३ ॥ मंत्रशुद्धिं वक्तुमाह॥ साधकाना
मिति ॥ १ ॥ २ ॥

अकथहचक्रमाह ॥ ऊर्ध्वगाइति ॥ षोडशकोष्ठान्विधायतत्रैकत्र्येकादशनवद्विचतुर्द्वादशदशषडष्टषोडशचतुर्दशपंचसप्तपंचदशत्रयोदशेषुकोष्ठेषुक्रमादकारादिवर्णान्पुनःपुनर्विलिख्य कोष्ठचतुष्केसिद्धसाध्यादिविचिंत्यपुनश्चतुष्केसिद्धादिगणनंकार्यम् ॥ तत्रप्रथमचतुष्केयस्यांविदिशिनामार्णःद्वितीयादिचतुष्केषुताद्दिशमारभ्यसिद्धादिग-

ऊर्द्ध्वगाःपंचरेखाःस्युःपंचतिर्य्यग्गताःपुनः ॥ कोष्ठानितत्रजायंतेषोडशैवात्रसंलिखेत् ॥३॥भूराम
शिवनंदाक्षिवेदार्कदिग्रसाष्टभिः ॥ कलामनुशरैरद्रितिथिविश्वैर्मितेषुच ॥ ४ ॥ कोष्ठेषुमातृकावर्णां
स्तत्रनामादितःक्रमात् ॥ सिद्धःसाध्यःसुसिद्धोरिर्ज्ञेयोमन्वक्षरावधि॥५॥यस्मिंश्चतुष्केनामार्णस्त
त्स्यात्सिद्धचतुष्टयम् ॥ प्रादक्षिण्याद्द्वितीयं स्यात्साध्याख्यं तत्तृतीयकम् ॥ ६ ॥ सुसिद्धाख्यं
चतुर्थं तु सपत्नाख्यं स्मृतं बुधैः ॥ एककोष्ठे द्वयोर्वर्णः सिद्धसिद्धः प्रकीर्तितः ॥ ७ ॥ तद्द्वितीयेमंत्रवर्णेसिद्धसाध्यउदाहृतः ॥ तृतीये सिद्धसुसिद्धः सिद्धारिः स्याच्चतुर्थके ॥ ८ ॥
नामादियुक्चतुःकोष्ठान्मन्वर्णश्चेद्द्वितीयके ॥ चतुष्केतत्रपूर्वंतुयत्रनामाक्षरंस्थितम् ॥ ९॥ तत्रतत्कोणयेत् ॥ एवंगणने ( १ ) सिद्धसिद्धः १ सिद्धसाध्यः २ सिद्धसुसिद्धः ३ सिद्धारिः ४ ॥ ३ ॥ ४ ॥
॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ ( २ ) साध्यसिद्धः ५ साध्यसाध्यः ६ साध्यसुसिद्धः ७ साध्यारिः ८ ॥

॥१०॥(३)सुसिद्धसिद्धः९सुसिद्धसाध्यः१०सुसिद्धसुसिद्धः११सुसिद्धारिः१२(४)अरिसिद्धः १३अरिसाध्यः१४अरि
सुसिद्धः१५अर्यरिः१६ इतिषोडशभेदाभवंति ॥ तेषांफलमाह॥सिद्धसिद्धोयथोक्तेनेत्यादि ॥ यथोक्तेनकल्पोक्तेनज

घुमारभ्यगणयेत्पूर्ववत्क्रमात् ॥साध्यसिद्धःसाध्यसाध्यस्तत्सुसिद्धश्चतद्रिपुः ॥ १० ॥एवंज्ञेयस्तृ
तीयेचेच्चतुष्केमंत्रवर्णकः॥तदापूर्वोक्तयारीत्याक्रमाज्ज्ञेयाविचक्षणैः॥ ११॥सुसिद्धसिद्धस्तत्साध्यस्त
त्सुसिद्धश्चतद्रिपुः।चतुर्थेतुचतुष्केस्यादरिसिद्धारिसाध्यकः॥१२॥तत्सुसिद्धोर्य्यरिःपश्चादेवंमंत्रंवि
चारयेत् ॥ सिद्धसिद्धोयथोक्तेनद्विगुणात्सिद्धसाध्यकः॥ १३॥सिद्धसुसिद्धोर्द्धजपात्सिद्धारिर्हंति
बांधवान् ॥ साध्यसिद्धोद्विगुणितःसाध्यसाध्योनिरर्थकः ॥ १४ ॥द्विगुणाज्जपात्सुसिद्धःसाध्यारि
र्हंतिगोत्रजान् ॥सुसिद्धसिद्धोर्द्धजपात्तत्साध्योद्विगुणाज्जपात्॥१५॥ तत्सुसिद्धग्रहादेवसुसिद्धारिः
कुटुंबहा ॥ अरिसिद्धःसुतंहन्यादरिसाध्यस्तुकन्यकाम्॥१६॥तत्सुसिद्धस्तुपत्नीघ्नस्तदरिःसाधका
पहः ॥ नाम्नोमंत्रस्यवर्णांश्चलिखित्वाप्रतिवर्णकम् ॥ १७ ॥

पादिनासिद्धोभवतीत्यर्थः॥११॥१२॥१३॥१४॥द्विगुणात्कल्पोक्तद्वैगुण्यात्तत्सुसिद्धःसाध्यसुसिद्धः॥ १५॥१६॥मकारां
तरेणसिद्धादिशोधनमाह ॥ नाम्न इति ॥ १७ ॥

॥१८॥ व्युत्क्रमात्सिद्धसुसिद्धानांबहुत्वेसाध्यारीणामल्पत्वेशुभमित्यर्थः॥ १९॥इदंमतंप्राज्ञसंमतंशिष्टसंमतम्॥२०॥
अकडमचक्रमाह ॥ द्वादशारइति ॥ षंढाऋॠऌॡइतितान् ॥ २१ ॥ २२॥जपहोमतः जपहोमाधिक्येन ॥ २३ ॥

सिद्धादिगणनाकार्य्यायावन्मंत्रसमापनम् ॥ नाम्नोयदिसमाप्तिःस्यात्पुनर्नामलिखेत्सुधीः॥ १८ ॥
एवंसंशोधितेषुस्युर्भूरिवैसाध्यवैरिणः ॥ अल्पाःसिद्धसुसिद्धाश्चेदशुभंव्युत्क्रमाच्छुभम् ॥१९॥ मत
मित्थंतुकेषांचित्तदपिप्राज्ञसंमतम् ॥अथवान्यप्रकारेणसिद्धादीनांविशोधनम् ॥ २० ॥ द्वादशारे
लिखेच्चक्रवर्णान्पूर्वोदितान्क्रमात् ॥ईशानांतमकाराद्यान्हांतान्षंढविवर्जितान् ॥ २१ ॥ तत्रनामार्ण
मारभ्यमंत्राद्यर्णावधिक्रमात् ॥ गणयेत्सिद्धसाध्यादिफलंतेषांविनिर्दिशेत् ॥२२ ॥ सिद्धःसिध्यति
कालेनसाध्यस्तुजपहोमतः ॥ सुसिद्धःप्राप्तिमात्रेणसाधकंभक्षयेदरिः ॥ २३ ॥ सिद्धोनवैकबाणेषु
साध्योरसदिशाक्षिषु ॥ सुसिद्धस्त्रिमुनीशेषुरिपूर्वेदाष्टभानुषु ॥ २४ ॥ अन्योपीहप्रकारोस्तिसिद्ध
साध्यादिशोधने ॥ चतुःकोष्ठेषुविलिखेदादिवर्णान्पुनःपुनः॥२५॥ नामार्णात्सिद्धसाध्यादिज्ञेयं
मन्वक्षरावधि ॥ चतुर्थोपिप्रकारोस्तिसिद्धादीनांविशोधने ॥ २६ ॥

स्पष्टार्थमाह ॥ सिद्धोनवैकादशबाणेष्विति ॥ २४ ॥ २५ ॥ २६ ॥

प्रकारांतरमाह ॥ नाम्नइति ॥ नाममन्त्रयोर्वर्णानेकीकृत्यचतुर्भक्तेएकशेषेसिद्धः द्विशेषेसाध्यः त्रिशेषेसुसिद्धः शून्येऽरिरितिफलंपूर्वोक्तम् ॥ २७ ॥ भशोधनंनक्षत्रशोधनम् ॥ तत्रनक्षत्रेषुवर्णविभागमाह ॥ नेत्रेति ॥२८॥ उडुषु

नाम्नोमंत्रस्यवर्णौघंचतुर्भिर्विभजेत्सुधीः॥एकादिशेषेसिद्धादिक्रमाज्ज्ञेयंविचक्षणैः॥२७॥ सिद्धादिशोधनंप्रोक्तमथवच्मिभशोधनम् ॥ नेत्रभूगुणवेदक्ष्माधरानयनभूभुजाः ॥२८॥ द्विचन्द्रभुजबाह्वक्षिभूनेत्रत्रिधरागुणाः॥एकैकंभूभुजेद्व्यक्षिरामचंद्रानुडुष्वथ॥२९॥अश्विन्यादिषुविज्ञेयाआदिवर्णाःक्रमाद्बुधैः ॥ क्षांताबिंदुविसर्गौतुपौष्णभागेव्यवस्थितौ॥३०॥जन्मसंपद्विपत्क्षेमप्रत्यरिःसाधकोवधः ॥ मैत्रंपरममैत्रंचगणनीयंस्वनामभात् ॥ ३१ ॥ विपद्वधःप्रत्यरिश्चत्याज्याअन्यदुदूत्तमम् ॥ अथर्णधनसंशुद्धिःकथ्यतेसिद्धिदायिनी ॥ ३२ ॥ सप्ततिर्य्यग्लिखेद्रेखाद्वादशैवोर्द्ध्वगाःपुनः॥एवंकृतेतुजायंतेकोष्ठाःषट्षष्टिसंमिताः ॥ ३३ ॥

नक्षत्रेषु ॥ २९ ॥ पौष्णभागेरेवत्यंशे ॥ ३० ॥ ३१ ॥ ३२ ॥ ऋणधनशोधनमाह सप्तेति ॥ तिर्यक्सप्तरेखाऊर्ध्वंद्वादशकृत्वा ॥ ३३ ॥

आद्यपंक्तौचतुर्दशाद्यंकाः ॥ द्वितीयायाम् आईऊऋॡहीनाःस्वराएकादश ॥ तृतीयायांकादिङांताः ॥ चतुर्थ्यां ठादिफांताः ॥ पंचम्यांबादिहांताः ॥ षष्ठ्यांदशाद्यंकालेख्याः ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ कोष्ठेयावतीति ॥ यावतितमेकोष्ठवर्णस्तमंकमुपर्यंकेनगुणयेत् ॥ यथा—प्रथमकोष्ठस्थअकारश्चतुर्दशगुणितश्चतुर्दशैव ॥

आद्यपंक्तौलिखेदंकांस्तेकथ्यन्तेयथाक्रमम्॥मनुनक्षत्रनेत्रार्कतिथिषड्वेदवह्नयः॥ ३४ ॥ सायकाव
सवोनंदाःकोष्ठेषुक्रमतःस्थिताः॥द्वितीयपंक्तौसंलेख्याःपंचदीर्घोज्झिताःस्वराः ॥३५ ॥ तृतीयपं
क्तौकाद्यर्णाष्टकारांताःशिवैर्मिताः॥ठादिफांताश्चतुर्थ्यांतुपंचम्यांबादिहांतिमाः ॥ ३६ ॥ षष्ठ्यांपं
क्तौक्रमाल्लेख्याअंकाःकथ्यंतएवते॥दिक्चंद्रमुनिवेदाष्टगुणसप्तेषुसागराः ॥ ३७॥ रसाश्वरामसंख्या
ताएवमंकाउदीरिताः ॥ मंत्रवर्णान्पृथक्कुर्य्यात्स्वरव्यंजनरूपतः॥३८॥ कोष्ठेयावतिवर्णःस्याद्गुणये
त्तावदंककम्॥कोष्ठोपरिस्थेनांकेनसर्ववर्णेष्वयंविधिः ॥ ३९ ॥ दीर्घांक्षराणामंकास्तुज्ञेयालघ्वक्षर
स्थिताः॥एकीकृत्याखिलानंकानष्टभिर्विभजेत्पुनः ॥ ४० ॥

द्वितीयकोष्ठस्थइकारःसप्तविंशत्यागुणितश्चतुःपंचाशत् ॥ एवंतृतीयकोष्ठस्थःउकारःसद्व्याभ्यांगुणितःषट् ॥ एवमग्रेपि ॥ साधकनामवर्णास्तुदिगादिभिरेवंगुणनीयाः ॥ साध्यस्यांकानेकीकृत्याष्टभिर्भक्तेशेषःसाध्यराशिः ॥ एवं साधकांकान्गुणितानेकीकृत्याष्टभक्तेशेषःसाधकराशिः ॥ ३९ ॥ ४० ॥

॥ ४१ ॥ मंत्रराशिरधिकश्चेदृग्राह्यः ॥४२ ॥ प्रकारांतरेणऋणधनशोधनमाह ॥ नामादीति ॥ धनिताऋणिताचपू
र्ववत् ॥ अधिकशेषऋणी ऊनोधनीत्यर्थः ॥ ४३ ॥ ४४ ॥ ४५ ॥ प्रकारांतरमाह ॥ यद्वेति ॥ तादृशैःस्वरव्यंजनरूपे

शेषोंकोमंत्रराशिःस्यान्नामवर्णेष्वयंविधिः ॥ अधःपंक्तिस्थितैरंकैर्गुणनीयास्तुतेखिलाः ॥ ४१ ॥
अधमर्णोधिकोराशिरूनोराशिर्धनीस्मृतः॥मंत्रोयदाधमर्णःस्यात्तदाग्राह्योधनीनतु ॥ ४२ ॥ एवंध
नर्णंसंप्रोक्तमन्यथाप्रोच्यतेपुनः ॥ नामाद्यक्षरमारभ्ययावन्मंत्रादिमाक्षरम्॥ ४३ ॥ गणयेन्मातृका
द्यर्णंक्रमेणगुणयेत्त्रिभिः॥ विभक्तेसप्तभिःशिष्टोनामराशिरुदीरितः ॥ ४४ ॥ एवंमंत्रार्णमारभ्ययाव
न्नामादिमाक्षरम्॥गणयित्वात्रिभिर्हत्वाविभजेत्सप्तभिःसुधीः ॥ ४५ ॥ मंत्रराशिःस्मृतःशिष्टःपूर्वव
द्धनितर्णता॥यद्वामंत्राक्षराणीहस्वरव्यंजनरूपतः ॥४६ ॥ पृथक्कृत्यद्विगुणयेद्योजयेत्साधकाक्षरैः॥
तादृशरष्टभिर्भक्तेमंत्रराशिरुदाहृतः ॥४७॥ एवंनामार्णसंघोपिद्विगुणीकृत्ययोजितः॥मंत्रवर्णैरष्टभ
क्तोनामराशिःस्मृतोबुधैः ॥ ४८ ॥ऋणिताधनिताचात्रपूर्ववत्परिकीर्तिता॥उक्तान्यतममार्गेणशोध
नीयमृणंधनैः ॥ ४९ ॥

णपृथक्कृतैःसाधकनामाक्षरैर्योजयेत्॥४६॥४७॥४८॥ऋणिताधनिताचपूर्ववत् अधिकऋणीत्यादिप्रागुक्तरीत्या ४९॥

मंत्रस्यऋणित्वेहेतुमाह ॥ योमंत्रइति ॥ पूर्वजन्मन्युपासनसमयेपापसद्भावात्पापक्षयंकुर्वन्नान्यत्फलंददौततःपापक्ष
येकृतेफलदानकाले उपासितुरायुःक्षयो जातः समंत्रःफलादानाज्जन्मांतरेऋणीजातः ॥ सप्राप्तिमात्रेणेष्टफलदो

योमंत्रःपूर्वजनुषिसेवितोनाददात्फलम्॥पापात्पापक्षयेजातेफलावाप्तिरनेहसि ॥५० ॥ आयुःक्षया
द्गतोनाशंसाधकोस्यभवांतरे ॥ ऋणित्वात्प्राप्तिमात्रेणमंत्रोभीष्टंप्रयच्छति ॥ ५१ ॥ समांकौयद्युभौ
राशीतदासंसेवनात्फलम् ॥ धनीमंत्रस्तुसंप्राप्तःफलत्यधिकसेवया ॥ ५२ ॥ मंत्राणांशोधनेचैतत्प्र
कारांतरमुच्यते॥षट्कोणेविलिखेत्पूर्वकोणाद्येकैकवर्णकान् ॥५३ ॥ अकारादिहकारांतान्नपुंसकवि
वर्जितान्॥ नामाद्यक्षरमारभ्यमंत्रार्णावधिशोधयेत् ॥ ५४॥प्रथमेसंपदांप्राप्तिर्द्वितीयेधनसंक्षयः ॥
तृतीयेधनसंप्राप्तिश्चतुर्थेबंधुविग्रहः ॥५५॥ पंचमेतुभवेदाधिःषष्ठेसर्वस्यसंक्षयः॥एवंसंशोधितंमंत्रंद
द्याच्छिष्यायमांत्रिकः ॥ ५६ ॥येषांमनूनांसिद्धादिशोधनंनास्तितान्ब्रुवे॥एकवर्णास्त्रिवर्णोवापंचा
र्णोरसवर्णकः ॥ ५७ ॥

भवतीत्यर्थः ॥ अनेहसिकाले ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ नपुंसकाऋॠऌॡवर्णाः ॥ ५४ ॥ ५५ ॥ ५६ ॥
रसवर्णःषडर्णः ॥ ५७ ॥

रदनाक्षरोद्वात्रिंशदर्णः ॥ कूटोव्यंजनसमूहः ॥ ध्रुवःप्रणवः ॥५८॥ परा ह्रीं ॥५९॥ पक्षिनायकोगरुडमंत्रः ॥ ६० ॥

सप्ताणौंनववर्णश्चरुद्राणोरदनाक्षरः ॥ अष्टाणौंहंसमंत्रश्चकूटोवेदोदितोध्रुवः ॥ ५८ ॥ स्वप्नलब्धःस्त्रियाप्राप्तोमालमंत्रोनृकेसरी॥प्रासादोरविमंत्रश्चवाराहोमातृकापरा ॥ ५९ ॥ त्रिपुराकाममंत्रश्चाज्ञासिद्धःपक्षिनायकः॥बौद्धमंत्राजैनमंत्रानैवसिद्धादिशोधनम् ॥ ६० ॥ एतद्भिन्नेषुमंत्रेषुशुद्धिरावश्यकीमता॥विद्यांमंत्रंस्तवंसूक्तमरिभूतंत्यजेद्ध्रुवम् ॥ ६१ ॥ अरिमंत्रोगृहीतश्चेदज्ञानवशतस्तदा ॥ तस्यत्यागःप्रकर्तव्यस्तत्प्रकारोधुनोच्यते ॥ ६२ ॥ सुदिनेस्थापयेत्कुंभंसर्वतोभद्रमंडले ॥ विलोमंसंजपन्मंत्रंपूरयेत्तंसुपाथसा ॥६३॥तत्रदेवंसमावाह्ययजेदावरणान्वितम् ॥ तदग्रेस्थंडिलंकृत्वाप्रतिष्ठाप्यानलंततः ॥ ६४ ॥ जुहुयान्मूलमंत्रेणविलोमेनशतंघृतैः॥दिक्पतिभ्योबलिंदद्यात्पायसान्नैर्घृतान्वितैः ॥ ६५ ॥ पुनःसंपूज्यदेवेशंप्रार्थयेन्मनुनामुना ॥ आनुकूल्यमनालोच्यमयातरलबुद्धिना ॥ ६६ ॥ यदुपात्तंपूजितंचप्रभोमंत्रस्वरूपकम् ॥ तेनमेमनसःक्षोभमशेषंविनिवर्तय ॥६७॥

॥ ६१ ॥ ६२ ॥ अरिमंत्रत्यागप्रकारमाह॥ सुदिनइति ॥ सुपाथसाशोभनोदकेन ॥ ६३ ॥ ६४ ॥ ६५ ॥६६ ॥ ६७॥

॥ ६८ ॥ ६९ ॥ तंकुंभंजलैरापूर्यतत्रकुंभेमंत्रयुक्तंतालपत्रंक्षिपेत् ॥ क्रमोत्क्रमगतयावर्णमालयारामायनमः आंइ
त्यादिलांतंप्रजप्यततआरभ्यपुनरकारपर्यंतंगणयेत् ॥ एवंजप्तोरिमन्त्रोपिसिद्धिदः ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥

पापप्रतिहतंचास्तुभूयाच्छ्रेयःसनातनम् ॥ तनोतुममकल्याणंपावनीभक्तिरस्तुते॥६८॥एवंसंप्रार्थ्य
देवेशंकर्पूरागरुचंदनैः॥ विलोमंविलिखेन्मंत्रंताडपत्रेतदर्चयेत्॥६९॥प्रबध्यनिजमूर्धन्येतत्स्नायात्कुं
भस्थितैर्जलैः॥पुनःसंपूर्ययंततोयैस्तस्यास्येमंत्रपत्रकम् ॥७०॥ संपूज्यकुंभेसरितितडागेवाविनिक्षि
पेत् ॥ विप्रान्संभोज्यमुच्येतपीडयासौमनूत्थया॥ ७१॥अनेकधाशोधनेचेच्छुद्धोनप्राप्यतेमनुः ॥
मायांकामंश्रियंचादौदद्यात्तद्दोषमुक्तये ॥ ७२॥यद्वादुष्टोमनुर्जप्तःसिध्येत्प्रणवसंपुटः॥यद्वाक्रमोत्क्र
मगयाप्रजप्तोवर्णमालया ॥७३॥मंत्रेयस्यभवेद्भक्तिर्विशेषःसमनूत्तमः॥वैरिकोष्ठमनुप्राप्तःसिद्धिदस्त
स्यजायते॥ ७४॥ बीजमंत्रास्तथामंत्रामालामंत्रास्तथापरे॥त्रिधामंत्रगणाःप्रोक्ताबुधैरागमवेदिभिः
॥७५॥बीजमंत्रादशार्णांतास्ततोमंत्रानखावधि॥विंशत्यधिकवर्णायेमालामंत्रास्तुतेस्मृताः ॥७६॥

७४ ॥ त्रिविधान्मंत्रानाह ॥ बीजेति ॥ ७५ ॥ नखावाध ॥ विंशत्यर्णावधि ॥ ७६ ॥

॥ ७७ ॥ ७८ ॥ ७९ ॥ वर्गगाःतृतीयाः गजडदबाः ॥ कर्णौउऊ ॥ ओलळाएतभूवर्णाः ॥ ८० ॥ नासयौ ऋॠऔ
घझढधभवसएतेजलवर्णाः ॥ नेत्रेइति ॥इई खछठथफऐरक्षएतेआग्नेयाः ॥ ८१ ॥ वर्गाद्याइति ॥ अआएकचटतपय

वाल्येवयसिसिद्ध्यंतिबीजमंत्राउपासितुः॥मंत्रासिद्धायौवनेतुमालामंत्राश्चवार्द्धके॥७७उक्तान्यस्या
मवस्थायामभीष्टप्रातयेसुधीः ॥ बीजमंत्रादिमन्त्राणां द्विगुणंजपमाचरेत्॥७८॥ स्वकुलान्यकुला
र्थ्योथमंत्राणांभेदउच्यते ॥ प्रकृतिःपंचभूतात्माततोजातातुमातृका ॥७९ ॥ तस्माद्वर्णास्तुपंचाश
त्पंचभूतमयायतः॥तृतीयावर्गगाःकर्णावोलळाःपार्थिवामताः॥८० ॥नासयौवर्गतुर्याश्चवसौवर्णाः
स्मृताअपाम् ॥ नेत्रेद्वितीयावर्गाणामैरक्षापावकात्मकाः ॥८१॥ वर्गाद्यानंतझिंटीशाअयषामारुता
मताः॥वर्गांतिमाःकपोलौशोहोबिंदुश्चेतिनाभसाः ॥८२॥विसर्गस्तुप्रकृत्यात्मासर्वभूतमयोयतः॥
प्राणेरितोविनिर्यातिकंठादिस्थानमस्पृशन् ॥ ८३ ॥

षाएतेवायवीयाः ॥ वर्गांतिमाइति ॥ ङञणनमळलृशहअंएतेनाभसाः ॥ ८२ ॥ विसर्गस्यपंचभूतमयत्वमाह ॥
विसर्गइति ॥ अन्येवर्णाःकंठादिस्थानानिस्पृशंतोनिर्यांतिविसर्गस्तुनतथेतिसर्वभूतमयत्वम् ॥ ८३ ॥

एषांस्वकुलान्यकुलत्वमाह ॥ पार्थिवेति ॥८४ ॥ ८५॥ ८६॥८७॥८८॥८९॥ फलमाह॥ स्वेति ॥ स्वकुलेऽभीप्सिता

पार्थिवादिकवर्णानांस्वकीयाःस्वकुलाभिधाः॥पार्थिवस्यचवर्णस्यमित्रंवारुणमक्षरम् ॥८४॥तैजसं
शत्रुभूतंस्यादुदासीनंतुमारुतम् ॥ जलोद्भवस्यवर्णस्यपार्थिवंमित्रमीरितम्॥८५॥सपत्नंवह्निसंभूत
मुदासीनंतुवायवम्॥तैजसस्याथवर्णस्यवायवंमित्रमुच्यते ॥ ८६॥ विद्वेषीवारुणोवर्णउदासीनस्तु
पार्थिवः ॥ पवनोत्थितवर्णस्यामित्रंवह्निसमुद्भवम् ॥ ८७ ॥ शत्रुःपार्थिववर्णःस्यादुदासीनस्तुपा
थजः ॥ चतुर्णांपार्थिवादीनामाकाशार्णःसखासदा ॥८८॥मनोःसाधकनाम्नोपियोवर्णावादिमौत
योः ॥ स्वकुलादिकभेदस्तुशोध्योमंत्रप्रदित्सुना॥८९॥ स्वकुलेभीप्सितासिद्धिःसिद्धिर्मैत्रेपिकी
र्तिता ॥ अमित्रेमरणंरोगउदासीनेनकिञ्चन॥९०॥उदासीनममित्रंचमंत्रंदूरेणवर्जयेत् ॥ स्वकुलंमि
त्रभूतंचगृह्णीयादिष्टकामुकः॥९१॥नक्षत्रैक्येपिसप्रोक्तंस्वकुलंनाममंत्रयोः॥पुंस्त्रीनपुंसकाःप्रोक्तामन
वस्त्रिविधाबुधैः॥९२॥वषडंताःफडंताश्चपुमांसोमनवःस्मृताः॥वौषट्स्वाहांतगानार्य्योहुंनमोंतानपुंस
काः॥९३॥वश्योच्चाटनरोधेषुपुमांसःसिद्धिदायकाः ॥क्षुद्रकर्मरुजांनाशेस्त्रीमंत्राःशीघ्रसिद्धिदाः९४॥

सिद्धिरित्यर्थः॥९०॥९१॥पुनर्मंत्रत्रैविध्यमाह ॥ पुंस्त्रीति॥९२॥९३॥ तेषांविनियोगमाह ॥ वश्योच्चाटनेति॥९४॥

॥ ९५॥ ९६ ॥ छिन्नत्वादीति छिन्नोरुद्धःशक्तिहीनइत्यादयः ॥ पंचाशद्दोषास्तल्लक्षणानिचशारदातिलकेद्वितीय पटलेउक्तानि ग्रंथगौरवभयान्नलिख्यंते ॥ सप्तकोटिमितामंत्राःसंति ॥ तेसर्वेपितद्दोषाक्रांताएव ॥९७॥ जनना ख्यंसंस्कारमाह ॥ भूर्जपत्रेरोचनाकुंकुमचंदनैरात्माभिमुखंत्रिकोणंकृत्वात्रिभ्योपिकोणेभ्योमध्येकृताभिःषट्षट्रे

अभिचारेस्मृताःक्लीबाएवंतेमनवस्त्रिधा ॥ नक्षत्रशोधनेजन्मनक्षत्रमितरत्रतु ॥९५ ॥ शोधनेमंत्रिभि र्ग्राह्यंप्रसिद्धंजन्मनामता ॥ दत्तःसंशोधितोमंत्रोभवेच्छिष्येष्टसिद्धये ॥९६ ॥ छिन्नत्वादिकदोषाये पंचाशन्मंत्रसंस्थिताः ॥ तैर्दोषैःसकलाव्याप्तामनवःसप्तकोटयः॥९७॥अतस्तद्दोषशांत्यर्थंसंस्कार दशकंचरेत् ॥ भूर्जपत्रेलिखेत्सम्यक्त्रिकोणंरोचनादिभिः॥९८ ॥ वारुणंकोणमारभ्यसप्तधाविभजे त्समम् ॥ एवमीशाग्निकोणाभ्यांजायंतेतत्रयोनयः ॥ ९९ ॥ नववेदमितास्तत्रविलिखेन्मातृकांक मात् ॥ अकारादिहकारांतामीशादिवरुणावधि ॥ १००॥ देवींतत्रसमावाह्यपूजयेच्चंदनादिभिः ॥ ततःसमुद्धरेन्मंत्रजननंतदुदीरितम् ॥ १०१ ॥

खाभिः समाभिर्मध्येनववेदमिता एकोनपंचाशत्त्रिकोणाःकोष्ठाजायंते ॥ तत्रेशानादिपश्चिमकोणांतमन्तमातृकां लिखित्वाऽऽवाह्यसंपूज्यततएकैकमंत्रार्णमुद्धरेत् ॥ ततःसंमार्ज्यपत्रांतरेलिखेदित्यर्थः ॥ एतज्जननम् ॥ ९८ ॥ ॥ ९९ ॥ १०० ॥ १०१ ॥

दीपनमाह ॥ जपइति ॥ हंसमंत्रेणपुटितस्यमंत्रस्यसहस्रंजपो-दीपनम् ॥ हंसःरामायनमःसोहंइति॥बोधनमाह ॥
नभइति ॥ नभोहः वह्निरः इंदुर्बिंदुस्तैर्युक्तोऽर्घीशः ॥ तेनहूं ॥ एतत्संपुटितस्यमनोःपंचसहस्रजपो-बोधनम् ॥
हूंरामायनमःहूंइति ॥ फट्रामायनमःफडितिसहस्रजपस्तु-ताडनत् ॥ १०२ ॥ १०३ ॥ अभिषेकमाह ॥ वागि

जपोहंसपुटस्यास्यसहस्रंदीपनंस्मृतम् ॥नमोवह्नींदुयुक्तार्घिसंपुटस्यजपोमनोः ॥ १०२ ॥ सहस्र
पंचकमितोबोधनंतत्स्मृतंबुधैः॥सहस्रंप्रजपेदस्त्रपुटितंताडनंहितत् ॥ १०३ ॥ वाग्हंसतारैर्जप्तेनसह
स्रंपाथसामनुम् ॥ अभिषिंचेतवागाद्यैरभिषेकोयमीरितः ॥ १०४ ॥ हरिर्वह्न्यान्वितस्तारीवषडंतो
ध्रुवादिकः॥सहस्रंतत्पुटंजप्याद्विमलीकरणेमनुः ॥ १०५ ॥

ति ॥ ऐंहंसःॐइतिमंत्रेणसहस्राभिमंत्रितैर्जलैस्तेनैवमंत्रेणताडपत्रोपारिलिखितमंत्रेऽभिषेचनम्-अभिषेकः ॥ १०४ ॥
विमलीकरणमाह ॥ हरिरिति ॥ हरिस्तः वह्न्यान्वितोरयुतः तारीप्रणवयुतः-त्रों ॥ ॐत्रोंवषट्रामायनमःवषट्त्रों
ॐइतिसहस्रजपो-विमलीकरणम् ॥ १०५ ॥

जीवनमाह ॥ स्वधेति ॥ स्वधावषट्रामायनमःवषट्स्वधेति सहस्रजपो-जीवनम् ॥ तर्पणमाह ॥ क्षीरेति॥दुग्ध घृतोदकैस्तेनैवमंत्रेणतास्मिन्नेवशततंतर्पयेदिति-तर्पणम् ॥ १०६ ॥ गोपनमाह ॥ जपेदिति ॥ ह्रींपुटस्यसहस्रंजपो-गोपनम् ॥ आप्यायनमाह ॥ बालेति ॥ बालायास्तार्तीयंसौःगगनंहः तदाद्येन ॥ तेनहसौःइतिबीजेनसंपुटस्यसह

स्वधावषट्पुटंजप्यात्सहस्रंजीवनेमनुम् ॥ क्षीराज्ययुतपाथोभिस्तर्पणेतर्पयेन्मनुम् ॥ १०६॥ जपे
न्मायापुटंमंत्रंसहस्रंगोपनंहितत्॥बालातार्तीयबीजेनगगनाद्येनसंपुटम् ॥ १०७॥ सहस्रप्रजपेन्मं
त्रमेतदाप्यायनंमतम्॥संस्कारदशकंप्रोक्तंमन्त्रणांदोषनाशकम् ॥ १०८ ॥सिद्धिप्रदाकलियुगेयेमन्त्रा
स्तान्वदाम्यतः॥त्र्यर्णएकाक्षरोनुष्टुप्त्रिविधोनरकेसरी ॥ १०९ ॥

स्रंजपः-आप्यायनम् ॥ एकवर्णेनसंपुटत्वम्-आदावंतेचोच्चारणमेव ॥ एकस्यत्रिलोमत्वाशक्तेः ॥ १०७ ॥ १०८॥
सिद्धमंत्रानाह ॥ त्र्यर्णइति ॥ एकवर्णादित्रिविधोनरसिंहः १०९ ॥

एकार्णोद्विविधोहयग्रीवः ॥ चिंतामणिःक्षन्नयोंइति ॥ ११० ॥ १११ ॥११२ ॥ विप्रक्षत्रियविड्भ्योदेयान्मंत्रानाह ॥ अघोरेति ॥ उमामाहेश्वरः ॐह्रींह्रौंनमःशिवायेत्यादि ॥ ११३ ॥ ११४ ॥ मंत्रराजोनरसिंहः ॥ ११५ ॥

एकाक्षरोर्जुनोनुष्टुब्द्विविधस्तुरगाननः॥चिन्तामणिःक्षेत्रपालोभैरवोयक्षनायकः॥ ११० ॥गोपालो गजवक्त्रश्चचेटकायक्षिणीतथा॥मातंगीसुंदरीश्यामातारा कर्णपिशाचिनी ॥ १११ ॥ शबर्य्येकजटा वामाकालीनीलसरस्वती॥ त्रिपुराकालरात्रिश्चकलाविप्रप्रदाइमे ॥ ११२ ॥ अघोरादक्षिणामूर्तिरुमामाहेश्वरोमनुः॥हयग्रीवोवराहश्चलक्ष्मीनारायणस्तथा ॥ ११३ ॥ प्रणवाद्याश्चतुर्वर्णार्विहेमंत्रास्तथारवेः॥प्रणवाद्योगणपतिर्हरिद्रागणनायकः ॥ ११४ ॥ सौरोष्टाक्षरमंत्रश्चतथारामषडक्षरः ॥ मंत्रराजोध्रुवादिश्चप्रणवोवैदिकोमनुः॥ ११५॥ वर्णत्रयायदातव्याएतेशूद्रायनोबुधैः ॥ सुदर्शनंपाशुपतमाग्नेयास्त्रंनृकेसरी ॥ ११६ ॥ वर्णद्वयायदातव्यानान्यवर्णेकदाचन॥ छिन्नमस्ताचमातंगीत्रिपुराकालिकाशिवः ॥ ११७ ॥ लघुश्यामाकालरात्रिर्गोपालोजानकीपतिः॥उग्रताराभैरवश्चदेयावर्णचतुष्टये ॥ ११८ ॥

विप्रक्षत्रदेयानाह ॥ सुदर्शनमिति ॥ ११६ ॥ वर्णचतुष्टयदेयान्मंत्रानाह ॥ छिन्नमस्तेति ॥ ११७ ॥ ११८ ॥

॥ ११९ ॥ बीजेषुविशेषमाह ॥ मायामिति ॥ मायाकामश्रीवाग्बीजानिमुखजन्मनेविप्राय ॥ १२० ॥ कामश्री वाचोबाहुजेभ्यः क्षत्रियेभ्यः ॥ श्रीवाचौऊरुजेभ्योविड्भ्यः ॥ वाक्शूद्राय ॥ अन्येभ्यःप्रतिलोमानुलोमजेभ्योव मीदयः ॥ १२१ ॥ १२२ ॥ हयमारैःकरवीरैः ॥ १२३ ॥ जातिभिर्जातिपुष्पैर्होमेनगिरोवाचःसिद्धिः ॥ १२४ ॥



मृगीदृशांविशेषेणमंत्राएतेसुसिद्धिदाः॥ ब्राह्मणाःक्षत्रियावैश्याःशूद्रानार्य्योधिकारिणः ॥ ११९ ॥

श्रद्धावंतोदेवगुरुद्विजपूजासुसर्वथा॥मायांकामंश्रियंवाचंप्रदद्यान्मुखजन्मने ॥१२०॥ मायामृतेबा

हुजेभ्यऊरुजेभ्यःश्रियंगिरम्॥वाणीबीजंतुशूद्रेभ्योऽन्येभ्योवर्मवषण्नमः॥ १२१ ॥ सर्वसाधारणम

थहोमद्रव्यमिहोच्यते॥फलैर्हुतैःसुखावाप्तिःपालाशैरिष्टसिद्धये ॥ १२२ ॥ हयमारैःस्त्रियोवश्याशुद्

च्यारोगसंक्षयः॥दूर्वयाबुद्धिवृद्धिःस्याद्गुडेनजनवश्यता ॥ १२३॥ बिल्वपत्रैघृतःपद्मैःपाटलैश्चंपकैः

श्रियः॥सिद्धार्थैर्मल्लिकाभिश्चकीर्तयेज्जातिभिर्गिरः ॥ १२४ ॥ व्रीहिभिश्चयवैःप्लक्षोदुंबराश्वत्थजेध

सा॥तिलैस्त्रिमधुरैरिष्टाःसंपदःस्युर्नृणांहुतैः ॥ १२५ ॥ किंशुकैःकासमर्दैश्चकृतमालैश्चपाटलैः ॥

विप्रादयःक्रमाद्वश्याःसौभाग्यंगंधवस्तुभिः ॥ १२६ ॥

प्लक्षादिजातेनएधसासमिद्भिः ॥ १२५ ॥ किंशुकादिभिर्हुतैःक्रमाद्विप्रादयोवश्याः ॥ कृतमालोराजवृक्षः ॥ गंधव-

स्तुभिःकर्पूरादिभिः ॥ १२६ ॥

कलापैर्मयूरपिच्छैस्तेषामरीणांभयोत्पत्तिः ॥ १२७ ॥ १२८ ॥ जन्मांतरोपार्जितपापबाहुल्यादेकपुरश्चरणेकृतेयदीष्ट
सिद्धिर्नभवेत्तर्हिपुनःपुरश्चरणंकुर्यात् ॥ १२९ ॥ संक्षेपपुरश्चरणप्रकारमाह ॥ यद्वेति ॥ समुद्रगामिन्यांगङ्गादिका
याम् ॥ विप्रान्संभोज्यहोमसमानसंख्यानेवेत्यर्थः॥तद्दशांशतइत्युभयत्रापिसंबंधात् ॥ तद्दशांशतोजपदशांशेनच

कोद्रवैर्व्याधियोरीणामुन्मत्तत्वंबिभीतकैः ॥कलापैःसाध्वसोत्पत्तिर्माषैस्तेषांतुमूकता ॥ १२७ ॥
समिद्भिःशाल्मलैर्नाशोरिपूणामचिराद्भवेत् ॥ किंभूरिणाददातीष्टंदेवतासमुपासिता ॥ १२८॥ पुर
श्चरणएकस्मिन्कृतेजन्मांतराघतः ॥ मंत्रोयदिनसिद्धःस्यात्तदातत्पुनराचरेत् ॥ १२९ ॥ यद्वासमु
द्रगामिन्यांनद्यामिंदुरविग्रहे ॥ स्पर्शान्मोक्षांतमाजप्यजुहुयात्तद्दशांशतः ॥१३० ॥ विप्रान्संभोज्य
नानान्नैर्मंत्राणांसिद्धिमाप्नुयात् ॥शश्वज्जपपरस्यापिसिध्यंतिमनवोचिरात् ॥१३१ ॥ इतिमंत्रम
होदधौमंत्रशोधनंनामचतुर्विंशस्तरंगः ॥ २४ ॥ ॥ कर्माणिषडथोवक्ष्येसिद्धिदानिप्रयोगतः ॥
शांतिर्वश्यंस्तंभनंचद्वेषमुच्चाटमारणे ॥ १ ॥

जुहुयात् ॥ विप्रान्संभोज्यचसिद्धिमवाप्नुयादितिसम्बन्धः ॥ १३० ॥ १३१ ॥ इति श्रीमंत्रमहोदधिव्याख्या
यांनौकायांमहीधरनिर्मितायांमंत्रशोधनंनामचतुर्विंशस्तरंगः ॥ २४ ॥ ॥ षट्कर्माणिवक्तुमुपक्रमते॥ कर्माणी
ति ॥ तान्याह ॥ शांतिरिति ॥ १ ॥

लक्षणमाह ॥ शांतीरोगादिनाशनमिति ॥ देवताद्येकोनविंशतिपदार्थान् ॥ प्रतिकर्माभिन्नान् यथास्वंज्ञात्वाषट्क
र्माणिकुर्यादित्याह ॥ देवतादेवतावर्णाइत्यादिना ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ उद्देशक्रमेणादौदेवता आह ॥ रति
रिति ॥ शांत्यादिकर्मारंभेक्रमाद्रत्यादिपूजा ॥ ॥देवतावर्णानाह ॥ सितेति ॥ रतिःसिता वाणीअरुणेत्यादि०॥

उक्तानीमानिकर्माणिशांतीरोगादिनाशनम्॥वश्यंवचनकारित्वंस्तम्भोवृत्तिनिरोधनम् ॥२॥ द्वेषोऽ
प्रीतिःप्रीतिमतोरुच्चाटःस्थानतश्च्युतिः ॥ मारणंप्राणहरणमितिषट्कर्मलक्षणम् ॥ ३ ॥ देवतादेवता
वर्णाऋतुदिग्दिवसासनम् ॥ विन्यासामंडलंमुद्राक्षरंभूतोदयःसमित् ॥४॥ मालाग्निर्लेखनंद्रव्यंकुंड
स्रुक्स्रुवलेखनीः॥षट्कर्माणिप्रयुंजीतज्ञात्वैतानियथायथम् ॥ ५ ॥रतिर्वाणीरमाज्येष्ठादुर्गाकालीच
देवता ॥ सितारुणहरिद्राभमिश्रश्यामलधूसराः ॥ ६ ॥ प्रपूजयेतकर्मादौस्ववर्णैःकुसुमैःक्रमात् ॥
ऋतुषट्कंवसंताद्यमहोरात्रंभवेत्क्रमात् ॥ ७ ॥ एकैकस्यऋतोर्मानंघटिकादशकंमतम्॥हेमन्तंचव
संताख्यंशिशिरंग्रीष्मतोयदौ ॥ ८ ॥ शरदंकर्मणांषट्केयोजयेत्क्रमतःसुधीः॥शिवसोमेंद्रनिर्ऋति
पवनाग्निदिशःक्रमात् ॥ ९ ॥

॥ ६ ॥ स्ववर्णैःसितादिवर्णैः ॥ ऋतूनाह ॥ ऋतुषट्कमिति ॥ शांत्यादौवसंतादीन्युंजीत ॥ प्रत्यहंसूर्योदयात्ना
डीदशकंवसंतः तदग्रिमंनाडीदशकंशिशिरइत्यादि० ॥ ७ ॥ ८ ॥ दिशआह ॥ शिवेति ॥ शिवादिगैशानी ॥९॥

दिवसानाह ॥ शुक्लपक्षेइति ॥ १०॥ ११ ॥ १२ ॥ १३ ॥ तदंतगाशुक्लप्रतिपत् ॥ १४ ॥ आसनान्याह ॥पद्म मिति ॥ पद्मस्वस्तिकेउक्ते ॥ विकटलक्षणंयथा—'जानुजंघांतरालेतुभुजयुग्मंप्रकल्पयेत् ॥ विकटासनमेतत्स्यात्' इति ॥ कुक्कुटासनंयथा—'उपविश्योत्कटासने ॥ कृत्वोत्कटासनंपूर्वंसमपादद्वयंततः ॥ अंतर्जानुकरद्वंद्वंकुक्कुटास

तत्तत्कर्माणिकुर्वीतजपंस्तत्तद्दिशामुखः॥शुक्लपक्षेद्वितीयाचसप्तमीपंचमीतथा ॥ १० ॥ तृतीयाबुध
जीवाभ्यांयुताशांतिविधौमता॥चतुर्थीनवमीषष्ठीत्रयोदशीतिथिस्तथा ॥ ११ ॥ जीवसोमयुताश
स्तावशीकरणकर्मणि॥ एकादशीचदशमीनवमीचाष्टमीपुनः॥ १२॥ शनैश्चरसितोपेताप्रोक्ताविद्वे
षकर्मणि॥कृष्णेचतुर्दश्यष्टम्यौभानुसूनुयुतेयदि ॥ १३ ॥उच्चाटनाख्यंकर्मात्रकर्तव्यंफलसिद्धये ॥
भूताष्टम्यौकृष्णगतेअमावास्यातदंतगा ॥ १४ ॥ भानुमंदकुजोपेताःस्तंभमारणयोःशुभाः॥ पद्मस्व
स्तिकविकटेकुक्कुटंवज्रभद्रके ॥ १५ ॥

नमीरितम्'इति ॥ 'ऊर्वोःपादौक्रमान्यस्येज्जान्वोःप्रत्यङ्मुखांगुली ॥ करौनिदध्यादाख्यातं वज्रासनमनुत्तमम्'इ ति'सीवन्याःपार्श्वयोर्न्यस्येद्गुल्फयुग्मंसुनिश्चलम्॥ वृषणाधःपादपार्ष्णीपाणिभ्यांपरिबंधयेत ॥भद्रासनंसमुद्दिष्टंयोगि भिःपूजितंपरम्' इतिचान्येबोध्ये ॥ १५ ॥

शारीरमासनमुक्त्वोपवेशार्थमासनमाह ॥ गोखड्गेति ॥ फेरुःसृगालः ॥ गवादीनांकृत्तौचर्मण्युपविश्यशांत्यादि विधेयम् ॥ १६ ॥ १७ ॥ विन्यासानाह ॥ ग्रंथनमिति ॥ १८ ॥ ग्रथनलक्षणमाह ॥ एकइति ॥ १९ ॥ विदर्भलक्षणमाह ॥ आदाविति ॥ ग्रंथनविदर्भयोर्मंत्रनामवर्णलेखनेऽन्यतरसमाप्तौपुनर्लेखनम् ॥ २० ॥ संपुटलक्षणमाह॥

शांत्यादिषुप्रकुर्वीतक्रमादासनमुत्तमम्॥गोखड्गगजफेरूणांमेषीमहिषयोस्तथा॥१६॥ कृत्तौनिवेश्य कुर्वीतजपंशांत्यादिकर्मणि॥आसनान्येवसंकीर्त्यविन्यासःप्रोच्यतेधुना॥ १७॥ग्रंथनंचविदर्भाख्य संपुटोरोधनंतथा॥योगःपल्लवएतेषड्विन्यासाःकर्मसुस्मृताः॥ १८ ॥प्रत्येकमेषांषण्णांतुलक्षणंप्रणि गद्यते॥एकोमंत्रस्यवर्णःस्यात्ततोनामाक्षरंपुनः ॥१९॥ मंत्रार्णौनामवर्णश्चेत्येवंग्रंथनमीरितम् ॥आ दौमंत्राक्षरद्वंद्वमेकंनामाक्षरंततः ॥ २०॥ एवंपुनःपुनःप्रोक्तोविदर्भोमंत्रवित्तमैः॥मंत्रमादौसमुच्चार्य्य ततोनामाखिलंपठेत्॥२१॥अंतेव्युत्क्रमतोमंत्रमेषसंपुटईरितः॥ आदिमध्यावसानेषुनाम्नोमंत्रस्तुरो धनम्॥२२॥नामांतेतुमनुर्योगोमंत्रांतेनामपल्लवः॥ अर्द्धचंद्रनिभंपार्श्वद्वयेपद्मद्वयांकितम् ॥ २३ ॥

मंत्रमिति ॥ २१ ॥ रोधनमाह ॥ आदीति ॥ २२ ॥ योगमाह ॥ नामान्तइति ॥ पल्लवमाह ॥ मंत्रांतइति ॥ मंडलमाह ॥ अर्द्धचंद्रेति ॥ २३ ॥

॥२४॥तद्वृत्तंबिंदुषट्कांकितंवायुमंडलम् ॥ मुद्राआह ॥ सरोरुहमिति ॥ सरोरुहंपद्ममुद्रा ॥ सायथा-'करौद्वौसंमुखौकृत्वासंहतावुन्नतौपुनः ॥ अंगुलीःप्रसृतामध्येंगुष्ठौपद्मस्यमुद्रिका'इति ॥ पाशमुद्रायथा-'तर्जनीमध्यमेवामेऊर्ध्वमुख्यौविधायच ॥ दक्षिणे द्वेअधोमुख्यौसंमुख्यौचपरस्परम् ॥ पाशमुद्राभवेदेषामिथःसंपीडनेनतयोः'इति ॥ गदामुद्रायथा-'अन्योन्याभिमुखौकृत्वाहस्तौतुग्रथितावुभौ ॥ अंगुष्ठौमध्यमेतद्वत्संयुक्तेसुप्रसारिते ॥ गदामुद्रेयमुदिता

जलस्यमंडलप्रोक्तंप्रशस्तंशांतिकर्मणि ॥ त्रिकोणंस्वस्तिकोपेतंवश्येवह्नेस्तुमंडलम् ॥२४॥ चतुरस्रंवज्रयुक्तंस्तंभेभूमेस्तुमंडलम् ॥ वृत्तंदिवस्तद्विद्वेषेबिंदुषट्कांकितंतुतत् ॥२५॥ वायुमंडलमुच्चाटेमारणेवह्निमंडलम् ॥ सरोरुहंपाशगदेमुसलंकुलिशंत्वसिः ॥२६॥

दर्शिताविघ्नहारिणी'इति ॥मुसलमुद्रोक्ता॥ कुलिशंवज्रमुद्रा ॥ सायथा-'कनिष्ठांगुष्ठयुङ्मुद्रात्रिकोणात्वशनेर्मता'इति ॥ अशनेर्वज्रस्यकनिष्ठांगुष्ठयोगादन्यासांप्रसारणात्रिकोणेत्यर्थः ॥ असिःखड्गमुद्रा ॥ सायथा-'ऊर्ध्वस्यवामहस्तस्यतर्जन्याद्यंगुलित्रयम् ॥ प्रसार्ययोजयेदन्येमिथोंगुष्ठकनिष्ठिके ॥ खड्गमुद्रेयमुदितासर्वशत्रुनिकृंतनी'इति ॥ २५ ॥ २६ ॥

होममुद्राआह ॥ मृगीति ॥ २७ ॥ तासांलक्षणमाह ॥ मध्यमेति ॥ २८ ॥ २९ ॥ वर्णानाह ॥ चद्रात ॥ शांतौ चंद्रवर्णायंत्रेबीजत्वेनलेख्याः ॥ वशीकरणादौजलादिवर्णः ॥ ३० ॥ चंद्रवर्णानाह ॥ ॥ स्वराइति ॥ षोडशस्वराः सठावेतेऽष्टादशचंद्रवर्णाः सन्ति ॥ तथापिवश्यादौपंचभूतवर्णास्तुप्रातरंगेस्वकुलान्यकुलभेदउक्ताः ॥ तत्रयद्यपिचं



षण्मुद्राःकर्मषट्केस्युरथहोमेनिगद्यते । मृगीहंसीसूकरीतिहोमेमुद्रात्रयंमतम्॥ २७॥ मध्यमानामिकांगुष्ठयोगेमुद्रामृगीमता ॥ हंसीकनिष्ठाहीनानांसर्वासांयोजनेमता ॥२८॥सूकरीकरसंकोचेमुद्रालक्षणमीरितम् ॥ शांतोवश्येमृगीहंसीस्तंभनादिषुसूकरी॥२९॥चंद्रतोयधराकाशपवनानलवर्णकाः॥ षट्सुकर्मसुयंत्रस्यबीजान्युक्तानिमंत्रिभिः॥३०॥ स्वराःसठौचंद्रवर्णाभूतवर्णाउदीरिताः॥चन्द्रार्णहीनास्तेग्राह्यावशीकृत्यादिकर्मणि ॥ ३१॥केचित्सवलहान्यंरमाहुश्चंद्रादिवर्णकान्॥शांत्यादिकर्मसुज्ञेयाजातयःषडमूःक्रमात् ॥ ३२ ॥

द्रवर्णाअपिसंति ॥ तथापिवश्यादौतोयादिवर्णलेखनेचंद्रवर्णरहितानामेवजलादिवर्णानांलेखनम् ॥ ३१ ॥ केषांचिन्मतेसवलहयराःक्रमाच्चंद्रांबुभूनभोनिलानलवर्णाः ॥ ३२ ॥

जातिरूपान्वर्णानाह ॥ नमइति ॥ भूतोदयमाह ॥ नासेति ॥ नासाविवरयोरधस्तात्प्राणगतोजलोदयः ॥ नासा मध्यदण्डाश्रयेणप्राणगमनेधरोदयः ॥ सस्तम्भनेज्ञेयः ॥ ३३ ॥ ३४ ॥ नासाविवरमध्येप्राणगतौव्योमोदयः॥उप रिप्राणगतौवह्न्युदयः ॥ ३५ ॥ तिर्यक्प्राणगतौवायूदयः ॥ ३६ ॥ समिधआह ॥ दूर्वायाइति ॥ दाडिमेति ॥

नमःस्वाहावषड्वौषट्हुंफट्षण्मंत्रवित्तमैः ॥ नासापुटद्वयाधस्ताद्यदाप्राणगतिर्भवेत् ॥३३॥ तोयो दयस्तथाज्ञेयःशांतिकर्मणिसिद्धिदः ॥ नासादंडाश्रितगतौप्राणेस्तंभेधरोदयः ॥३४॥ पुटमध्यगतौ तस्मिन्द्वेषेव्योमोदयःशुभः ॥ पुटोपरिष्टाद्गमनेप्राणेस्यात्पावकोदयः ॥३५॥ तदाकर्मद्वयेसिद्धिर्मा रणेचवशीकृतौ॥ प्राणेतिर्य्यग्गतौज्ञेयउच्चाटेमारुतोदयः ॥३६॥दूर्वायाःसमिधःशांतौगोघृतेनसम न्विताः ॥ दाडिमप्रसुवोहोमेवश्येजाघृतसंयुताः॥३७॥मेषीघृताक्ताःसमिधःस्तंभेराजतरूद्भवाः ॥ धत्तूरसमिधोद्वेषेअतसीतैलसंयुताः ॥ ३८ ॥ चूतजाःकटुतैलाक्ताउच्चाटनविधौमताः ॥कटुतैलयुताः शस्तामारणेखदिरोद्भवाः ॥ ३९ ॥

वश्यार्थहोमेअजाघृताक्तादाडिमसमिधः ॥ ३७ ॥ स्तंभनेमेषीघृताक्काराजवृक्षसमिधः ॥३८॥ उच्चाटेसर्षपतैलाक्ता आम्रसमिधः ॥ ३९ ॥

मालामाह् ॥ शंखजेति ॥ स्तंभनेनिंबफलजा ॥ अरिष्टःफेनिलस्तत्फलजावामालाविधेया ॥ उच्चाटने वाहरदो
तथाअश्वदंतजा ॥ ४० ॥ मालायांगणनाप्रकारमाह् ॥ मध्यमायामिति ॥ ज्येष्ठनांगुष्ठेनावर्तयेत् भ्रामयेत् ॥४१॥
॥ ४२ ॥ ४३ ॥ मालामणिसंख्यामाह ॥ अष्टोत्तरशतमिति ॥ तदर्धंचतुष्पंचाशत् ॥ तदर्धंकंसप्तविंशतिः ॥ एषा

शंखजापद्मबीजोत्थानिंबारिष्टफलोद्भवा ॥ प्रेतदन्तभवावाहरदोत्थाखरदंतजा॥ ४० ॥ जपमालाः क्रमाज्ज्ञेयाः शांतिमुख्येषुकर्मसु ॥ मध्यमायांस्थितांमालांज्येष्ठेनावर्तयेत्सुधीः ॥४१॥शान्तौवश्ये तथापुष्टौभोगमोक्षार्थकेजपे॥ अनामांगुष्ठयोगेनस्तंभनादौजपेत्सुधीः ॥४२ ॥ तर्ज्जन्यंगुष्ठयोगेन द्वेषोच्चाटनयोःपुनः ॥ कनिष्ठांगुष्ठसंयोगान्मारणेप्रजपेत्सुधीः॥४३ ॥ अष्टोत्तरशतंसंख्यातदर्धंचतदर्धकम् ॥ मणीनांशुभकार्य्येस्यात्तिथिसंख्याभिचारके ॥ ४४ ॥ शान्तिर्वश्यंलौकिकाग्नौस्तंभनंवटजेनले॥ द्वेषःकलितरूत्पन्नेशेषेपितृवनस्थिते ॥ ४५ ॥

त्रिविधामालाशुभेकार्या ॥ अभिचारेस्तंभनादौपंचदशमणियुक्तामाला ॥ ४४ ॥ अग्निमाह् ॥ शांतिरिति ॥ वट
जेवटकाष्ठान्मथनोत्पादिते ॥ कलितरूद्भवेबिभीतकजाते ॥ शेषेउच्चाटनमारणकर्मणिश्मशानवह्नौहोमः ॥ ४५ ॥

वह्निप्रसंगात्काष्ठान्यप्याह ॥ शुभइति ॥ शुभेशांतिपुष्ट्यादौकर्मणिबिल्वादिकाष्ठैरग्निंप्रज्वालयेत् ॥ अशुभेस्तंभ
नादौविषवृक्षादिकाष्ठैः ॥ विषवृक्षःकुचिलाइतिप्रसिद्धः ॥ अक्षोबिभीतकः ॥ शेलुःश्लेष्मातकः ॥ ४६॥ अग्नि
प्रसंगादेवकर्मविशेषेवह्निजिह्वापूजामाह ॥ वह्नेरिति ॥ ४७ ॥ कनकाभिधाहिरण्या॥ ४८॥ होमप्रसंगाद्विप्रभो

शुभेकर्मणिबिल्वार्कपलाशक्षीरवृक्षजैः ॥ अशुभेविषवृक्षाक्षैर्निम्बधत्तूरशेलुजैः ॥ ४६॥ काष्ठैःप्रदीप
येदग्निंहोमकर्मणिमंत्रवित् ॥ वह्नेर्जिह्वांसुप्रभाख्यांशांतिकमणिपूजयेत्॥ ४७ ॥ वश्यकार्य्येहिरक्ता
ख्यांस्तंभनेकनकाभिधाम् ॥ विद्वेषेगगनांजिह्वामुच्चाटेप्यतिरक्तिकाम्॥ ४८ ॥ कृष्णांतुमारणेचार्चे
द्बहुरूपांतुसर्वतः ॥ भोज्येसंख्याविशेषोपिज्ञेयःशांत्यादिकर्मसु ॥ ४९ ॥ शांतौवश्येभोजयेतहोमा
द्विप्रान्दशांशतः॥ उत्तमंतद्भवेत्कर्मतत्त्वांशेनतुमध्यमम् ॥ ५० ॥होमाच्छतांशतोविप्रभोजनंत्वध
मंतुतत् ॥ शांतेर्द्विगुणितंविप्रभोजनंस्तम्भनेमतम्॥ ५१ ॥

जनसंख्यामाह भोज्येइति ॥ ४९ ॥ शांतिवश्ययोर्होमाद्दशांशेनद्विजानांभोजनमुत्तमम् ॥ होमात्पंचविंशांशेनत
न्मध्यमम् ॥ ५० ॥ शतांशेनाधमम् ॥ ५१ ॥

विप्रस्वरूपमाह ॥ अतिशुद्धेति ॥५२॥ उक्तब्राह्मणभोजनेअभिचारोत्थमेनःपापंनश्यति ॥ तस्मादुत्तमाद्विजाभोज्याः ॥ ५३ ॥ ५४ ॥ लेखनद्रव्यमाह ॥ चन्दनमिति ॥ रात्रिर्हरिद्रासाक्तंभनेलेखनद्रव्यम् ॥ अष्टाविषाणिमारणे ॥

त्रिगुणं द्वेषणोच्चाटेमारणेहोमसंमितम् ॥ अतिशुद्धकुलोत्पन्नाःसांगवेदविदोऽमलाः ॥५२॥ सदाचाररताविप्राभोज्याभोज्यैर्मनोहरैः ॥ पूज्यास्तेदेवताबुद्ध्यानमस्कार्याःपुनःपुनः ॥ ५३ संतोष्यामधुरैर्वाक्यैर्हिरण्यादिप्रदानतः ॥ अचिराल्लभतेभीष्टंगृहीतायांतदाशिषि ॥५४॥एनोभिचारकर्मोत्थंनश्यतिद्विजवाक्यतः॥ चन्दनंरोचनारात्रिर्गृहधूमश्चिताभवः॥५५॥ अंगारोष्टविषाणीतिशांत्यादौयंत्रलेखने ॥पूर्वोक्तंलेखनद्रव्यंगृह्णीयात्तदपिध्रुवम्॥५६॥पिप्पलीमरिचंशुंठीश्येनविष्ठाचचित्रकः॥गृहधूमोन्मत्तरसोलवणंचविषाष्टकम् ॥ ५७ ॥ शांतौवश्येलिखेद्भूर्जेस्तंभनेद्वीपिचर्मणि॥ खरचर्मणिविद्वेषेउच्चाटेध्वजवाससि ॥ ५८ ॥

पूर्वोक्तंयंत्रतरंगोक्तंलेखनद्रव्यम् ॥ तदपितत्तत्कामनयाग्राह्यम् ॥ ५५ ॥ ५६ ॥ अष्टाविषाण्याह॥ पिप्पलीति ॥ ॥ ५७ ॥ लेखनद्रव्यप्रसंगाल्लेखनाधारमाह॥ शांताविति ॥ ५८ ॥

॥ ५९ ॥ कुंडान्याह ॥ वृत्तमिति ॥ शांतौवृत्तकुंडंपश्चिमे ॥ पद्माकारंवश्येउत्तरे ॥ स्तंभनेचतुरस्रंपूर्वे ॥ द्वेषेत्रिकोणंनैर्ऋत्ये ॥ उच्चाटेषट्कोणंवायव्ये ॥ मारणेऽर्द्धचंद्राकारंदक्षिणइत्यर्थः ॥ ६० ॥ स्रुक्स्रुवावाह ॥ सौवर्णाविति ॥

नरास्थिनिलिखेद्यंत्रंमारणेमंत्रवित्तमः ॥ येत्वाधाराःस्मृतायंत्रतरंगेतेपिसंमताः॥ ५९॥वृत्तंपद्मंचतुष्कोणंत्रिषट्कोणंदलेंदुवत् ॥ तोयेशसोमशक्राणांयातुवाय्वोर्यमस्यच॥६०॥आशासुक्रमतःकुंडंशांतिमुख्येषुकर्मसु ॥ सौवर्णौयज्ञवृक्षोत्थौस्रुक्स्रुवौशांतिवश्ययोः ॥६१॥ स्तंभनादिषुकार्य्येषुस्मृतौलोहमयौहितौ ॥हेमजारूप्यजाजातीसंभवालेखनीशमे ॥ ६२ ॥ वश्येदूर्वांकुरोत्पन्नास्तंभनेगस्त्यवृक्षजा ॥ राजवृक्षभवावास्याद्विद्वेषेतुकरंजजा॥६३ ॥ शुभकर्मणिरम्याहेलेखनींरचयेत्सुधीः॥ बिभीतकोत्थितोच्चाटेमारणेतुपुमस्थिजा ॥६४ ॥ रिक्तातिथौकुजदिनेविष्टौतामशुभेपुनः॥भक्ष्यंचतर्पणंद्रव्यंतत्पात्रमथकीर्त्यते ॥ ६५ ॥

॥ ६१ ॥ लेखनीमाह ॥ शमेशांतौ ॥ ६२ ॥ ६३ ॥ ६४ ॥ देवताद्येकोनविंशतिवस्तूनिशांत्यादौनिरूप्यपुनरधिकंवक्तुंप्रतिजानीते ॥ भक्ष्यमिति ॥ ६५ ॥

परमान्नकंपायसम् ॥ स्थलाद्भ्रंशनेउच्चाटने ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ एवंकाम्यंकर्मनिरू
प्यतत्प्रसक्तिंवारयति ॥ शुभंवेति ॥ ७३ ॥ एवंचेत्किमित्युक्तंतदित्यतआह ॥ विषयेति ॥ ७४ ॥ पूर्वाचार्योक्त

शांतौवश्येहविष्यान्नंस्तंभनेपरमान्नकम् ॥ माषामुद्गाश्चविद्वेषेगोधूमाभ्रंशनेस्थलात् ॥ ६६॥ मसूरा
न्नंतथाश्यामाअजादुग्धोत्थपायसम् ॥ मारणेप्रोदितंभक्ष्यंमंत्रिणांकर्मकुर्वताम् ॥ ६७ ॥ शांतौवश्येह
रिद्राक्तंजलंतर्पणईरितम् ॥ मरिचाद्यंकवोष्णंतत्स्तंभनेमारणेतथा ॥ ६८॥ मेषरक्तान्वितंतोयंविद्वेषो
च्चाटयोर्मतम् ॥ स्वर्णपात्रंतर्पणेस्याच्छांतौवश्येचकर्मणि ॥ ६९ ॥ स्तम्भनेमृत्तिकापात्रंविद्वेषेरव
दिरोद्भवम् ॥ लोहनिर्मितमुच्चाटेकुक्कुटांडंतुमारणे ॥ ७० ॥ मृद्वासनेसमासीनःशान्तौवश्येप्रतर्पयेत् ॥
जानुभ्यामुत्थितःस्तंभेद्वेषादावेकपात्स्थितः ॥ ७१ ॥ षट्कर्मणांविधिःप्रोक्तएवंमंत्रज्ञतुष्टये ॥ सम्य
क्कृत्वान्यासजातमात्मरक्षांविधायच ॥ ७२ ॥ काम्यंकर्मप्रकर्तव्यमन्यथाभिभवोभवेत् ॥ शुभंवा
प्यशुभंवापिकाम्यंकर्मकरोतियः ॥ ७३ ॥ तस्यारित्वंव्रजेन्मंत्रोनतस्मात्तत्परोभवेत् ॥ विषयासक्त
चित्तानांसंतोषायप्रकाशितम् ॥ ७४ ॥ पूर्वाचार्योदितंकाम्यंकर्मनैतद्धितावहम् ॥ काम्यकर्मप्रस
क्तानांतावन्मात्रंभवेत्फलम् ॥ ७५ ॥

॥ ७६ ॥ निष्कामभजनेफलमाह ॥ वेदेति ॥ कर्मोपासनबोधनंकर्मकांडंज्योतिष्टोमेनस्वर्गकामोयजेतेत्यादि ॥ उपासनाकांडंसूर्योब्रह्मेत्युपासीतयोहवैज्येष्ठंचवेदेत्यादि ॥ इदंकांडद्वयंसाधनंज्ञानस्य ॥ तृतीयंज्ञानकांडमयमात्मा ब्रह्मेत्यादि तस्मात्साध्यंफलभूतम् ॥ तस्माज्ज्ञानप्राप्तयेप्रयतितव्यमित्यर्थः ॥ ७७ ॥ तत्रोपायमाह ॥ तस्मादिति ॥ निष्कारणवेदोक्ताचरणेदेवतोपासनेचांतःकरणशुद्धिस्ततोज्ञानप्राप्तिरित्यर्थः ॥ ७८ ॥ ज्ञानस्वरूपमाह ॥ कार्ये-

निष्कामंभजतांदेवमखिलाभीष्टसिद्धयः॥प्रतिमंत्रंसमुदितायेप्रयोगाःसुखाप्तये॥ तदाशक्तिंविहायैव
निष्कामोदेवतांभजेत् ॥ ७६ ॥ वेदेकांडत्रयंप्रोक्तंकर्मोपासनबोधनम्॥ साधनंकांडयुग्मोक्तंतृतीये
साध्यमीरितम् ॥ ७७ ॥ तस्माद्वेदोदितंकुर्य्यादुपासीतचदेवताः॥ शुद्धांतःकरणस्तेनलभतेज्ञानमु
त्तमम्॥७८॥कार्य्यकारणसंघातप्रविष्टश्चेतनात्मकः॥जीवोब्रह्मैवसंपूर्णमितिज्ञात्वाविमुच्यते॥७९॥
मनुष्यदेहंसंप्राप्यउपासीतचदेवताः॥योनमुच्येतसंसारान्महापापयुतोहिसः ॥ ८०॥

ति ॥ कार्याणिकारणानिभूतानिचतत्संघातःशरीरम् ॥ तच्चालकश्चेतनोजीवोवस्तुतोब्रह्मैवेति साक्षात्कारोज्ञानं तस्मान्मुक्तिः ॥ तत्त्वमसिश्वेतकेतोअहंब्रह्मास्मीत्यादिश्रुतेः॥७९॥ ज्ञानायाप्रयतमानंनिंदति॥ मनुष्येति॥ ८० ॥

फलितमाह ॥ आत्मज्ञानेति ॥ कामक्रोधलोभाअरयस्तेषांक्षयंकृत्वाकृतैःकर्मभिर्वैदिकैर्देवोपासनादिभिश्चांतः करणशुद्धिद्वाराज्ञानातिरित्यर्थः ॥ ८१ ॥ देवोपास्तिंकुर्वताभविष्यद्विचार्यप्रवर्तितव्यमित्याह ॥ चिकीर्षुरिति ॥

आत्मज्ञानाप्तयेतस्माद्यतितव्यंनरोत्तमैः॥कर्मभिर्देवसेवाभिःकामाद्यरिगणक्षयात् ॥ ८१ ॥ चिकीर्षुर्देवतोपास्तिमादौभाविविचारयेत्॥स्नानदानादिकंकृत्वास्मृत्वाहरिपदाम्बुजम् ॥ ८२ ॥ शयीत कुशशय्यायांप्रार्थयेद्वृषभध्वजम् ॥ भगवन्देवदेवेशशूलभृद्वृषवाहन॥८३॥इष्टानिष्टेसमाचक्ष्वमम सुप्तस्यशाश्वत ॥ नमोजायत्रिनेत्रायपिंगलायमहात्मने ॥ ८४॥वामायविश्वरूपायस्वप्नाधिपतये नमः॥स्वप्नेकथयमेतथ्यंसर्वकार्य्येष्वशेषतः॥८५॥ क्रियासिद्धिंविधास्यामित्वत्प्रसादान्महेश्वर ॥ एभिर्मंत्रैःशिवंप्रार्थ्यनिद्रांकुर्य्यान्निराकुलः ॥८६ ॥ स्वप्नंदृष्टंनिशिप्रातर्गुरवेविनिवेदयेत्॥तमंतरेण मन्त्रज्ञःस्वयंस्वप्नंविचारयेत् ॥ ८७ ॥

विचारप्रकारमाह ॥ स्नानसंध्यादिकंकृत्वेत्यादिना ॥ ८२ ॥ शिवप्रार्थनामंत्रमाह ॥ भगवन्निति ॥ ८३ ॥ ८४ ॥ ॥ ८५ ॥ ८६ ॥ नमंतरेणगुरुंविनाशुभाशुभंस्वप्नंस्वयमेवविचारयेत् ॥ ८७ ॥

तत्रशुभस्वप्नानाह ॥ लिंगमिति ॥ ८८ ॥ शिखीति ॥ मयूरयुक्तेहंसयुक्तेचक्रयुक्तेवारथेस्थितिः ॥ मोहनंसुरतम् ॥
निम्नगानदीमात्रम् ॥ ७९ ॥ स्यंदनोरथः ॥ निम्नगाद्यप्सरोंतानांदर्शनमेवशुभम् ॥ ९० ॥ हर्म्यादीनामारोहणम्
॥ ९१ ॥ मद्यमांसयोर्भक्षणम् ॥ विष्ठयाशरीरेलेपः ॥ रुधिरेणस्नानम् ॥ दधिभक्तभक्षः ॥ राज्यप्राप्तिः ॥ एतानि

लिंगंचन्द्रार्कयोर्बिंबंभारतींजाह्नवींगुरुम् ॥ रक्ताब्धितरणंयुद्धेजयोनलसमर्चनम् ॥ ८८ ॥ शिखिहंसरथां
गाढेरथेस्थानंचमोहनम् ॥ आरोहणंसारसस्यधरालाभश्चनिम्नगा ॥ ८९ ॥ प्रासादःस्यंदनःपद्मंछत्रंक
न्याद्रुमःफली ॥ नागोदीपोहयःपुष्पंवृषभोश्वश्चपर्वतः ॥ ९० ॥ सुराघटोग्रहास्तारानारीसूर्योदयोप्स
राः ॥ हर्म्यशैलविमानानामारोहोगगनेगमः ॥ ९१ ॥ मद्यमांसादनंविष्ठालेपोरुधिरसेचनम् ॥ दध्योद
नादनंराज्याभिषेकोगोवृषध्वजाः ॥ ९२ ॥ सिंहसिंहासनंशंखोवादित्ररोचनादधि ॥ चंदनंदर्पणश्चैषां
स्वप्नेसंदर्शनंशुभम् ॥ ९३ ॥ तैलाभ्यक्तःकृष्णवर्णोनग्नोनागतवायसौ ॥ शुष्ककंटकिवृक्षश्चचांडालो
दीर्घकंधरः ॥ ९४ ॥ प्रासादस्तलहीनश्चनैतेस्वप्नेशुभावहाः ॥ शांतिंकुर्वीतदुःस्वप्नेजपेन्मंत्रमनन्य
धीः ॥ ९५ ॥ अब्दत्रिकंजपंतस्यकुर्वतोविघ्नसंभवः ॥ विघ्नसंघमनाहत्यतदाजपपरोभवेत् ॥ ९६ ॥

शुभानि ॥ गवादीनांदर्शनमेवशुभम् ॥ ९२ ॥ ९३ ॥ अशुभस्वप्नानाह ॥ तैलेति ॥ तैलाभ्यक्तोनापुरुषः ॥ नग्ना
दीनांदर्शनमशुभम् ॥ ९४ ॥ ९५ ॥ ९६ ॥

मंत्रसिद्धेर्लक्षणमाह ॥ मनःप्रसादइति ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥ आत्मसाक्षात्कारपर्यंतमेवमंत्रोपास्तिरि त्याह ॥ लब्धज्ञानइति ॥ अहंब्रह्मेतिसाक्षात्कारोज्ञानमित्यर्थः ॥१०१॥ ग्रंथसमाप्तौमंगलमाचरति ॥ तंवंदेइति॥ ब्रह्मैवनानादेवतारूपेणजनैःसेव्यतइत्यर्थः ॥ 'योयोयांयांतनुंभक्तःश्रद्धयार्चितुमिच्छति ॥ तस्यतस्याचलांश्रद्धां

सिद्धौविश्वस्तचित्तःसंस्तुरीयेब्देससिद्धिभाक् ॥ मनःप्रसादःसंतोषःश्रवणंदुंदुभिध्वनेः॥९७॥गीत स्यतालशब्दस्यगंधर्वाणांसमीक्षणम्॥ स्वतेजसःसूर्य्यसाम्येक्षणंनिद्राक्षुधाजपः॥९८॥रम्यतारोग्य गांभीर्य्यमभावक्रोधलोभयोः॥एवमादीनिचिह्नानियदापश्यतिमंत्रवित् ॥ ९९ ॥ सिद्धिंमंत्रस्यजा नीयाद्देवतायाःप्रसन्नताम् ॥ ततोजपेधिकंयत्नंप्रकुर्य्याज्ज्ञानलब्धये॥ १०० ॥ लब्धज्ञानःकृतार्थः स्यात्संसारात्प्रतिमुच्यते॥ज्ञात्वात्मानंपरंब्रह्मवेदांतैःप्रतिपादितम् ॥ १०१ ॥ तंवंदेपरमात्मानंसर्व व्यापिनमीश्वरम्॥योनानादेवतारूपोनृणामिष्टंप्रयच्छति ॥ १०२ ॥

तामेवविदधाम्यहम् ॥ सतथाश्रद्धयायुक्तस्तस्याराधनमीहते ॥ लभतेचततःकामान्मयैवविहितान्हितान्' इतिभ गवद्वचनात् ॥ १०२ ॥

ग्रंथकरणेहेतुमाह ॥ विलोक्येति ॥ ब्राह्मणप्रार्थनमेवहेतुः ॥ १०३ ॥ बाणनेत्रमिताःपंचविंशतिः ॥ १०४ ॥ अनु
क्रमणीमाह ॥ भूतशुद्धिरिति॥लिपेर्मातृकायान्यसनंन्यासः ॥ आद्यप्रथमतरंगेएतदीरितम् ॥ १०५॥ द्वितीयोमां
द्वितीयतरंगे गणेशमंत्राः ॥ काल्यादितृतीये ॥ १०६ ॥ बंधनहारीति ॥ बंदीविशेषणम् ॥ छिन्नमस्तादिबंध्यंतं

विलोक्यनानातंत्राणिप्रार्थितोद्विजसत्तमैः॥स्वमतेरनुसारेणकृतोमंत्रमहोदधिः॥१०३॥ बाणनेत्रमि
तास्तस्मिंस्तरंगाःसंतिनिर्मिताः॥तत्रानुक्रमणींवक्ष्येमंत्रिणांसुखबुद्धये॥१०४ ॥भूतशुद्धिस्तथाप्राण
प्रतिष्ठान्यसनंलिपेः॥पुरश्चर्याहोमविधिस्तर्पणाद्याद्यईरितम्॥१०५॥द्वितीयेमांगणेशस्यमंत्राःस
म्यक्समीरिताः॥कालीकाल्यभिधानानांसुमुख्याश्चतृतीयके ॥१०६ ॥तारातुरीयेसंप्रोक्ताताराभेदा
स्तुपञ्चमे॥षष्ठेतरङ्गेगदिताछिन्नमस्ताशवर्य्यपि॥१०७॥ स्वयंवरामधुमतीप्रमदाचप्रमादया ॥ बंदी
बंधनहारीतिसप्तमेवटयक्षिणी॥१०८॥तस्याभेदाश्चवाराहीज्येष्ठाकर्णपिशाचिनी॥स्वप्नेश्वरीचमातं
गीबाणेशीमदनेश्वरी१०९॥अष्टमेविस्तरात्प्रोक्ताबालाबालाभिदाअपि॥नवमेत्वन्नपूर्णोक्तातद्भेदामो
हनाद्रिजा॥११०ज्येष्ठालक्ष्मीरत्रमंत्राउक्ताप्रत्यंगिरारिहा॥दशमेबगलावक्त्रावाराहीद्वितयंतथा १११

षष्ठे ॥ १०७ ॥ १०८ ॥ वाराहींवार्तालीवटयक्षिण्यादिकामेश्वर्यंतंसप्तमे ॥ १०९ ॥ मोहनाद्रिजामोहनगौरी ॥
॥ ११० ॥ अरिहाशत्रुनाशकःषोडशार्णः ॥बगलावक्त्राबगलामुखी ॥ १११ ॥

तदावृतिः श्रीविद्यायाआवरणपूजा ॥ ११२ ॥ मुनिर्वेदव्यासः ॥ ११३ ॥ ११४ ॥ चरणायुधः कुक्कुटमंत्रः ॥११५॥



श्रीविद्यैकादशेप्रोक्ताद्वादशेतुतदावृतिः॥त्रयोदशेतुहनुमान्विस्तरात्प्रतिपादितः॥११२॥चतुर्दशेनार
सिंहोगोपालोगरुडोपिच ॥अथपंचदशेसूर्योभौमोजीवःसितोमुनिः॥११३॥षोडशोमौमहामृत्युंज
योरुद्रोधनेश्वरः॥जाह्नवीमणिकर्णीचप्रोक्तासप्तदशेर्जुनः॥११४॥अष्टादशेकालरात्रिश्चंडिकायानवा
क्षरः ॥ एकोनविंशेचरणायुधःशास्त्रसमन्वितः ॥११५ ॥ पार्थिवार्चनकीनाशचित्रगुप्तासुरीविधिः
विंशेतरङ्गेयंत्राणिस्वर्णाकर्षणभैरवः ॥ ११६ ॥ स्नानादिरंतर्यागांतएकविंशेर्चनाविधिः॥द्वाविंशे
द्वयंसमारभ्यपूजनंतद्विदाअपि॥११७॥त्रयोविंशेतुदमनैःपवित्रैश्चसमर्चनम् ॥चतुर्विंशेचभेदेनमंत्रा
णांपरिशोधनम्॥ ११८ ॥तरंगेचरमेप्रोक्तंकर्मषट्कमनुक्रमात् ॥ एवंमंत्रोदधावस्मिन्पञ्चविंशतिरू
र्मयः॥११९ ॥ विशोधनीयाविद्वद्भिःक्षंतव्यंसाहसंमम ॥ चापलंनिजबालानांक्षमतेजनकोयथा ॥
॥१२०॥अहिच्छत्रद्विजच्छत्रवत्सगोत्रसमुद्भवः॥आसीद्रत्नाकरोनामविद्वान्ख्यातोधरातले ॥१२१ ॥२३५॥

कीनाशोयमः ११६ ॥ तद्विदाःपूजाभेदाः ॥ ११७ ॥ ११८ ॥ चरमेपंचविंशेतरंगे ॥ शांत्यादिकर्मषट्कमनुक्रम
णंचेति ॥ ११९ ॥ १२० ॥ स्ववंशमाह ॥ अहिच्छत्रेति ॥ १२१ ॥

॥ १२२ ॥ १२३ ॥ १२४ ॥ १२५ ॥ग्रंथांतेआशिषआह॥अविच्छिन्नेति॥ १२६ ॥ १२७ ॥ श्लोकत्रयेणदेवंप्रार्थयते॥
नरसिंहइति ॥ नृसिंहोमेमुदेहर्षायास्तु ॥ देवनामावरेणसमूहेननतः ॥ १२८ ॥ नृसिंहइति ॥ नृसिंहोसांसद्वा ऽ

तत्तनूजोरामभक्तःफनूभट्टाभिधोभवत्॥महीधरस्तदुत्पन्नःसंसारासारतांविदन् ॥१२२॥ निजदेशं
परित्यज्यगतोवाराणसींपुरीम् ॥ सेवमानोनरहरिंतत्रग्रंथमिमंव्यधात् ॥१२३॥ कल्याणाभिधपुत्रे
णतथान्यैर्द्विजसत्तमैः॥अनेकानागमग्रन्थान्विलोक्तिमुनीश्वरैः ॥ १२४ ॥एकग्रंथेस्थितंसर्वमंत्रा
णांसारमिच्छुभिः ॥ संप्रार्थितःस्वमत्यासौनाम्नामंत्रमहोदधिः ॥१२५ ॥ अविच्छिन्नान्वयाःसंतु
निजधर्मपरायणाः ॥मंगलानिप्रपश्यंतुसर्वेद्रोहपराङ्मुखाः ॥ १२६ ॥ हरिःकरोतुकल्याणंसर्वेषां
जगदीश्वरः॥प्रवर्तयंतित्रसंग्रंथंयावद्वेदोरविःशशी॥ १२७ ॥ नरसिंहोमहादेवोमहादेवार्तिनाशनः ॥
मुदेपरोमहालक्ष्म्यादेवावरनतोस्तुमे॥१२८ ॥ नृसिंहउत्संगसमुद्रजामांसमुद्रजद्वीपगृहेनिषण्णः ॥
समुद्रजोहीनमतिःसदाव्यात्समुद्रभक्ताखिलसिद्धिदायी ॥ १२९॥

व्यात् ॥ कीदृशः ॥ उत्संगेसमुद्रजालक्ष्मीर्यस्यसः ॥ समुद्रेजातंयच्छ्वेतद्वीपंतत्रयद्गृहंतत्रोपविष्टःसमुत्सहर्षः ॥
रजोहीनमतिर्विरजाः ॥ समुद्राअंजल्यादिमुद्राविदोयेभक्तास्तेषांसर्वसिद्धिदाता ॥ १२९ ॥

राजालक्ष्मीनृसिंहइति ॥ विभक्तिसत्तकेनहरिंस्तौति ॥ नृहरिणामहांतोदैत्याधीशाअहसतहताः ॥ हन्तेर्लुङिकर्मणिचिण्वदिड्भावेरूपम् ॥ श्रीनृसिंहाय श्रीनृसिंह भक्तम् अवरक्ष ॥ १३० ॥ देवान्स्मरति ॥ विश्वेशइति ॥ग्रंथनिष्पत्तिस्थानंकाशीस्थानम् ॥ १३१ ॥ ग्रंथनिर्मितिकालमाह ॥ अब्देविक्रमतइति ॥ बाणवेदनृपैर्मितेवर्षेपंचचत्वारिं

राजालक्ष्मीनृसिंहोजयतिसुखकरंश्रीनृसिंहंभजेयंदैत्याधीशामहांतोऽहसतनृहरिणाश्रीनृसिंहायनौमि ॥सेव्योलक्ष्मीनृसिंहादपरइहनहिश्रीनृसिंहस्यपादौसेवेलक्ष्मीनृसिंहेवसतुममनःश्रीनृसिंहावभक्तम् ॥ १३० ॥ विश्वेशोगिरिजाबिंदुमाधवोमणिकर्णिका ॥ भैरवोजाह्नवीदंडपाणिर्मेतन्वतांशिवम् ॥ १३१ ॥अब्देविक्रमतोजातेबाणवेदनृपैर्मिते॥ज्येष्ठाष्टम्यांशिवस्याग्रेपूर्णोमंत्रमहोदधिः॥१३२ ॥

इति श्रीमन्महीधरविरचितेमंत्रमहोदधितन्त्रेषट्कर्मादिनिरूपणंनामपंचविंशस्तरंगः ॥ २५ ॥

समाप्तोयंग्रंथः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

शदुत्तरषोडशशततमेविक्रमनृपाद्गतेसति शिवस्यरामेश्वरस्याग्रे मंत्रमहोदधिःसमाप्तिमगमत् ॥ १३२ ॥ इतिश्रीमन्महीधरविरचितायांमंत्रमहोदधिव्याख्यायांनौकायांषट्कर्मनिरूपणंनामपंचविंशस्तरंगः ॥२५॥ समाप्तोयंग्रंथः॥

श्रीगणेशायनमः ॥ ॥ श्रीगणेशंमहेशानंभारतीमीश्वरंशिवम् ॥ नत्वावक्ष्येमातृकाणांनिघण्टुंसु
लबुद्धये ॥ १ ॥ ( ॐ )--ध्रुवस्तारस्त्रिवृद्ब्रह्मवेदादिस्तारकोऽव्ययः ॥ प्रणवश्चत्रिमात्रोपि ॐकारोज्यो
तिरादितः ॥ २ ॥ ( अ )--श्रीकण्ठःकेशवश्चापिनिवृत्तिश्चस्वरादिकः ॥ आकारोमातृकाद्यश्चवता
इत्यभिधीयते ॥ ३ ॥ ( आ )--नारायणस्तथानन्तोमुखवृत्तोगुरुस्तथा ॥ विष्णुशय्यातथाशेषोदीर्घ
आकारएवच॥४॥ ( इ )--माधवस्सूक्ष्मसंज्ञश्चविद्यादक्षिणलोचनम् ॥ गन्धर्वःपांचजन्यश्चइकार
श्चमुकांकुरः ॥५ ॥ ( ई ) गोविन्दश्चत्रिमूर्तीशःशांतिःस्याद्वामलोचनम् ॥ नृसिंहास्त्रंतथामायाईका
रोपिसुरेश्वरः ॥६ ॥ ( उ )--अमरेशस्तथाविष्णुरिन्धिकाचगजांकुशः ॥ दक्षकर्णश्चविजयीउकारो
मन्मथाधिपः ॥ ७ ॥ ( ऊ )--अर्घीशोदीपिकावामश्रवणंमधुसूदनः ॥ इंद्रचापषण्मुखश्चऊकारोर
क्षणाधिपः ॥ ८ ॥ ( ऋ )--देविकादक्षनासाचभारभूतिस्त्रिविक्रमः ॥ देवमातारिपुघ्नश्चऋकारस्तप
नस्तथा ॥९ ॥ ( ॠ )--अतिथीशोवामनश्चमोचिकावामनासिका ॥ दैत्यमाताचदैवज्ञॠकारस्त्रि
पुरान्तकः ॥ १० ॥ ( ऌ )--श्रीधरश्चपरास्थाणुर्दक्षगण्डस्त्रिवेदकः ॥ एकांघ्रिर्वज्रदण्डश्चव्योमार्द्धर्ल

स्वरःस्मृतः ॥११॥ ( ऌ )--हृषीकेशोहरस्सूक्ष्मोवामगण्डःकुबेरदृक् ॥ अर्द्धचोंनीलवरणोॡका
रश्चत्रिकूटकः ॥ १२॥ ( ए )--झिंटीशःपद्मनाभश्चशक्तिस्सूक्ष्मास्मृताभगः ॥ ऊर्द्ध्वोष्ठगःकामरूपए
कारश्चत्रिकोणकः ॥१३॥ ( ऐ )--ज्ञानामृतोभौतिकश्चाधरोदामोदरस्तथा॥ वागीशोवर्मभयदऐकार
स्त्रिपुरस्तथा ॥ १४ ॥ ( ओ )--सद्योजातोवासुदेवऊर्ध्वदन्तस्त्रिमात्रकः ॥ आप्यायनीमन्त्रनाथ
ओकारोनागसंज्ञकः ॥१५॥ ( औ )--संकर्षणोनुग्रहेशोमुरारिर्व्यापिनीतथा ॥ अथोदंतगतोमायी
नृसिंहांगस्तथौरसः ॥१६॥ ( अं )--अक्रूरोव्योमरूपश्चप्रद्युम्नश्चन्द्रसंज्ञकः ॥ अनुस्वारस्तथाबिन्दु
रंकारश्चशिरोऽव्ययः ॥ १७॥ ( अः )--अनन्तश्चमहासेनोऽनिरुद्धोरसवर्णकः ॥ कन्यास्तननिभस्स
र्गोविसर्गश्चांतिमस्स्वरः ॥ १८ ॥ ( क )--क्रोधीशोधातृसंज्ञश्चक्रीसृष्टिश्चकरादिगः ॥ वर्गादिगः
पादवेषःककारःकामगःस्मृतः ॥१९॥ ( ख )--ऊर्ध्वर्द्धिगदिचण्डीशाःखेटोदक्षिणकूर्परः ॥ कैटभा
रिश्चमातंगःसंहारःखार्णकःस्मृतः ॥ २० ॥ ( ग )-स्मृतिःपंचांतकश्शार्ङ्गीगणेशोमणिबन्धगः ॥
गोमुखोगजकुंभश्चगकारःसिंहसंज्ञकः ॥ २१ ॥ ( घ )--खड्गीशिवोत्तमोमेधादक्षिणांगुलिमूलगः ॥

घनोघनस्त्वरश्चैवघकारोङादिमःस्मृतः ॥ २२ ॥ ( ङ )--संज्ञाकोरुद्रकान्तिश्चदक्षांगुल्यग्रसंस्थितः॥
क्लीबवक्रश्चभद्रेशोङकारश्चानुनासिकः ॥ २३ ॥ ( च )--हलीकूर्मेश्वरोलक्ष्मीर्वामबाह्वादिगस्तथा ॥
चित्रधारीचंचलश्चचकारस्संस्मृतोबुधैः ॥ २४ ॥ ( छ )-एकनेत्रश्चमुसलीवामकूर्परगोद्युतिः ॥
त्रिबिन्दुकस्तथाचारीछकारःश्लेष्मकाभिधः ॥ २५ ॥ ( ज )--स्थिराजपन्नौजपजश्शूलीचचतुरान
नः ॥ मणिबन्धगतोवामेजकारांजनकोत्तमः ॥ २६ ॥ ( झ )--स्थितिःपाशीतथाजेशोवामांगुलित
लस्थितः ॥ स्वस्तिकस्स्थाणुसंज्ञश्चझकारोजान्तसंज्ञकः ॥ २७ ॥ ( ञ )--वामांगुल्यग्रतःसिद्धिरं
कुशीसर्वसंज्ञकः ॥ मातंगोह्यनुगानश्चञकारश्चनिरंजनः ॥ २८ ॥ ( ट )--जरामुकुंदस्सोमेशोदक्षपा
दादिगोमुखः ॥ गजांकुशश्चबालेंदुस्मृताद्यष्टकस्स्मृतः ॥ २९ ॥ ( ठ )--लांगलीशोनन्दजश्चपालि
नीचकमण्डलुः॥ दक्षजानुगतस्स्थायीठकारस्स्थविरस्स्मृतः ॥ ३० ॥ ( ड )--नंदीशांतिर्दारकश्च
डामरोदक्षगुल्फगः ॥ व्याघ्रपादश्शुभांघ्रिश्चडकारस्तोमरोमतः ॥ ३१ ॥ ( ढ )--ऐश्वरीचार्द्धनारीशो

नरश्शार्ङ्गांतराकृतिः ॥ दक्षपादांगुलीमूलोढलोढक्कोढकारकः ॥३२॥ ( ण ) -उमाकांतोनरकजिद्व्रतिर्द
क्षपदाग्रगः ॥ निर्वाणस्त्रिगुणाकारस्त्रिरेखोणस्समीरितः ॥३३॥ ( त )--वामोरुमूलनिलयआषाढी
कामिकाहरिः ॥ तीव्रश्चतरलोनीलस्तकारःकीर्तितोबुधैः ॥३४॥ ( थ )--दण्डीशोवरदःकृष्णोवामजा
नुगतस्स्मरः ॥ शौरीचापिविशालाक्षस्थकारःपरिकीर्तितः ॥३५॥(द)--सत्योत्रीशोह्लादिनीचवामगुल्फ
गतस्तथा॥शूलीकुबेरोदाताचदकारोधादिमःस्मृतः ॥३६॥ (ध)--मीनेशस्सात्वतप्रीतिर्वामपादांगुली
गतः ॥ धनेशोधरणीशश्चधकारोदांतिमःस्मृतः ॥ ३७ ॥( न )-शौरीमेषश्चरीदीर्घावामपादाग्रसं
स्थितः ॥ नरोनदीनोनादीचनकारश्चानुनासिकः ॥ ३८ ॥ ( प )--तीक्ष्णाचलोहितश्शूरोदक्षपार्श्व
श्चपार्थिवः ॥ पद्मेशोनान्तिमःफादिःपकारोपिप्रकीर्तितः ॥३९ ॥ ( फ )-जनार्दनःशिखीरौद्रीवाम
पार्श्वकृतालयः ॥ फट्कारःप्रोच्यतेसद्भिःफकारःपांतिमःस्मृतः ॥ ४० ॥( ब )--छलगण्डोभूधरश्च
भयापृष्ठगतस्तथा॥सुरसोवज्रमुष्टिश्चबकारोभादिमोमतः ॥४१॥( भ ) विश्वमूर्तिर्द्विरण्डेशोनिद्राना
भिगतोपिच॥ भ्रुकुटीचभरद्वाजोभकारश्चजयापहः॥४२॥( म )--वैकुण्ठश्चमहाकालस्तन्द्रीजठरसंस्थि

तः॥मन्त्रेशोमण्डलोमानीविषस्मृर्योमकारकः ॥ ४३ ॥ (य)—क्षुधाबालाचवायुस्त्वग्घृतश्चपुरुषोत्त
मः ॥ यमुनोयाम्युनेयश्चयकारोमान्तिमःस्मृतः ॥ ४४ ॥ (र)—क्रोधिनीचभुजंगेशीज्वालीरुधिरपा
वकौ ॥ रोचिष्मान्दक्षिणांशश्चरुचिरोरेफईरितः ॥ ४५ ॥ (ल)—क्रियाककुद्गतोमांसंपिनाकीभूर्बला
नुजः ॥ लंपटःशक्रसंज्ञश्चवाद्योरांतोलकारकः॥ ४६ ॥ (व)—बालोवामांसनिलयोमेदोवारिदवा
रुणौ ॥ उत्कारीजलसंज्ञश्चखड्गीशोपिवकारकः ॥ ४७॥ (श)—मृत्युर्बर्कोवृषघ्नश्चहृदोदक्षकरस्थि
तः ॥ शंकुकर्णोस्थिसंज्ञश्चशकारोविद्धिरीरितः ॥ ४८ ॥ (ष)—वृषःश्वेतेश्वरःपीतामज्जाहृद्वामबा
हुगः ॥ षडाननःषकारश्चकीर्त्तितश्चबुधैःस्वरः॥ ४९ ॥ (स)—भृगुःश्वेतस्तथाहंसोहृदोदक्षिणपादगः ॥
समयस्सामगश्शुक्रस्संगतिस्सार्णकश्शशी ॥ ५० ॥ (ह)—नभोवराहोनकुलोहृदोवामपदस्थितः ॥
सदाशिवोरुणःप्राणोहकारश्चहयाननः ॥ ५१ ॥ (ळ)—हृदयान्नाभिसंस्थानशिवेशोविमलासितः ॥
लघुप्रयत्नश्चोपान्त्योळकारःप्रोच्यतेबुधैः ॥ ५२ ॥ (क्ष)—संवर्त्तकोनृसिंहश्चहृदयान्मुखसंस्थितः ॥
अनन्तःपरमात्माचवज्रकायोऽन्तिमाक्षरः ॥ ५३ ॥ इतिहादिमतेमातृकाकोशः समाप्तः ॥ ॥

इदं पुस्तकं मुम्बय्यां क्षेमराज-श्रीकृष्णदास-श्रेष्ठिना
स्वकीये "श्रीवेङ्कटेश्वर" (स्टीम्) मुद्रणागारे
मुद्रयित्वा प्रकाशितम्।

पौषे संवत् १९७९, शके १८४४.

यह पुस्तक खेमराज श्रीकृष्णदासने बम्बई खेतवाडी ७ वी गली खम्बाटा लेन निज "श्रीवेंकटेश्वर" स्टीम् प्रेसमें अपने लिये छापकर यहां प्रकाशित किया.

# क्रय्य पुस्तकें ( मन्त्रशास्त्रग्रन्थाः ) ।

| नाम | की. रु. आ. |
|---|---|
| शाक्तप्रमोद–दशमहाविद्याका पंचांग और पांच देवतोंका पंचांग, राजा देवनंदन संगृहीत इसमें दशमहाविद्या, कुमारी, दुर्गा, शिव, गणेश, सूर्य, विष्णु इन देवोंके पटल पद्धति कवच सहस्रनाम स्तवराज स्तोत्रादि पंचांग द्वादशांग हैं ... ... ... | ६–० |
| दुर्गोपासनाकल्पद्रुम–हरिकृष्णसंगृहीत. जिसमें दुर्गाजीका ६० प्रकरण कई एक शास्त्रसे उद्धृतकर अंतमें दुर्गापाठभी रखागयाहै ... | ५–० |
| श्रीतत्त्वनिधि–मैसूरराज्याधीश कृष्णराज संगृहीत. इसमें उपासक देवीचरित्र श्रीचक्रदेवता विष्णु शिव ब्रह्मा ग्रह वैष्णवनिधि शैवनिधि आगमकौतुक इत्यादि हैं ... | ४–० |
| महानिर्वाणतंत्र–भाषाटीकासमेत. इसमें तांत्रिक उपासना मूलमंत्र कर्मकांडादि आध्यात्मिकतावादि विषय हैं ... ... | ४–० |
| अनुष्ठानप्रकाश–( चतुर्थीलालकृत ) नैमित्तिक कर्ममें उपयोगी इसमें अकड मकडचक्र दीक्षा पुरश्चरण सूर्यचंद्रादि ग्रहणोंमें पुरश्चरण संकल्पादि संगृहीत हैं .... ... ... | ६–० |